

संस्कृतप्रतिभा     तृतीय उन्मेषः, प्रथमो विलासः
एप्रिल् १९६१
साहित्य-अकादेमी नवदेहली

## विषयानुक्रमणिका

अनुवादाः—

१८. गोदागाथाः—टि. एस्. श्रीनिवासाचार्यः

१९. अरविन्दभावनाः—श्रीजगन्नाथः

निकषोपलः (पुस्तकविमर्शः)—

शिवानन्दविलासः (एम्. रामकृष्णभट्टः), स्वप्नविज्ञानम्, त्रिपुरदाहकथा (रामस्वरूपशास्त्री), कचदेवयानीयम् (सन्निधानं सूर्यनारायणशास्त्री), श्रीशुक्लपक्षः (मुदिगोण्ड ज्वालापतिलिङ्गशास्त्री), भक्तरसायनम् (के. अच्युतप्पोदुवाळ्), महाप्रकाशलहरीस्तोत्रम्, श्रीसुन्दरनाथस्तोत्रनक्षत्रमाला च (कडव-शुम्भुशर्मा), गान्धिगीता (अ. वि. काणे), आत्मकलाप्रदीपः (शृङ्गारसुब्रह्मण्यशास्त्री), संस्कृतगौरवगानम् (वासुदेवद्विवेदी), सावित्रीचरितम् तथा कूपमण्डूकवृत्तिः (ओड्लमन आत्मारामशास्त्री), रङ्गहृदयम् सद्बोधशतकम् (पाडुरङ्गावधूतः), श्रीरङ्गगुणगरिमा (प्रा. डा. आ. जानी), अवधूतप्रशस्तिः (भवानीशङ्करशास्त्री), रङ्गप्रशस्तिः (का. श. मं. अग्निहोत्री), भारतहृदयारविन्दम्, महाप्रभुहरिदासम्, महिममयभारतम् (डा. यतीन्द्रविमलचौधुरी), कुसुमलक्ष्मीः (आ. र. रत्नपारखी), कौमुदीकथाकल्लोलिनी (रामशरणशास्त्री), वैराग्यमन्दाकिनी (श्रीमङ्गलार्णव[प्रसिद्धकाशिकानन्द]यतिः), तिरूप्पावै-श्लोकाः, तिरुक्कुरळ्-संस्कृतानुवादः (एस्. एन्. श्रीरामदेशिकः), कालिदासचरितम् (श्री. वेलणकरः), श्रीलक्ष्मणाभ्युदयम्, श्रीसुशीलोद्वाहमङ्गलम्, श्रीलाक्ष्मणीप्रसस्तिः, श्रीमोहनाभिनन्दनम् (गणेशरामशर्मा शकुनिः), प्रौढरचनानुवादकौमुदी (डा.कपिलदेवद्विवेदी), लक्ष्मीस्वयंवरः, 'आषाढस्य प्रथमदिवसे', महाश्वेता (डा. वे. राघवः), पुनरुन्मेषः (डा. वे. राघवः).

लेखकपरिचयः

'संस्कृतप्रतिभा'—सम्पादकः (तुरीयावरणपृष्ठे)

# सम्पादकीयम् —

तृतीयमुन्मेषं किञ्चिदलसं विदधती प्रतिभा सहृदयैः सदयग्रहमर्हति। मुद्रानिलयं नूतनं गवेषमाणा मन्थरगतिर्यत्सा व्यलम्बत, तत उन्मनायिता रसरभसान्तःकरणाः सहृदया अद्य तत्सम्प्राप्त्या परं प्रहृष्येयुः। इदमेव च तस्याः समागच्छन्त्या आद्यं प्रणयवचनम् यदितः परं यथासमयमात्मानमुपस्थापयितुं प्रयत इति।

* * *

केन्द्रीयसंस्कृतसमित्याः संस्कृतकार्योपकारविधयः पूर्वतोऽपि अधिकतया बहुतरमुखं च सम्प्रति प्रवर्तन्ते। द्वितीयपञ्चवार्षिकयोजनायां संस्कृताभिवृद्धये ५५ लक्षमितं धनं निर्दिष्टं वर्तते। संस्कृतायोगनिवेदनानुसारं यद् दक्षिणभारते किमपि केन्द्रीयं संस्कृतविद्यास्थानं स्थापयितव्यमित्यङ्गीकृतं तन्नचिरात् अतीते मार्गशीर्षमासे तिरुप्पतिक्षेत्र उपक्रान्तम्; उपक्रममङ्गलकार्यं च उपराष्ट्रपतिभिः डा० सर्वेपल्लि-राधाकृष्णमहाशयैः निर्वर्तितम्। संस्कृतप्रतिभायाः प्रतिसञ्चिकं च शतं पुस्तकानि केन्द्रसंस्कृतसमित्या आदास्यन्ते, तानि च संस्कृतपाठशाला-दिसंस्थाभ्यः प्रेषयिष्यन्त इति निरणायि; एवं च इतोऽप्यधिका विद्वांसः रसिकाः छात्राश्च तत्र तत्र देशे प्रतिभामनुभवितुमवकाशं लप्स्यन्त इति सम्पादकानामस्माकं प्रकाशयित्र्याः साहित्य-अकादेमीपरिषदश्च जायते कोऽपि आश्वासो मनसः।

स्वातन्त्र्यदिनोत्सवे त्रयः संस्कृतपण्डिताः जीववृत्तिसत्कारेण राष्ट्रपतिना समादृताः, तथा गणराज्यदिनोत्सवे द्वौ संस्कृतप्राध्यापकौ पद्म-भूषणबिरुदेन च राष्ट्रपतिना संमानितौ।

* * *

श्रीमद्भिः कैलासनाथखाड्जुमहाशयैः 'भाषा राष्ट्रैक्यं च' इति विषयमधिकृत्य पत्रिकासु स्वाशयं प्रकाशितवद्भिरुक्तम् —

"ऐक्यभावनोत्पादनार्थमेका निखिलराष्ट्रसाधारणी भाषा आवश्यिका इति सर्वोऽभिजानाति । तादृशी प्रागेवासीदस्माकम्, परं तु नो दौर्भाग्यात् सास्माभिः विस्मृतप्राया । संस्कृतमेष निर्दिशामि, या भाषा प्राचीने भारते सर्वत्रैव भाषिता अवगता चासीत् । शङ्कराचार्यः कन्याकुमारीतः श्रीनगर-अमरनाथपर्यन्तं जगाम ; संस्कृतमेव सर्वत्र बभाषे, सर्वत्रावगतश्च । जगति वर्तमानं सर्वमपि विषयं प्रतिपादयत् विपुलं वाङ्मयं संस्कृते वर्तते । * *

संस्कृतं तु नः प्रान्तीयभाषासु बह्वीनां माता ; संस्कृतप्रोत्साहनं च राष्ट्रीयामैक्यभावनामस्माकं द्रढीकरिष्यति ।"

* * *

कल्कत्तानगरे वृत्ते २६-तमे अखिलभारतीयसाहित्यसंमेलनस्य अधिवेशने राष्ट्रपतिभिः संस्कृतमधिकृत्यैवं स्वीय उपक्रमभाषणे प्रपञ्चितम्—

"संस्कृतं नाम न केवला कापि भाषा; तदीयं साहित्यं च न केवलं संस्कृतविदुषां तत्प्रबन्धॄणां च कृतीनां समुच्चयः । संस्कृतस्य यथार्थं प्राधान्यमस्मिन् तत्त्वे वर्तते, यत् संस्कृतद्वारैव भारतस्य आत्मा साक्षात्कर्तुं शक्यः ।

यः कोऽपि बोद्धुं वाञ्छति चेत् भारतीयां जीवयात्रापद्धतिम्, अस्माकं मतानुष्ठानानां भारतीयबुद्धिवृत्तिप्रकारस्य च मौलिकं प्रभवम्, तेन संस्कृत-साहित्याभिमुखमेव भवितव्यं भवति । तथा हि—संस्कृतभाषायाश्चरित्रं नाम अस्मदीयजनसमुदायस्यैव बुद्धिविकासस्य अस्मदीयसामाजिकव्यवहार-विकासस्य च चरित्रं भवति । प्रायः सर्वासां भारतीयानां भाषाणां मूलं संस्कृते वर्तते ।

कदाचित् भारतीया भावाः, भारतीया संस्कृतिश्च आशियाखण्डे सर्वेष्वपि देशेषु व्याप्ता आसन् ; सर्वोऽपि भारतीयो बुद्धिव्यापारः संस्कृत एव यत आसीत्, ततो हेतोः संस्कृतज्ञानमपि सर्वेष्वपि आशियाखण्डीयदेशान्तरेषु

प्रसृतमासीत् । बह्वीः शताब्दीः संस्कृतस्याध्ययनं सार्वराष्ट्रिकभाषारीत्या उपात्तमासीत् । एवमाशियाखण्डस्यैव चरित्रेण स्यूतमासीत् संस्कृतम् । दक्षिण-आशियादेशेषु, मध्य-आशिया-देशेषु, तथा नेपाले आफ्गानिस्थाने च प्रायः सर्वेषु विश्वविद्यालयेषु संस्कृताध्ययनाध्यापनयोरद्य संविधानं वर्तत इति सन्तोषावहमेतत् ।

परं तु मम मनीषा— एतस्मिन्नेव तत्त्वे संस्कृतभाषायाः परमं तात्पर्यवत्त्वं वर्तते, यत् बहुवर्षसाहस्रमस्मिन् विशाले देशे भिन्ना भाषा भाषमाणाः, भिन्नांश्च जीवयात्राप्रकारानाश्रयमाणा ये जना वसन्ति स्म, तान् सर्वानपि एतद्देशीयान् संस्कारद्वारा एकीकृत्य बन्धुमेषा संस्कृतभाषा प्रभवति स्म । देशेऽस्मिन् तदा तदा सामाजिकशरीरे परिवर्ता अभूवन्, जनानां दृष्टिप्रकारेऽपि भेदा अजायन्त, किन्तु न केनापि विपर्यासेन ते बन्धाः श्लथीकर्तुं शक्यन्ते, यद्बन्धद्वारा संस्कृतमस्मानैक्येन धारयद् आसीत् ।

संस्कृतमतिसमृद्धा भाषा, अपरिमितशब्दसम्पन्ना चेति सर्वसम्प्रतिपन्नमेतत् । व्याकरणनियमानुसारं तत्र नूतनाः शब्दाः सुलभतया निर्मातुं शक्यन्ते ।

मुख्यः प्रश्नस्त्वेषः—कथं नामायमनर्घः संस्कृतं नाम निधिः संरक्ष्येतेति पर्यवेक्षणमवश्यं कर्तव्यं भवति । किं च जनसामान्यस्येयं सुलभगोचरतां नेया । बहुकालमेतां भाषां तत्साहित्यं च अस्मिन् देशे प्रतिप्रान्तं ये भारतीयाः पण्डिता विज्ञाश्च संरक्षितुं प्रायतन्त, तेभ्यः देशेनानेन कृतज्ञेन भाव्यम् ।''

* * *

वाराणसीहिन्दूविश्वविद्यालये निर्वाहकसमित्येत्थं व्यवसितम्—यत् इतः परं विश्वविद्यालयसमावर्तनसमारोहे सर्वं कार्यजातं संस्कृतेनैव करिष्यत इति । अमुं च वृत्तान्तं श्रुत्वा संस्कृतमयूराणां मेघस्तनितमिव मनो नूनं नर्तिष्यति । पुण्यपत्तनविश्वविद्यालये राष्ट्रप्रथममन्त्री जवाहर्लाल् नेहरूमहाशयः विशिष्ट-

समावर्तनसमारोहमुपकल्प्य डाक्टर्-बिरुदसमर्पणेन संमानितः । तदानीं बिरुदवितरणाङ्गतया यन्नियमानुसारं वाचनीयं तत्सर्वं संस्कृतेन विहितम् । सन्दर्भौचितीप्रेरितेन च नेहरूमहाशयेन स्वीये प्रत्युत्तरभाषणे संस्कृतभाषाया गौरवमत्रश्याध्येयत्वं च सनिर्भरमुक्तम् । एतादृशा वाग्बिन्दवो नेहरूमेघतस्तदा तदा पतन्तः संस्कृतचातकानां जीवनायन्ते ।

*　　　　*　　　　*

अखिलभारतीय-संस्कृतसाहित्य-संमेलनस्य कल्कत्ताधिवेशनमुद्घाटयद्भिः राष्ट्रपतिभिः संस्कृताभिवर्धनाय केन्द्रीयाधिकारिभिः कैश्चित् प्रान्तीयाधिकारिभिश्च यद्यत् क्रियते, तत्सूचितम् । अस्माभिश्च पूर्वम् एवंजातीयकमधिकारिणां संस्कृतानुरागसूचकं तैः क्रियमाणं कार्यजातं किमपि उद्दिष्टम् । केन्द्रसंस्कृतसमित्या महाविद्यालयेषु उच्चतरोच्चतमतलेषु पाण्डित्यपोषणाय शास्त्राध्ययनाय विमर्शविस्ताराय ग्रन्थप्रकाशनाय च य उपकारः वितीर्यते, स सर्वः वृक्षस्य पत्रपुष्पफलानां जलसेकतुल्यं भवति । मूले हि वृक्षस्य जीवधातुर्विद्यते, तत्र हि जलसेकोऽपेक्ष्यते । मूलं चास्य प्रारम्भपाठशालासु उच्चतरपाठशालासु (प्रैमरि, सेकण्डरि है स्कूल्स्) च योऽवकाशो दीयते बालिकाबालकानां संस्कृताध्ययनाय स एव भवति । सोऽद्य न केवलं क्रमशो ह्रासमनुभवति, किन्तु केषुचित् प्रान्तेषु मूलेकुठारायितैर्विधिभिः पाठ्यपरीक्ष्यभाषानियमाद् बहिष्कृतं संस्कृतम् । 'भाषात्रयनियमः' (त्री लाङ्गुएज् फार्मुला) इति यदूरीकृतं सेकण्डरिविद्याक्रमोपदेष्ट्र्या केन्द्रसमित्या, तं नियममनुष्ठानक्रमे आनयन्तः प्रान्तीयशिक्षाविभागाधिकारिणः मातृभाषायाम्, आङ्गलभाषायाम्, हिन्द्यां च आग्रहं दर्शयन्तः संस्कृतं निरवकाशमेव कृतवन्तः । उच्चतरपाठशालाभ्यः संस्कृताध्यापकाः निवृत्तिकीकृत्य बहिष्क्रियन्ते इति अतिशोचनीया अवस्था 'श्वः श्वः पापीयदिवसा' इति व्यसोक्तरीत्या एधमानकष्टा दरीदृश्यते । अत्र यत्किमपि न कार्यते चेत्, अन्यत् सर्वं केन्द्राधिकारिभिः संस्कृतकृते क्रियमाणं नचिरात् स्वयमेवानपेक्षितं विलीयेत । भाषात्रयनियमे संस्कृतस्य यथा अनपायं सर्वप्रान्तीयस्थि-

त्यविरुद्धं तदभ्युपगतं च स्थानं किमपि भवेत्, तथा केन्द्रीयविद्यामन्त्रिणा केन्द्रीय 'सेकण्डरि' विद्याक्रमोपदेशसमित्या च निर्णयः स्वीकार्यः। तादृशाः मातृ-राष्ट्र-आङ्ग्ल-भाषात्रयाप्रतिकूलाः संस्कृतानुकूलाः, अन्तर्भावितसंस्कृताः कतिचन प्रकाराः संस्कृतायोगेन निवेदिता वर्तन्ते। अन्यथा दत्तं तिलोदकं संस्कृतमातुरिति निश्चप्रचमेव। गणराज्यदिने आकाशवाण्यां मद्रकेन्द्रात् 'संस्कृतम् राष्ट्रैक्यभावनापरिपोषश्च' इत्येतमधिकृत्य विषयं भाषमाणाः केन्द्र-संस्कृतसमित्यध्यक्षाः पतञ्जलिशास्त्रिणः भूतपूर्वाः राष्ट्रप्राड्विवाकसभाप्रधाना-ध्यक्षाः अवोचन्—'भारतीयराष्ट्रसंविधाने (कान्स्टिट्यूषन्) शिक्षा (एडुकेषन्) नाम विषयः प्रान्तीयपट्टिकायां (स्टेट् लिस्ट्) दृश्यते; सा केन्द्रीयप्रान्तीयोभयविषयपट्टिकायां (कन्करण्ट् लिस्ट्) निवेशनीया; तदर्थमपेक्षितः अस्मत्संविधाननियमानां परिष्कारश्च लोकसभायामासूत्रयितव्यः' इति।

अन्यथा केन्द्रस्य संस्कृतश्रद्धा निस्सत्त्वा छायाप्राया स्यात्, केन्द्र-संस्कृतसमित्याश्च सत्ताया एव आवश्यकता न स्यात्।

# अक्षरमाला

## ब्रह्मर्षिः दैवरातिः

ओमिति योऽसौ स्वरति बलीयः प्राणो बहिरदसाऽक्षिणि मेयः ।
ओमित्ययमहमाऽन्तर्ज्ञेयः सोऽसावयमिति तपसा ध्येयः ॥ १ ॥

अः प्रथमाक्षरमात्राविदितः सार्वत्रिक आदित्यवदुदितः ।
अमिदं ध्यात्वा ऋग्भिर्लोके स्वनुभवति हि महिमानं प्रथमे ॥ २ ॥

आत्मरसात् स्वयमाश्रितविदुषः स्वात्मनि समभिनिवेशयिता यः ।
आनन्दं तं परमिह लब्ध्वा परमभयं प्राप्नोति विदित्वा ॥ ३ ॥

इन्ध इति प्रमितोऽयं पुरुषो योऽसौ पुनरक्षिणि विनिविष्टः ।
[1]ईञित्याहुरदर्शमितीदं तमिमं सन्तमिदं द्र-मिहेन्द्रम् ॥ ४ ॥

ईष्टे जगतामिति स पुराणो भूतानामिह पर ईशानः ।
ईशानी सा परमा शक्तिर्या परमस्य प्रथमा दृष्टिः ॥ ५ ॥

उमया सहितं तं परमेशं ध्यात्वा मृत्युं तरति स शोकम् ।
अविति ध्यात्वा मात्राद्वितयं यजुषा सोमं जयति सलोकम् ॥ ६ ॥

ऊर्ध्वमधस्ततममृतं पुरतो दक्षिणतश्चोत्तरतः परितः ।
ऊर्जमुपैति हि हृदि भूमानं परमं तमपि च दृष्ट्वाऽऽत्मानम् ॥ ७ ॥

ऋतमिति यत्परमं पदमुक्तं तदिह महाव्रतमिति परिगीतम् ।
ऋच्छति तेन च परममृतत्वं हित्वा मानुष्यकमनृतत्वम् ॥ ८ ॥

ॠकारेऽक्षरशक्त्या सहितौ मोचिकयाऽतिथिवामनदेवौ ।
ॠकारोऽक्षरदैवतविद्भिर्विन्यस्यो नसि वामे सद्भिः ॥ ९ ॥

ऌतिवर्णे नवमे सह शक्त्या स्थाणुश्रीधरदेवौ परया ।
ऌत इह दक्षिणगण्डे विदितो विन्यासः खलु शाक्तागमतः ॥ १० ॥

---

1. ईञ् इतीदं "इदमदर्शमितीऽ३" (ऐतरेय उप०) इत्यस्यानुकरणम् ।

ऌकारे हरिरुदितो दशमः सूक्ष्मा शक्तिर्हर इह परमः ।
ऌकारोऽक्षरतत्त्वसुवेद्यो वामे गण्डे खलु विन्यस्यः ॥ ११ ॥

एनोभिर्निखिलं परितप्तं दृष्ट्वा परितः परमाकुलितम् ।
एजन्तं परिगृह्य हि लोकं परदेवो वः शमयतु शोकम् ॥ १२ ॥

ऐमिति निगमचतुष्टयमूलां वाचं देवीमाहुरमूलाम् ।
ऐमिति वाचकबीजकजपतः सद्यो वाग्मी भवति स युक्तः ॥ १३ ॥

ओमिति यदिदं खमिति निगदितं परममनन्तं ब्रह्म तदुदितम् ।
ओमित्येतेन हि समुपास्यं तदिदं प्रणवस्येह रहस्यम् ॥ १४ ॥

औपनिषदपरतत्त्वमिहेदं वेद्यं वस्त्वखिलैः परमेकम् ।
औदासीन्यं बहिरिह विषयेष्वौदार्यं जगतामुपकृतये ॥ १५ ॥

अन्तर्बहिरपि समभिनिगूढं रूपं चित्परमस्य तदेकम् ।
अन्तरिहैव हि रहसि गुहायामन्तर्वेदद्दशैव सुगम्यम् ॥ १६ ॥

अस्तीति श्रुतमिदमिति कैश्चिद् युक्तं, नास्तीत्येव कुतश्चित् ।
अस्तीत्येव तदुपलब्धव्यं तदिदं त्वपरोक्षादनुभाव्यम् ॥ १७ ॥

कः प्रजनानां पतिरिह पूर्णः प्राणयिता हृदि यः पवमानः ।
कमिति श्रुतमिह तदु समुपास्यं यदिदमुपस्थितमन्तर्हृदयम् ॥ १८ ॥

खमिति श्रुतमपि यद्वा प्रथितं कमिह तदिष्टं कमपि खमुदितम् ।
खमिदं संस्थितमन्तर्हृदये तत्र च सर्वं तद्धृदयं खे ॥ १९ ॥

गः प्रथमं रूपं तदकारो मध्यममन्त्यं तदनुस्वारः ।
गमिति हि गणपतिरिह सह नमसा रहसि चतुर्थ्यां हृदि समुपास्यः ॥ २० ॥

घनगर्जितमिव यच्छ्रुतमभितो मूर्धन्यनुहतमिह गतमन्तः ।
घटयति गीतमिहैव हि चेतः परमिदमनुजानीहि सुचेतः ॥ २१ ॥

ङादय इह खलु यमनुस्वरिताः पवनोऽयं नसि पाप्मनि विद्धः ।
नासिक्यं परिहीय तदन्यं समुपासीत परं हृदि मुख्यम् ॥ २२ ॥
चत्वारि प्रमितानि हि वाचः प्रणवव्याहृतिकानि पदानि ।
चातुर्थ्यं तु वदन्ति मनुष्यास्त्रीणि गुहायां विदुरिह मुनयः ॥ २३ ॥
छन्दाँसि हि यस्मिन् परितस्थुर्यत्परमं पदमक्षरमूचुः ।
छन्दोगानां तदिहोद्गीथः सोऽयमसौ स्वर इति समुपास्यः ॥ २४ ॥
जपनीयौ सस्वरमुपदिष्टौ स्वरतो योऽसावयमप्युदितौ ।
जानातीत्यनु यत्परिगीतं तत्परमं विदुरिममुद्गीथम् ॥ २५ ॥
झञ्झञ्झणदिति सुस्वरसहितस्तार्तीये सवने तु विशिष्टः ।
झङ्कारोऽयं शब्द उपास्यश्चञ्चलचेतःस्थितये हृद्यः ॥ २६ ॥
ञमङणनानां यस्त्विह निलयः श्राम्यति तत्र चरन्ननिलो यः ।
नासिक्योऽयं सहसा हेयः परमस्त्वन्तर्हृदि समुपेयः ॥ २७ ॥
टङ्कयतीत्ययमिह निजयोगाद्विषयस्तत्र विवेकवियोगात् ।
टङ्कारं परिजनयति सहसा तस्मान्नादरणीयो मनसा ॥ २८ ॥
[1]ठद्वयमन्ते मुनयो ब्रुवते यस्मै कर्म समर्पयितुं ते ।
ठाकारं तदिदं परिवृणुते स्वयमप्यन्तः स्थितमभिमनुते ॥ २९ ॥
डयते यस्त्विह मध्यमयोर्ध्वं सृत्या मूर्धनि सहसाबद्धः ।
डाययति च तं यः खलु बन्धः सोऽयं ह्युड्डीयानकबन्धः ॥ ३० ॥
ढक्कां नटराजः किल तारं यद्धि ननाद चतुर्दशवारम् ।
ढक्कानादमयं श्रुतिजालं वर्णसमूहमिदं तदु निखिलम् ॥ ३१ ॥
णदिधातौ प्रतितिष्ठति योऽर्थो यस्मिन् पुनरभितिष्ठति सोऽर्थः ।
नाम्नो रूपात् स च परमोऽर्थस्तस्य हि विज्ञाने चरमोऽर्थः ॥ ३२ ॥

---

1. ठद्वयं स्वाहाकार इति शाक्तागमः ।

तपसा ज्ञेयस्तप एवासौ तेजोमय आनन्दमयोऽयम् ।
तत्त्वं त्वनयोः परमैकत्वं व्यष्टिसमष्ट्यविभेदगृहीतम् ॥ ३३ ॥

थमिति हि गीतं यदु छन्दोगैरन्नं पृथिवी चाग्निर्ऋगिति ।
थन्त्विदमुद्गीः पूर्वमुपास्यं कामसमृद्ध्यै स्वात्मन उदितम् ॥ ३४ ॥

दद्भिश्च दतामस्पर्शनतो रसनायास्तालुनियोजनतः ।
दान्तं तं भुवि सुदृढासनतो विदुरनिशं नयनोन्मीलनतः ॥ ३५ ॥

धारणया हृदये स्वनुरक्तो ध्यायति यः परमात्मनि युक्तः ।
धयति निजं सुखरसमभितृप्तो विषये बहिरिह स च सुविरक्तः ॥३६॥

नयनं नयने यदि वा स्मरणे संस्थितमिह गगनेऽन्तःकरणे ।
नन्दति तस्मादयमीक्षणतः सह मनसैव हि हृदि निश्चलितः ॥ ३७ ॥

पवते पतिरिह यः सजनानां ब्रह्मेति श्रुतिसङ्गिरमाणः ।
पञ्चकमपि तं म्रियते परितो देवानामिति परिमर उदितः ॥ ३८ ॥

फलमपि परिमरवेत्तारं तं सपदि सपत्नः परितो म्रियते ।
फलति महीयं विगतसपत्ना मानुषमिह सुखमनुभावयितुम् ॥ ३९ ॥

बृहतेरर्थानामनुगमतः कारणतो जगतश्चागमतः ।
ब्रह्म हि सकलङ्कं समशक्तं नित्यविशुद्धसुबुद्धविमुक्तम् ॥ ४० ॥

भवति हि यस्मिन् भवतेरर्थो बोधयति हि स च यं परमर्थम् ।
भाभिर्वृणुते दशभिर्निखिलं सोऽयं सहसा स्वयमिदमचलम् ॥ ४१ ॥

मस्तु तृतीया मात्रा प्रणवे तस्य च वाच्यः परमः पुरुषः ।
मात्रात्रितयेनैव हि सोऽयं पापविमुक्त्यै हृदि समुपास्यः ॥ ४२ ॥

यस्मात् सर्वमिदं किल जातं येन पुनः परिजीवति सततम् ।
यत्पुनरभिसंविशति हि नियतं सच्चित्सुखमिह तद्बृहदुदितम् ॥ ४३ ॥

रसयति योऽयं परमिह योगादानन्दः स च परमो निगमात् ।
रस इह यस्य यदर्थमभीष्टः सोऽयमहं रसमय उपदिष्टः ॥ ४४ ॥
लक्षणयैव हि जन्मादिकया श्रुत्या निजभावनियामिकया ।
लक्ष्यं तच्छ्रुतमनुभूतिकया ब्रह्म परं विदुरहमहमिकया ॥ ४५ ॥
वक्तुं श्रुतिरपि नैव तमर्थं याथातथ्यं भवति समर्थम् ।
वस्तु परं करणैस्तदगम्यं तपसैव हि केवलमवगम्यम् ॥ ४६ ॥
शक्यं न च मनसा ह्यनुमातुं युक्तिशतैरपि वा परिमातुम् ।
शरणं ब्रह्मणि निष्ठं गत्वा बन्धविमुक्तो भवति विदित्वा ॥ ४७ ॥
षष्टिं च तथा त्रीणि शतानि यस्य समासेनाहुरहानि ।
षट् च ऋतून् वै द्वादश मासानयने च चतुर्विंशतिपक्षान् ॥ ४८ ॥
सप्तशतानि च विंशतिमथवा यस्याहोरात्राणि विभागात् ।
सँवत्सरमिह तं प्रजनानां पतिमाहुरिमं प्रजनयितारम् ॥ ४९ ॥
हँसोऽयं षट्शतमिह वारं चैकाधिकविंशतिकसहस्रम् ।
हँसँ हृदये परमात्मानं रात्रिन्दिवमनुजपति प्राणम् ॥ ५० ॥
[1]ळसति प्रतिपदमात्मनिवृत्तिर्गायत्रीमजपामनुजपतः ।
ळष्यति तस्य हृदन्तर्ज्योतिस्तदिदं मनुजस्येह विभूतिः ॥ ५१ ॥
क्षरमिह जगदिदमिति परिदृश्यं यस्मिन् कल्पितमखिलमसत्यम् ।
क्षरदिदमनु न क्षरति यदन्ते तत्परमक्षरमुक्तमिदन्ते ॥ ५२ ॥
ज्ञप्तिरियं जननीव जनानां ज्ञापयतादिति कृतिमिह विहिताम् ।
ज्ञात्वा तत्त्वं जगति जनास्ते जन्मजरामरणैर्न रमन्ते ॥ ५३ ॥
ओमथ तत्सदिति प्रथितानि प्राणभृतामिह माङ्गलिकानि ।
ओमिति यस्य हि वाचकमुदितं तत्परमं सद्ब्रह्म निगदितम् ॥ ५४ ॥
अद्वैतात्मरसं श्रुतिमूला स्रावयतादियमक्षरमाला ।
आत्मरसं भजतामनुकूला दैवरातहृदयान्तरलीला ॥ ५५ ॥

---

1. अत्र ळळयोरभेदेन ळकारे ळः प्रयुक्तः ।

तपसा ज्ञेयस्तप एवासौ तेजोमय आनन्दमयोऽयम ।
तत्त्वं त्वनयोः परमैकत्वं व्यष्टिसमष्ट्यविभेदगृहीतम् ॥ ३३ ॥

थमिति हि गीतं यदु छन्दोगैरन्नं पृथिवी चाग्निर्ऋगिति ।
थन्त्विदमुद्गीः पूर्वमुपास्यं कामसमृद्ध्यै स्वात्मन उदितम् ॥ ३४ ॥

दद्भिश्च दतामस्पर्शनतो रसनायास्तालुनियोजनतः ।
दान्तं तं भुवि सुदृढासनतो विदुरनिशं नयनोन्मीलनतः ॥ ३५ ॥

धारणया हृदये स्वनुरक्तो ध्यायति यः परमात्मनि युक्तः ।
धयति निजं सुखरसमभितृप्तो विषये बहिरिह स च सुविरक्तः ॥३६॥

नयनं नयने यदि वा स्मरणे संस्थितमिह गगनेऽन्तःकरणे ।
नन्दति तस्मादयमीक्षणतः सह मनसैव हि हृदि निश्चलितः ॥ ३७ ॥

पवते पतिरिह यः सजनानां ब्रह्मेति श्रुतिसङ्गिरमाणः ।
पञ्चकमपि तं म्रियते परितो देवानामिति परिमर उदितः ॥ ३८ ॥

फलमपि परिमरवेत्तारं तं सपदि सपत्नः परितो म्रियते ।
फलति महीयं विगतसपत्ना मानुषमिह सुखमनुभावयितुम् ॥ ३९ ॥

बृहतेरर्थानामनुगमतः कारणतो जगतश्चागमतः ।
ब्रह्म हि सकलङ्कं समशक्तं नित्यविशुद्धसुबुद्धविमुक्तम् ॥ ४० ॥

भवति हि यस्मिन् भवतेरर्थो बोधयति हि स च यं परमर्थम् ।
भाभिर्वृणुते दशभिर्निखिलं सोऽयं सहसा स्वयमिदमचलम् ॥ ४१ ॥

मस्तु तृतीया मात्रा प्रणवे तस्य च वाच्यः परमः पुरुषः ।
मात्रात्रितयेनैव हि सोऽयं पापविमुक्त्यै हृदि समुपास्यः ॥ ४२ ॥

यस्मात् सर्वमिदं किल जातं येन पुनः परिजीवति सततम् ।
यत्पुनरभिसंविशति हि नियतं सच्चित्सुखमिह तद्बृहदुदितम् ॥ ४३ ॥

रसयति योऽयं परमिह योगादानन्दः स च परमो निगमात् ।
रस इह यस्य यदर्थमभीष्टः सोऽयमहं रसमय उपदिष्टः ॥ ४४ ॥
लक्षणयैव हि जन्मादिकया श्रुत्या निजभावनियामिकया ।
लक्ष्यं तच्छ्रुतमनुभूतिकया ब्रह्म परं विदुरहमहमिकया ॥ ४५ ॥
वक्तुं श्रुतिरपि नैव तमर्थं याथातथ्यं भवति समर्थम् ।
वस्तु परं करणैस्तदगम्यं तपसैव हि केवलमवगम्यम् ॥ ४६ ॥
शक्यं न च मनसा ह्यनुमातुं युक्तिशतैरपि वा परिमातुम् ।
शरणं ब्रह्मणि निष्ठं गत्वा बन्धविमुक्तो भवति विदित्वा ॥ ४७ ॥
षष्टिं च तथा त्रीणि शतानि यस्य समासेनाहुरहानि ।
षट् च ऋतून् वै द्वादश मासानयने च चतुर्विंशतिपक्षान् ॥ ४८ ॥
सप्तशतानि च विंशतिमथवा यस्याहोरात्राणि विभागात् ।
सँवत्सरमिह तं प्रजनानां पतिमाहुरिमं प्रजनयितारम् ॥ ४९ ॥
हँसोऽयं षट्शतमिह वारं चैकाधिकविंशतिकसहस्रम् ।
हँसँ हृदये परमात्मानं रात्रिन्दिवमनुजपति प्राणम् ॥ ५० ॥
[1]ळसति प्रतिपदमात्मनिवृत्तिर्गायत्रीमजपामनुजपतः ।
ळष्यति तस्य हृदन्तर्ज्योतिस्तदिदं मनुजस्येह विभूतिः ॥ ५१ ॥
क्षरमिह जगदिदमिति परिदृश्यं यस्मिन् कल्पितमखिलमसत्यम् ।
क्षरदिदमनु न क्षरति यदन्ते तत्परमक्षरमुक्तमिदन्ते ॥ ५२ ॥
ज्ञप्तिरियं जननीव जनानां ज्ञापयतादिति कृतिमिह विहिताम् ।
ज्ञात्वा तत्त्वं जगति जनास्ते जन्मजरामरणैर्न रमन्ते ॥ ५३ ॥
ओमथ तत्सदिति प्रथितानि प्राणभृतामिह माङ्गलिकानि ।
ओमिति यस्य हि वाचकमुदितं तत्परमं सद्ब्रह्म निगदितम् ॥ ५४ ॥
अद्वैतात्मरसं श्रुतिमूला स्रावयतादियमक्षरमाला ।
आत्मरसं भजतामनुकूला दैवरातहृदयान्तरलीला ॥ ५५ ॥

---

1. अत्र लळयोरभेदेन ळकारे लः प्रयुक्तः ।

# वेदः, धर्मः, संस्कृतम्[1]

य. महालिङ्गशास्त्री

## वेदः

नमो ब्रह्मविदे वेदपुरुषाय महौजसे ।
शाश्वतायापरिच्छिन्नस्फूर्तये शब्दमूर्तये ॥ १ ॥

अविकारि चिरादेकममृतौपयिकं नृणाम् ।
पारम्पर्यश्रुत्यधीनमिदं हि महदौषधम् ॥ २ ॥

अनिर्धारितगाम्भीर्यं शास्त्रवित्तमशोधनैः ।
गम्भीरघोषमुदधिं विश्वस्तं बाडवाश्रयम् ॥ ३ ॥

उपज्ञा सर्वविद्यानामुद्भवो देशनागिराम् ।
उदयाद्रितटो भासामुत्कर्षः स द्विजन्मनाम् ॥ ४ ॥

सकर्मोपासनाज्ञानकाण्डव्याकीर्णमण्डलः ।
विराजते कल्पवृक्षः पुमर्थप्रतिपादने ॥ ५ ॥

धर्मानुदृधृत्य चोदृधृत्य तस्या एव महाखनेः ।
स्मृतिकाराः कृपायोगान्मर्त्यानां श्रेयसे ददुः ॥ ६ ॥

धर्मः परस्परां लोके देवमानुषलक्षणः ।
द्विविधः सूक्ष्मसंवित्तेः पात्रं नानृषिगोचरः ॥ ७ ॥

अतीन्द्रियज्ञानसिद्धिर्येषामिन्द्रियनिग्रहात् ।
लोकानुग्रहमात्रेण कृतार्थाः पूर्वसूरयः ॥ ८ ॥

तपसा तेजसा वाचां शुचित्वेनानुकम्पया ।
तत्त्वार्थदर्शने तेषामार्षदृष्टिरकुण्ठिता ॥ ९ ॥

अलं दुर्वृत्तसन्त्रस्तुपक्षपात्यभिमानिभिः ।
विवृतैः परबोधार्थं विप्लुतैर्धर्मवर्त्मभिः ॥ १० ॥

---

1. आकाशवाण्यनुमत्या प्रकाश्यते ।

## धर्मः

धर्मिणो मानवाः सर्वे तेषु धर्मो व्यवस्थितः ।
सूत्रे प्रोतमिवाशेषं धर्मे तिष्ठति गुम्फितम् ॥ ११ ॥
स लक्षणं हि लक्ष्याणां सोऽधिकारोऽधिकारिणाम् ।
स विभागो विभिन्नानां नियतानां स बन्धनम् ॥ १२ ॥
अलौकिकः स सङ्केतः सृष्ट्यादिक्रमगोचरः ।
कार्यत्रयस्वतन्त्राणां मन्त्री नयविदामिव ॥ १३ ॥
या वाचः स्वेन निर्भाता महर्षीणां च या गिरः ।
ताभिः प्रथन्ते तत्संविन्मार्गानुस्मृतयो भुवि ॥ १४ ॥
सा संविदेकरूपैव कल्पादेरनुवर्तिनी ।
प्रतिकल्पं च सा सैव यदि स्याज्जगदीदृशम् ॥ १५ ॥
खानिलाम्ब्वग्निभूप्रायं जगदेवंविधं सदा ।
रेजिरे तारका व्योम्नि भानुमाली विदिद्युते ॥ १६ ॥
समुद्रवसना चोर्वी सशैलपुरकानना ।
पुंसः स्त्रियश्चाप्यभवन् सन्तोऽसन्तश्च सर्वदा ॥ १७ ॥
दृष्टाः पुष्टाश्च बलिनो ये चाप्यन्ये न तद्विधाः ।
कामक्रोधात्मकः स्फारः संसारः प्रससार च ॥ १८ ॥
अस्य सृष्टिप्रवाहस्य प्रतिकल्पं विधातृभिः ।
तटबन्धपरिष्कारः क्रियते धर्मसंज्ञकः ॥ १९ ।
सृष्ट्यधीनो निसर्गाद्व्यस्तं वायुमिव वल्गिनम् ।
अनुप्रसारितो धर्मः सुखं वाहयति प्लवम् ॥ २० ॥
चन्द्रार्कसागरक्ष्माद्रिजीमूतमरुदादयः ।
समयेन हि सीमानमङ्गीचक्रुः पुरा विधेः ॥ २१ ॥

मा कृथा धर्मविद्वेषमीषच्छ्रमजिहासया ।
मा गमो मृत्युमक्षाम्यन् गदाक्रान्त इवौषधम् ॥ २२ ॥

संस्कृतम्

गैर्वाणी प्राणदा प्रायश्चैतन्यमिव देहिनाम् ।
भाषाकायनिकायानां विविधानामपि क्षितौ ॥ २३ ॥

अपरिच्छिन्नसंस्थानरूपव्यापारलक्षणाम् ।
अपि यां चितमुच्छिद्य कायिनां न जिजीविषा ॥ २४ ॥

उपजीव्यैव यामेते यान्ति वृत्तिं विसृत्वरीम् ।
तामसम्भाव्य वर्त्स्यन्तो भवन्त्यात्मद्रुहः स्वयम् ॥ २५ ॥

निराकृत्यपलापाद्यैर्येषामावरणं वृथा ।
पूर्वसूरिभिरव्याजं विवृतेष्वेव लक्ष्मसु ॥ २६ ॥

अभिव्याप्यैकवद्भूमिं भारताख्यामभिख्यया ।
चान्द्री किरणमालेव कलाभिर्या विजृम्भते ॥ २७ ॥

औत्तरा दाक्षिणात्याश्च पाश्चात्याः प्राग्भवा अपि ।
सम्पर्कं तीर्थनद्येव यया सिद्धं विवृण्वते ॥ २८ ॥

सप्तद्वीपेश्वरैः प्राप्तैर्दमयन्तीस्वयंवरे ।
मिथः सम्भाषणे कार्ये गैर्वाणी प्रतिभूरभूत् ॥ २९ ॥

इत्याह नैषधकविरद्याप्येतन्न यन्मृषा ।
तद्विजानन्ति विद्वांसः कृते सम्मेलने क्वचित् ॥ ३० ॥

ते वेदास्तानि शास्त्राणि ते रामायणभारते ।
भासशूद्रकह्लालश्रीकालिदासादिसम्भवा ॥ ३१ ॥

अच्छिन्ना वाङ्मयनदी सा चाद्यापि विगाह्यते ।
पारम्पर्येणाव्यपाया भारतीयैरतन्द्रितैः ॥ ३२ ॥

न सोऽस्त्यनुपनीतो यः स च नारभते श्रुतिम् ।
अधीतवेदो व्युत्पत्तौ शास्त्रे वा न स यत्नवान् ॥ ३३ ॥

विद्या विजह्रुर्वक्त्रेषु वाडवानामविप्लुताः ।
देशे देशे पुरे पुर्यां ग्रामे ग्रामे कुले कुले ॥ ३४ ॥

एवं बहुसहस्रेषु वर्षेषु सुरभारती ।
कलावपि विलासाढ्या सम्राज्ञी साऽन्ववर्तत ॥ ३५ ॥

सनातनमताक्षेपकृतः पालीप्रभाषिणः ।
स्वयं बौद्धाः कृतीश्चक्रुर्गैर्वाण्या कार्यगौरवात् ॥ ३६ ॥

शिलालेखान् शासनानि तयैवालेखयन्नृपाः ।
गभीरसुन्दराण्यूहुर्बिरुदानि तदात्मना ॥ ३७ ॥

प्रशस्तीः पर्वतोत्कीर्णास्ताम्रपट्टेषु मुद्रिताः ।
संस्कृतोक्त्या विरचिताः कवीनामन्वमोदयन् ॥ ३८ ॥

अरण्यानीव ववृधे सा भूयो ग्रन्थकन्दलैः ।
संस्कृतोक्तिरभिव्याप्य प्रस्थानान्यखिलान्यपि ॥ ३९ ॥

वैयाकरणधौरेयैर्दाक्षीपुत्रानुयायिभिः ।
निरपाया मूलबलैरिव या परिरक्ष्यते ॥ ४० ॥

अक्षय्यकोशा प्रकृतिप्रत्ययोपात्तविस्तरा ।
गम्भीरमधुरा नित्यं सेव्यते या महोदयैः ॥ ४१ ॥

असम्भवाद्विक्रियया सदैवास्वाद्यमानया ।
ययामृतस्योपलब्धिर्मर्त्यानामपि भूतले ॥ ४२ ॥

विचित्य भुवनं कृत्स्नं वाङ्मयेष्वीक्षितेष्वपि ।
वाल्मीकिव्यासभगवद्गीतानां न तुला क्वचित् ॥ ४३ ॥

अध्यात्मविद्यामितरे नैवमज्ञासिषुः क्वचित् ।
न शृण्वन्तो न स्मरन्तः प्रस्खलन्तः पदे पदे ॥ ४४ ॥

जगच्चक्रस्य चलतः स्थित्यै नाभिपदे स्थितम् ।
अर्थकामावधःकृत्य धर्मं नान्वशिषन् परे ॥ ४५ ॥

विधात्रा विहितां रेखामनुल्लङ्घ्याप्रमादिनीः ।
प्रजाः पथि नियम्यान्ये व्यवस्थां केऽन्वपालयन् ॥ ४६ ॥

धर्म्यं प्रयतमक्लिष्टं प्रशमैकपरायणम् ।
विनयप्रणयोपेतं शीलमेव ह्युपास्महे ॥ ४७ ॥

विद्या विनयसम्पत्तिमुखेन पुरुषार्थदा ।
जागर्ति विवृता पूर्वैः सा नः संस्कृतवाङ्मये ॥ ४८ ॥

शिष्टानुशिष्टा सरणिः प्रवृत्तिर्निरहङ्कृतिः ।
ईश्वरस्य फले स्वाम्यमहो धन्या अमी वयम् ॥ ४९ ॥

अप्राकृतप्रभावाया देवतोपनिमन्त्रणे ।
प्रसादेन गिरस्तस्या दत्ताभयमिदं जगत् ॥ ५० ॥

निर्भाता रजनीच्छिदेव रविणा वृष्टेव वर्षाम्बुदै-
रुद्गीर्णेव कुलाचलैरुपहितेवाम्भोधिवीचीचयैः ।
आनीतेव मरुद्भिरद्भुतजवैर्व्योमाग्रसञ्चारिभिः
सद्भाग्योपचयैर्जनैर्दिविषदां भाषेयमासादिता ॥ ५१ ॥

आ सेतोराहिमाद्रेरनितरसुलभां व्याप्तिमास्थाय सैषा
कालादेवाप्रमेयादपरिमितकविग्रन्थकृत्सम्भृतर्द्धिः ।
आ चन्द्रार्कस्थितीनि प्रथितपृथुजगन्मङ्गलान्यङ्गलक्ष्म्या-
माविष्कुर्वत्यपारा जगति विजयते वैबुधी नः परा गीः ॥ ५२ ॥

## हे विश्वकवे !

बोम्मकण्टि श्रीनिवासाचार्यः

क्रौञ्चं निषादशरदर्शितमृत्युवक्त्रं
 क्रौञ्चीं च वीक्ष्य सविधे करुणं स्वनन्तीम् ।
सत्त्वाकृतिस्त्वमभवः करुणावतारो
 येनादिकाव्यमुदभूद्रसशोभि नित्यम् ॥ १ ॥

धर्मस्य हानिरथ मोहमदादिवृद्धिः
 जाता यदा भरतपुण्यतपोवनेऽस्मिन् ।
त्वं पञ्चमश्रुतिशुभां परिगृह्य वाणीं
 धर्मानुरक्तिमसृजः सकलप्रजासु ॥ २ ॥

अस्यां महर्षिकरुणाधृतभारतोर्व्याम्
 इष्टैः समस्तविभवैः परिशोभितायाम् ।
कालीप्रसादकृतवाग्विभवस्तदानीं
 शृङ्गारवृष्टिममलां व्यकिरस्त्वमेव ॥ ३ ॥

रत्या प्रजाहृदयनीरसतां प्रमृज्य
 वीरोक्तिभिश्चटुलनिःस्पृहतां व्यपोह्य ।
सिक्त्वा च कर्कशधियः करुणामृतेन
 मर्त्यान् पुनः पुनरहो कृतवानमर्त्यान् ॥ ४ ॥

विस्मृत्य पूर्वविभवं परराज्यदास्ये
 देशो यदाभवदयं बत भादरिद्रः ।
त्वत्तः पुनः प्रसृमरा भरतार्षवाणी
 सर्वावनीजनमनोहरणे प्रवीणा ॥ ५ ॥

याप्यस्तु नाम बहिराकृतिरात्मवंस्ते
 याप्यस्तु कण्ठसरणिर्नवतानुरक्ता ।
जानामि नूनमिह गायकनायकं त्वां
 जानामि विश्वकविमच्छरसाकृतिं त्वाम् ॥ ६ ।

## ऊर्मिलाभ्यर्थनम्

देवीप्रसाद खण्डेराव खरवण्डीकरः

[रामेण सह व्रजन्तं सौमित्रिमूर्मिला स्वानुगमनमभ्यर्थयते ।]

आर्यपुत्र भवदङ्घ्रिसरोजं न त्यजामि नितरामभिपूतम् ।
संनिधौ प्रियतरो भवदीये वासवोदवसिताद् वनवासः ॥ १

यापयेय भवने कथमस्मिन् हायनानि हि चतुर्दश नाथ ।
सर्वमेव भवनं वनमेव त्वद्वियोगबलवत्पविपाते ॥ २ ॥

मैथिलीमयि तथा रघुनाथं सेवितुं वनमभिव्रजसि त्वम् ।
वन्दनीयपदयोरनयोस्तन् नानुरज्य इति किं मनुषे त्वम् ॥ ३ ॥

या पतिं समनुगच्छति नित्यं तां पतिव्रतपरां स्त्रियमाहुः ।
मां त्वया जिगमिषुं प्रतिकुर्वंश्चन्द्रिकामपनिनीषसि चन्द्रात् ॥ ४ ॥

शल्यमेव निहितं हृदयेऽस्मिन् नो व्यथां मम करिष्यति नूनम् ।
विप्रयोगजनितस्तु कृशानुर्निर्दहेन्निरवशेषतया माम् ॥ ५ ॥

# रोहाप्रशस्तिः

चि. द्वा. देशमुखः

मातुर्धरित्र्याः प्रियहिन्दधात्र्या वस्त्राञ्चलीभूत इवाभिलग्नः ।
प्रत्यङ्मुखोऽगस्तिदिशोपकण्ठे देशोऽपरान्तोऽस्ति नगार्णवान्तः ॥ १ ॥

तत्रोदयापाटलभानुबिम्बं विलम्बयन्नम्बुदगर्भचौरः ।
विचित्ररूपोच्छ्रितशृङ्गशोभः सह्याद्रिरास्ते हरिताङ्घ्रिकूटः ॥ २ ॥

वेलासु यस्यामलशुक्तिजातश्वेतास्त्रपास्यन् सितफेनहास्यम् ।
चलोर्मिलास्योऽपरसिन्धुराजः सह्याचलत्वे खलु सावहेलः ॥ ३ ॥

प्रक्षालनीयानमुनैव पादान् व्यस्तान् गिरिस्तत्सविधे निधत्ते ।
इतस्ततस्तन्नगपादपांसौ धावन्ति वाला इव निर्झरिण्यः ॥ ४ ॥

तास्वापगासूपलसङ्कुलासु विशेषरम्या रजतद्रवाभा ।
सह्याङ्घ्रिमूलादुदधिप्रसक्ता सार्थाभिधा कुण्डलिका प्रयाति ॥ ५ ॥

अद्रेः परस्तादगतीकृतानि स्रवन्नलव्रातसमाधृतानि ।
जलानि विद्युज्जनकानि सह्यं कुर्वन्ति लोके सविशेषमान्यम् ॥ ६ ॥

अपां समासादितकार्य एष शुभंकरिष्णुर्जितवाजिरोधः ।
विस्फारयत्यात्तरयं चिराय क्षेमावहं कुण्डलिकाप्रवाहम् ॥ ७ ॥

तीरे तटिन्या अतिशैशवाया नौकाविहारक्षमधारितायाः ।
आस्ते पुरं सानुमतः प्रकोष्ठे रोहाभिधं सान्द्रतरूपगूढम् ॥ ८ ॥

रोहा समारोहिहरिद्रसालं सरिद्दरीपार्श्वगशैलमालम् ।
सुवर्णसस्योद्गमहारिशालि कस्यापहर्तुं न मनो वदालम् ॥ ९ ॥

रोहा सबन्धारुणधूलिमालं कासारनिर्यद्दलकञ्जनालम् ।
दुर्गावशिष्टोर्जितपूर्वकालं कस्यापहर्तुं न मनो वदालम् ॥ १० ॥

रोहा ह्रदालोडनचुञ्चुबालं सद्रोणनौकाश्रितवारिवारम् ।
स्खलज्जलालम्बितटद्रुमालं कस्यापहर्तुं न मनो वदालम् ॥ ११ ॥

वर्षासु तत्रोल्बणरागमेघा वियत्क्रिमप्याकुलयन्ति सायम् ।
गिरिप्रपातोज्झितसत्त्वसारा वल्गन्त्यधीरा इव शारदोत्साः ॥ १२ ॥

क्रोडे जनन्याः पितुरक्षिकोणे सहोदरानन्यतुलेऽनुरागे ।
सुहृज्जनैः सार्धमनेकदात्र दिनान्यनैषं स्मृतिसुन्दराणि ॥ १३ ॥

रोहावरोहभ्रममुक्तचेता मोहार्णवोत्तीर्णमतिर्निरीहः ।
को हातुमिच्छेत् पुरमीदृगन्ता रोहैव गेहस्य ततोऽभिधानम् ॥ १४ ॥

# उक्तिद्वयम्

विधुभूषण भट्टाचार्यः

(१)

## पूर्णयौवनोक्तिः

तव गृहे मम प्रार्थनास्पदे दयित पालिता स्नेहयत्नतः ।
निखिलकामना पूर्णतान्विता चिरसुखिन्यहं त्वत्प्रसादतः ॥ १ ॥
निरवधि त्वया नित्यमर्पिता विदधती सुधां जीवने मम ।
हृदयपात्रसम्पूर्णकारिणी प्रणयमाधुरी जीविताबहा ॥ २ ॥
विकसितैर्यया मानसाम्बुजैः प्रियकरैस्तव प्रेमगन्धकैः ।
हृदयपेषणोद्भूतसद्रसैस्तव पदार्चनं साधितं मया ॥ ३ ॥
न च मदर्थनादित्सुना त्वया पुनरपेक्षिता दारकर्मणि ।
त्वदनुरागतः पूर्णचेतसः किमपि वा पुनः शून्यमस्ति मे ॥ ४ ॥
कमलिनी यथा भानुरश्मिभिः कुमुदिनी यथा चन्द्रिकाचयैः ।
नियतमेव मे जीवनं तथा प्रणयनिर्झरैः पूरितं तव ॥ ५ ॥
मनसि राजते तद्दिनं तव प्रथमदर्शनं रागबीजभृत् ।
अनुपमश्रिया मण्डितस्य यद् विपुलभाग्यतो जातमेव मे ॥ ६ ॥
जिगमिषुस्तदा मत्किशोरता सुभगयौवनं चागमोत्सुकम् ।
समभवं वयःसन्धिसङ्गता विकसनोन्मुखी पद्मिनी यथा ॥ ७ ॥
त्वमुदितो मम ध्वान्त संवृते मनसि सुन्दरो भास्करो यथा ।
तव कराहतं दीप्तिसम्भृतं हृदयमेव मे जागरास्पदम् ॥ ८ ॥
अविदितं मम ज्ञापितं त्वया नवरसामृतास्वादनं तथा ।
अभिनवश्रियामास्पदं वपुस्त्वदनुकम्पया जातमेव मे ॥ ९ ॥
तव महाबल प्रेमसम्पदा किमु कृतं न वा? वच्मि चात्र किम् ।
अपगता मनःसुप्तिमग्नता जगदभून्नवं तत् पुरातनम् ॥ १० ॥

न धरणेः पुना रूपमीदृशं समनुलक्षितं तत् पुरा कदा ।
मधुरिमा जगत्सङ्गतः सदा तव समागमादन्वभूयत ॥ ११ ॥

विहगकाकली चारुचन्द्रिकाभिनवपल्लवः पुष्पमञ्जरी ।
मधुरतास्पदं सर्वमेव मे प्रथममन्तरे प्रत्यभात् तदा ॥ १२ ॥

अमृतलम्भनं जीवने सदा हृदयपूर्णता सर्वतः सुखम् ।
त्वदनुरागतो जातमेव मे दयित किं न ते प्रेम यच्छति ॥ १३ ॥

किमपि दुष्कृतं बान्धव त्वया मयि कदा कृतं स्वप्नतोऽपि न ।
विविधचेष्टया सर्वदैव मे सुखविधिस्त्वया सर्वथा कृतः ॥ १४ ॥

मदनुरागतो यन् मदर्थकं प्रणयसिन्धुनानुष्ठितं त्वया ।
न च तदंशतः कर्तुमस्ति मे तव कृते सखे शक्तियोग्यता ॥ १५ ॥

नियतमेव मे सन्निधिस्तव प्रियकरः सुखक्षेमसाधनः ।
न हि तथापि मे चित्तनिर्वृतिर्विरहतः क्षणं दर्शनं विना ॥ १६ ॥

तव तनौ यदि त्वग्भवामि वा न विरहस्तदा स्यात् कदापि मे ।
विधिरहो कथं मां तथाविधां न कृतवान् पुनश्चिन्तयामि तत् ॥ १७ ॥

न नयने मम त्वद्विलोकिनी दयित तृप्यतो द्वे हि ते यतः ।
यदि भवेत् पुनर्लक्षलोचनान्यपि तदा परा तृप्तिरान्तरी ॥ १८ ॥

सकलमिन्द्रियं यावदस्ति मे न खलु तावता प्रेमसाधनम् ।
भवति ते सखे हन्त कातरा समुचितप्रिय प्रीतिलम्भने ॥ १९ ॥

जगदिदं महादुःखदं नृणामिति वृथा वचो भाति मे सखे ।
प्रणयमाधुरीस्पर्शवर्जितैरिति हतस्पृहैः कथ्यते किल ॥ २० ॥

न च मम त्वया विप्रियं कृतं न हि तवाप्रियं वा कृतं मया ।
भुवि परस्परं प्रीतिसाधितं त्रिदिवतुल्यमिदं मृत्तिकागृहम् ॥ २१ ॥

प्रणयसम्पदा जातभावयोः परमवाञ्छितं प्रेममन्दिरम् ।
पुनरितः कदा काम्यते मया न सुरमन्दिरं प्राणवल्लभ ॥ २२ ॥

(२)

## गतयौवनोक्तिः

अयि नाथ कथं न वीक्षसे पुरतो मां तव वीक्षणोत्सुकाम् ।
किमु पुस्तकमेव तेऽधुना ननु मत्तोऽप्यधिकं मनःप्रियम् ॥ १ ॥

रजनी गहनायतेऽधुना धरणी सुप्तियुतेव तिष्ठति ।
विरलध्वनि साम्प्रतं गृहं शयितापत्यतयातिनिर्जनम् ॥ २ ॥

विमला हृदयप्रमाथिनी वरराकाप्रविलासिचन्द्रिका ।
प्रतिभाति गवाक्षमार्गतः प्रकृतेः शुभ्रतमं यथाम्बरम् ॥ ३ ॥

हृदयं प्रविसार्य बान्धवं मुदितेयं कुमुदाङ्गना विधुम् ।
अभिनन्दयति प्रियव्रता दयितस्तां सफलीकरोत्यसौ ॥ ४ ॥

समुपात्तविशेषसाधनो हृदयोन्मादकरं क्षणं दधत् ।
वहति प्रमदः समीरणः किमिवार्थं कथयन् शनैः शनैः ॥ ५ ॥

अयि कान्त तवास्मि सम्मुखे तरलान्तःकरणा त्वदर्थतः ।
अपि नाम तव प्रियाधुना समयो नास्ति मदीक्षणाय किम् ॥ ६ ॥

कथमद्य तवेदृशं सखे मयि वीतस्पृहसन्निभं मनः ।
किमु मन्दमभूद् वपुः पुनः ननु निद्रा नयने प्रबाधते ॥ ७ ॥

अथवा कुत एव कारणादसुखं सम्प्रति मानसं तव ।
यदि तत् कथमत्र वा पुनस्तव कान्ताप्यहमेव वेद्मि न ॥ ८ ॥

अथ कालवशाद्विरागता तव जाता दयिताजनेऽपि नु ।
परिपीतरसे यथाम्बुजे भ्रमराणामकृतज्ञचेतसाम् ॥ ९ ॥

विदितं हृदयं पुनर्मया तव दीर्घश्वसितेन साम्प्रतम् ।
गतयौवनमाधुरीमिमां न च मां काङ्क्षति ते मनःप्रिय ॥ १० ॥

शिथिलं मम बाहुबन्धनं मदिराशून्यमिदं मदीक्षणम् ।
न सुधारसनिर्झरस्तथा प्रतिभाति प्रिय ते ममाधरः ॥ ११ ॥

न सलीलकदेहभङ्गिका हृदि मोहं जनयेत् पदे पदे ।
रजनीक्षयपाण्डुरच्छविर्ननु सा चान्द्रमसी कला यथा ॥ १२ ॥

स्मृतिकुज्झटिका विभिद्य मे हृदयं गच्छति साम्प्रतं सखे ।
मदधीरमनोजुषस्तवाभिनवोन्मादनवासरान् हि तान् ॥ १३ ॥

कियदङ्ग विचेष्टितं त्वया हृदयोच्छ्वासमयेन कर्मणा ।
प्रणयामृतसम्मदास्पदा हृदि लग्नाः समया हि ते पुनः ॥ १४ ॥

मम भावयुतेक्षणाकुलं नयनं ते चतुरामधीरताम् ।
कियतीं जनसन्निधावपि प्रवितेने हृदयप्रमाथिनीम् ॥ १५ ॥

अनुरागवशाच्चलात्मना जनमध्ये स्थितयोश्च नौ त्वया ।
रहसि प्रणयार्पणेच्छया विविधैरिङ्गितकैः प्रयाचिता ॥ १६ ॥

विरचय्य कियच्छलं पुनर्मम सान्निध्यमुपेतुमुत्सुकः ।
अपरैर्विदिताभिलाषतो न च लज्जामपि काममन्यथाः ॥ १७ ॥

कथमिष्टद विस्मरामि तां मधुरां दीर्घतमामपि क्षपाम् ।
दयित प्रियकर्मभिश्च या ननु याता क्षणभोग्यतोपमा ॥ १८ ॥

अभिरामविलासकोमला मदलीला चटुला सुखप्रदा ।
विगता हृदयेप्सिता भृशं मधुरात्रिः कियती न नौ प्रिय ॥ १९ ॥

निशि रागभृता त्वया पुनर्मम निद्रा नयनप्रबाधिनी ।
परिहासवचोभिराग्रहात् प्रतिरुद्धाऽऽतपनोदयं बलात् ॥ २० ॥

सततं हृदयस्य ते पुनः प्रियतृष्णाचरितार्थकारिणी ।
अहमेव तवास्मि जीवनं मनसो वाञ्छितसाधनाधनम् ॥ २१ ॥

मम तृप्तिविधानमन्तरा करणीयं भुवने न चास्ति ते ।
सकलेप्सितसिद्धिरक्षया ननु मत्तो भवति क्षितौ पुनः ॥ २२ ॥

यदिदं परिरभ्य वक्षसा प्रियवाक्यं सुखगाढकण्ठतः ।
नियतं कथितं त्वया सखे किमु तद् विस्मृतमेव कालतः ॥ २३ ॥

अयि यः सततं मम स्पृहाः सफलीकर्तुमभून्महोत्सुकः ।
स इह त्वमसि, प्रियाप्यहं तव सैवास्मि बतान्तरप्रिय! ॥ २४ ॥

गतयौवनदुःखदुःखितः प्रिय स त्वं मयि चाद्य निःस्पृहः ।
दिवसात्ययखिन्नपद्मिनीमिव मां वाञ्छसि नो हृतादराम् ॥ २५ ॥

चिरकाङ्क्षितदुर्लभा पुरा तव याहं प्रणयास्पदस्थिता ।
ननु तामिह मामुपेक्षसे प्रिय पार्श्वे स्वयमागतामपि ॥ २६ ॥

अयि कालवशादियं दशापतिता मे यदि भाग्यदोषतः ।
ननु जीवितमेव निष्फलं भुवि वृन्तच्युतमल्लिकायताम् ॥ २७ ॥

शिथिलं मम बाहुबन्धनं मदिराशून्यमिदं मदीक्षणम् ।
न सुधारसनिर्झरस्तथा प्रतिभाति प्रिय ते ममाधरः ॥ ११ ॥

न सलीलकदेहभङ्गिका हृदि मोहं जनयेत् पदे पदे ।
रजनीक्षयपाण्डुरच्छविर्ननु सा चान्द्रमसी कला यथा ॥ १२ ॥

स्मृतिकुञ्झटिका विभिद्य मे हृदयं गच्छति साम्प्रतं सखे ।
मदधीरमनोजुषस्तवाभिनवोन्मादनवासरान् हि तान् ॥ १३ ॥

कियदङ्ग विचेष्टितं त्वया हृदयोच्छ्वासमयेन कर्मणा ।
प्रणयामृतसम्मदास्पदा हृदि लग्नाः समया हि ते पुनः ॥ १४ ॥

मम भावयुतेक्षणाकुलं नयनं ते चतुरामधीरताम् ।
कियतीं जनसन्निधावपि प्रवितेने हृदयप्रमाथिनीम् ॥ १५ ॥

अनुरागवशाच्चलात्मना जनमध्ये स्थितयोश्च नौ त्वया ।
रहसि प्रणयार्पणेच्छया विविधैरिङ्गितकैः प्रयाचिता ॥ १६ ॥

विरचय्य कियच्छलं पुनर्मम सान्निध्यमुपेतुमुत्सुकः ।
अपरैर्विदिताभिलाषतो न च लज्जामपि काममन्यथाः ॥ १७ ॥

कथमिष्टद विस्मरामि तां मधुरां दीर्घतमामपि क्षपाम् ।
दयित प्रियकर्मभिश्च या ननु याता क्षणभोग्यतोपमा ॥ १८ ॥

अभिरामविलासकोमला मदलीला चटुला सुखप्रदा ।
विगता हृदयेप्सिता भृशं मधुरात्रिः कियती न नौ प्रिय ॥ १९ ॥

निशि रागभृता त्वया पुनर्मम निद्रा नयनप्रबाधिनी ।
परिहासवचोभिराग्रहात् प्रतिरुद्धाऽऽतपनोदयं बलात् ॥ २० ॥

सततं हृदयस्य ते पुनः प्रियतृष्णाचरितार्थकारिणी ।
अहमेव तवास्मि जीवनं मनसो वाञ्छितसाधनाधनम् ॥ २१ ॥

मम तृप्तिविधानमन्तरा करणीयं भुवने न चास्ति ते ।
सकलेप्सितसिद्धिरक्षया ननु मत्तो भवति क्षितौ पुनः ॥ २२ ॥

यदिदं परिरभ्य वक्षसा प्रियवाक्यं सुखगाढकण्ठतः ।
नियतं कथितं त्वया सखे किमु तद् विस्मृतमेव कालतः ॥ २३ ॥

अयि यः सततं मम स्पृहाः सफलीकर्तुमभून्महोत्सुकः ।
स इह त्वमसि, प्रियाप्यहं तव सैवास्मि बतान्तरप्रिय! ॥ २४ ॥

गतयौवनदुःखदुःखितः प्रिय स त्वं मयि चाद्य निःस्पृहः ।
दिवसात्ययखिन्नपद्मिनीमिव मां वाञ्छसि नो हृतादराम् ॥ २५ ॥

चिरकाङ्क्षितदुर्लभा पुरा तव याहं प्रणयास्पदस्थिता ।
ननु तामिह मामुपेक्षसे प्रिय पार्श्वे स्वयमागतामपि ॥ २६ ॥

अयि कालवशादियं दशापतिता मे यदि भाग्यदोषतः ।
ननु जीवितमेव निष्फलं भुवि वृन्तच्युतमल्लिकायताम् ॥ २७ ॥

## पत्रहारकः[1]

अ. वि. काणे

अथ को वसुधातले वसन् श्रमसक्तं सकलायुरुद्वहन् ।
मितवेतनतृप्तमानसो मनुजानामतिनम्रसेवकः ॥ १ ॥

उदिते सति भास्करे निजं गणवेषं परिधाय चोचितम् ।
भवनाद् भवनं पदा व्रजन् निजकर्तव्यविशेषपूर्तये ॥ २ ॥

अयमेव हि सुव्रतो जनः पदयात्रां कुरुते दिने दिने ।
ननु तच्चरणानुगामिनी जनसेवा दृढभावकल्पिता ॥ ३ ॥

प्रभवत्यपि राजमन्दिरे गमनं तस्य तथोटजे यथा ।
यतिरेव स सङ्गवर्जितः परपत्रार्तिरहस्यबोधने ॥ ४ ॥

प्रणयप्रतिसक्तपत्रिका रमणीनां रमणेषु सत्वरम् ।
वितरत्यपि चैकपाणिना सुखदुःखाकुलवृत्तसञ्चयम् ॥ ५ ॥

अथवा शुभकार्यपत्रिका वनितावर्गविशेषतोषदाः ।
द्रविणं रमणीकरे क्वचित् पतिसम्प्रेषितमर्पयत्यसौ ॥ ६ ॥

नववृत्तसुवृत्तकाङ्क्षिणः शुभवार्ताश्रवणातुरा जनाः ।
अपि तन्मुखदर्शनोत्सुकाः सदनद्वारकृताश्रयाश्च ते ॥ ७ ॥

अयमेव हि वृत्तवैभवं तनुते तेज इव प्रभाकरः ।
नववृत्तरसैरयं मनः सुखयत्यम्बुरसैर्यथा घनः ॥ ८ ॥

---

1. Postman.

# परपुष्टदशकम्

## के० राजन्नशास्त्री

पञ्चमरागं तनुते परपुष्ट भवांस्तनोतु किमु तत्र ।
अथ सर्वसम्मतत्वे न भवान्न वयं हि हेतुतां यामः ॥ १ ॥

कालः खल्वनुकूलोऽप्यसाध्यमर्थं सुसाध्यतां नयते ।
तत्र कदाचिद् विदुषा न वा स्मयो नापि विस्मयः कार्यः ॥ २ ॥

किं मतिपथं न जुषते षड्जसमादरणकौतुकी जातु ।
सर्वोऽपि भवति लोकः पञ्चमसञ्जातहेयभावोऽसौ ॥ ३ ॥

किञ्चित् कलय त्वं हृदि, भविता कोऽहं गतेऽथ कालेऽस्मिन् ।
तव नाम जानते नो येषां त्वं जातु सम्मतस्तेऽपि ॥ ४ ॥

न हि खेदमत्र कुर्या अविनीतः कः सुखं चिरं लभते ।
यत् त्वं यैः परिपोष्य प्रभुतां गमितस्तमेव धिक्कुरुषे ॥ ५ ॥

नापेक्षसे च जातिं न वा स्वधर्मं न चापि भूतार्थम् ।
कालात् प्रभवामीत्यपि न हि जानीषेऽतिदुर्मदाविष्टः ॥ ६ ॥

किं तेऽविनीतभावं ब्रूमः परपुष्ट यद् रसालस्य ।
नित्यं प्रसवं ग्रससे फलसाधनतां त्वविगणयन्नेव ॥ ७ ॥

अत्यर्थाशापूर्णो मौनं भजसे यदुच्चपदमेत्य ।
मार्गश्रान्तैर्मनुजैः फलातिकामैर्विहन्यसे जातु ॥ ८ ॥

प्रमदाः समदाः कुरुषे द्विजानथाऽत्येषि पञ्चमाभिरतः ।
न हि ते वर्णपरीक्षा किं मलिनः स्वस्य दूषणं वेत्ति ॥ ९ ॥

सचन्द्रको नीलगलो भुजङ्गहारी श्रुतिप्राञ्चितषड्जसेव्यः ।
तनोतु नृत्यंस्त्वयि हेयभावं लोकस्य सर्वस्य च कालयोगात् ॥ १० ॥

# "दधिमानय"

## फटिकलालदासः

विद्यार्थिनां संसदि लब्धकीर्तिर्धर्मार्थशास्त्रेषु कुशाग्रबुद्धिः ।
विद्योदधिश्चेत्युपनामयुक्तो बभूव काश्यां विबुधो हि कश्चित् ॥ १ ॥

एकोऽस्य दोषो गुणसन्निपाते बभौ सदेन्दोः किरणेष्विवाङ्कः ।
अपूपमिष्टान्नपयस्यमध्ये बभूव दध्नि प्रबलास्य तृष्णा ॥ २ ॥

हित्वा स सर्वं घृतभृष्टखाद्यं दधाति दृष्टिं दधिभाजने प्राक् ।
कुत्रापि भोज्ये यदि नेक्षते तत् त्यक्त्वा स्थलं स्वं भवनं प्रयाति ॥ ३ ॥

अथैकदा प्राप्य निमन्त्रणं स धनाढ्यगेहान्निशि शिष्यवर्गैः ।
तस्य प्रयातो भवनं सहर्षं संस्मृत्य नारायणनाम चित्ते ॥ ४ ॥

भोक्तुं च काले समुपस्थिते स शिष्यैः समेतोऽपरपण्डितैश्च ।
रराज पीठे नभसीव चन्द्रो नक्षत्रवृन्दग्रहमध्यवर्ती ॥ ५ ॥

विचिन्त्य लौल्याद्दधिभाण्डमत्र कुलालचक्रप्रतिमास्य दृष्टिः ।
बभ्राम विष्वग् बहुशस्तथापि न क्वापि सत्तां बुबुधे स तस्य ॥ ६ ॥

ततः स दध्ना हृतचित्तवृत्तिरुच्चैरवोचद्, "दधिमानये"ति ।
श्रुत्वा वचस्तद् विबुधा निषण्णा ही हीति कृत्वा जहसुः समन्तात् ॥ ७ ॥

तदुच्चशब्दैः प्रतिपन्नसंज्ञो भ्रमं च विज्ञाय कृतं प्रमादात् ।
लज्जां प्रपन्नोऽरुणनेत्रगण्डो निर्वाग् वितष्ठे नतमस्तकः सः ॥ ८ ॥

तत्रास्त कश्चित् सुमतिर्हि नाम्ना तस्यैव शिष्यः स्थितधीः सुमेधाः ।
ज्ञात्वा स लज्जां परमां गुरोस्तां तन्मानरक्षार्थमुवाच सर्वान् ॥ ९ ॥

"यूयं कथं पण्डितमानिनो भो दन्तच्छटाभिर्निहतान्धकारम् ।
अयुक्तवाक्यं गुरुणा किमुक्तं यल्लोलहासा विलसन्ति वक्त्रे" ॥ १० ॥

ऊचुश्च ते, "मूढ, न वेत्सि किं त्वमशुद्धवाक्यं गुरुणा यदुक्तम् ।
मूर्खोऽसि किं वा बधिरः श्रुतिभ्यां जानासि नो यत् स्मितकारणं नः" ॥ ११ ॥

चख्यौ ततस्तान् सुमतिः सरोषं, "श्रुतं मया तद्, बधिरोऽस्मि नैव ।
किन्त्वत्र वाक्ये गुरुणोदिते मे हासस्य बीजं भवतां न दृष्टम्" ॥ १२ ॥

प्रोक्तं तदा तैर्विबुधैः सहासं, "समा हि विद्या गुरुशिष्ययोर्हा ।
किं वाक्यमेतद् 'दधिमानये'ति कुत्रापि शुद्धं भवतीह लोके ॥ १३ ॥

क्लीबत्वहेतोर्दधिशब्दरूपे दधीति विज्ञो न 'दधिं' कदापि ।
स्तनन्धया यच्छिशवो विदन्ति गुरुस्तदीयो न हि बुध्यते तत्" ॥ १४ ॥

स सोपहासं सुमतिस्तदोचे, "गुर्वी प्रशस्या भवतां हि विद्या ।
विद्योदधिर्मे गुरुरस्ति यस्तु जानीथ किं स श्रुतिपारदृश्वा ॥ १५ ॥

'न जातु नक्तं दधि भक्षितव्यं' शास्त्रार्थमेतं हृदि सन्निवेश्य ।
तत्पूज्यपादैर्दधिवारणार्थं मा-शब्द एव क्रियया प्रयुक्तः ॥ १६ ॥

सवर्णसन्धौ च तथा कृते स्याद् गुरोः प्रयोगो 'दधि मानये'ति ।
क नाम दृष्टोऽत्र ततः प्रमादो हासः कुतो वा सुविदग्धवक्त्रे ॥ १७ ॥

शास्त्रस्य पारं हि गतस्य तस्य वाक्यस्य गूढं न विचार्य मर्म ।
युष्माभिरेवं प्रकटीकृता भोः कूपस्थभेकैरिव मूर्खता स्वा ॥ १८ ॥

यद् वेद बालो न स वेत्ति तद्धि श्रद्धास्पदं हा वचनं किमेतत् ।
अस्माद्धि सावज्ञवचोऽभिधानाच्छ्रेयः सदा वः खलु सार्गलं स्यात् ॥ १९ ॥

स्वीयापराधस्य विशोधनार्थं तस्यैव पादे प्रणतिं कुरुध्वम् ।
पुष्णन्ति कोपं प्रति सापराधान् विनीतसत्त्वान्न हि ते महान्तः ॥ २० ॥

श्रुत्वा वचस्तद्विबुधाः सलज्जा विच्छायवक्त्राः स्थिरतामुपेयुः ।
दिने हि तस्मिन् प्रतिलब्धमानो विद्योदधिः किन्तु न दध्यभुङ्क्त ॥ २१ ॥

## कालः कविः

### वे राघवः

कालः कविः किमपि कार्मणमस्य, तेन
वृत्ते पुनश्च कथिते सुकथेव भाति ।
स्मृत्याख्यया स्पृशति तूलिकया च तस्मिन्
हेमार्पणैर्ज्वलति हन्त पुराणचित्रम् ॥ १ ॥

तत्तत् चिराद् गतमपि स्मयमानमेति
देशान्तरप्रतिनिवृत्तमिव स्वमित्रम् ।
हैमापटीस्मरणरङ्गमुपेत्य लास्यैः
नो वृत्तवृत्तय इमा मन उत्कयन्ति ॥ २ ॥

विद्योतिनी प्रतिमुखं व्रजति प्रपञ्च-
घण्टापथे क्षणरुचिप्रतिमानुभूतिः ।
यातामम्ूं प्रतिनिवृत्य विलोक्य सेयं
"नाग्राहि किन्तु वशगा" इत्यनुतापिताः स्मः ॥ ३ ॥

प्रत्यक्षमेव परमं कथमार्तिदायि ?
केयं परोक्षविषयस्य विमोहशक्तिः ?
यातं, कराद्विगलितं, न पुनश्च लभ्यम्
इत्येव कापि विषयेषु विजृम्भते श्रीः ॥ ४ ॥

यद्दुष्टदुःखखरकष्टकठोरतापि
यैरेव दैवकदनैः भर आस देहः ।
तच्चापि सुस्मृतितयोत्सुकताधिवासि
कालेन्द्रजालिककरेण विवर्तितं भोः ॥ ५ ॥

कालः कविः

अद्याभिसारयदभिज्वलदायतिं स्वां
प्रत्युद्व्रजन् मनसि कल्पितपूर्णकुम्भैः ।
अद्योल्लुठन् अवसितोत्सवहंसतूले
लोकं जनस्तरति भोः सरलः कथञ्चित् ॥ ६ ॥

तत् बाल्यमच्छलम् अशृङ्खलिता विलासाः
ते ते, पुरा तरलिमोच्छलितानि तानि ।
आवर्तितानि हृदये प्रगुणं स्वदन्ते
कोऽप्येधते हि मधुनीव रसः स्वभूते ॥

चिन्ताख्यसौमशयने शयितोऽस्मि निद्रान्
आत्मामरद्युतिसहोदरिका स्मृतिर्माम् ।
आलिङ्ग्य मञ्जु कथिका बत जल्पतीव
स्वप्नप्रभा अविशदा विशदाश्च सौम्याः ॥

## आभीरकुमारः

पि. एस्. सुब्बरामभट्टः

(१)

'कुमारक! किं ते नाम?'

'आर्य! गोविन्दः।'

'कियत् ते वयः?'

'दश वत्सराः।'

'कस्यां पाठशालायां पठसि?'

'नाहं कुत्रापि पठामि। अध्ययनार्थं वित्तं न विद्यते इति जनको वदति।'

'कस्ते जनकः? किं वा तस्य नामधेयम्?'

'शङ्कर इति तस्य नामधेयम्। स ग्रामवासिनां गाश्चारयति।'

ग्रामात् बहिः सञ्चरतो मम केनापि चतुरेण बालकेन सह यदृच्छया संवृत्तोऽयं संवादो मां मनागिव दुनोति स्म। परेद्यवि सायमहं ग्रामान्नातिदूरे स्थितां शङ्करस्य वसतिमन्विष्य गतः, तदीये कुटीरे च तं दृष्टवान्। गोविन्दोऽपि तदा तदन्तिकेऽतिष्ठत्। कमप्यप्रतीक्षितमनुग्रहं कर्तुकाम इवाहं शङ्करमवदम्— 'ग्रामे काचन संस्कृतपाठशाला वर्तते। सा च ग्रामवासिभिर्धनिकैर्द्विजैः स्थापिता। तस्यामहं प्रधानाचार्यः। तव पुत्रमिमं तत्र प्रेषय। अयं संस्कृतं पठतु। तदर्थं वित्तव्ययो नापेक्ष्यते' इति। शङ्करः प्रत्यवदत्— 'आर्य! पठितेन संस्कृतेन अस्मादृशां कर्मकराणां किं प्रयोजनं भविष्यति? ग्रामीणानां गाश्चारयन्नहं वृत्तिं निर्वहामि। दारकोऽयं तत्र मे साहायकमाचरन्नास्ते॥'

'बालको धीमानिति प्रतिभाति । स कालं वृथा मा क्षिपतु । यत्किमपि पठतु । प्रयोजनं स्यादेव । पुस्तकादीनि पाठोपकरणानि दापयिष्यामि ॥'

'वृत्त्यर्थं किमपि शिक्षयन्नेवास्मि, यदहं वेद । तथापि भवतां निर्बन्ध-मतिलङ्घयितुं नोत्सहे ॥'

गाश्चारयन् शङ्करो मतिमते सुताय वृत्त्यर्थं कां वा शिक्षां दातुं प्रभवतीति नाहं प्रतिपत्तुमलमभवम् । तथापि मदीयं निर्बन्धं प्रत्याख्यातुम-शक्नुवता तेन परेद्युरेव पुत्रः पाठशालायां पठितुमन्वमन्यतेति परामिदं मे मुदमावहत् ॥

(२)

केरलेषु द्राविडद्विजैरध्युषितो महान् जनपदसमूहः, यत्रोपशता ग्रामा इति प्रवादः । वेदविद्भिः शास्त्रज्ञैश्चालङ्कृते तेषामन्यतमे गैर्वाणी-प्रणयिभिः कैश्चित् स्थापिता कापि पाठशाला । तत्र चत्वारोऽध्यापकाः, एका चाध्यापिका । छात्राणां सङ्ख्या स्वल्पीयसी । भूयांसो माणवका आङ्गलभाषामभ्यस्यन्ति, संस्कृतं शिक्षमाणान् परिहसन्ति च । अतः संस्कृताध्ययनाय बालकान् प्रचोदयितुं विशेषतः प्रयत्न आधातव्यः समपद्यत । तदर्थमाधीयमाना प्ररोचना च कदाचिदेव फलिनतां प्रत्यपद्यत ॥

पाठशालां प्रविष्टो गोविन्दः कतिपयैरेव दिनैः सहपाठिनः सर्वानत्यशेत । अनल्पेनाभिनिवेशेन मयाधीतं शब्दशास्त्रं तं ग्राहयितुमचिरेण पार्येतेति मे बलवती प्रत्याशा समजनि । अतस्तस्मिन् मे प्रवृद्धा प्रीतिरभवत् । देशान्तरादागत्य ग्रामेऽत्र निवसतः, स्तोकेन वेतनेन कथञ्चित् कालं यापयतो मे मनः क्लेशान्तरैस्तथा नादूयत, यथा बुद्धिमतां श्रद्धालूनामन्ते-वासिनामभावेन । अतो मदीयं निदेशमनुसृत्य अनध्यायदिनेष्वपि गोविन्दो मे गृहमायाति, विविधविषयकमुपदेशं च गृह्णाति । एवं गच्छत्सु दिवसेषु

कदाचित् गोविन्दः आढकद्वयपरिमितान्यामलकानि मह्यमुपाहरत् । मुक्ताफल-संनिभान्यामलकानि तानि मम गृहिण्यै भृशमरोचन्त । अहं तु तमपृच्छम्—'कुतो वेमानि लब्धानि ?' इति । गोविन्दः प्रत्यवदत्—'गवां चारणाय निकटस्थं वनं यातेन मे पित्रा समानीतानि ॥'

'एवं वनात् किं किमानयति ते पिता ?'

'वन्यानि बहूनि वस्तून्यानयति । मधु, दर्भान्, समिधः, अनेकविधा ओषधीश्च आनयति ॥'

'सर्वमेतद्विक्रीय कियद्धनं स लभते ?'

'स्वल्पमेव । परं तु जनानामुपकारं कर्तुं शक्यते ।'

'का वा ओषधीराहरति ?'

'पुनर्नवाशारिबाद्याः परःशता ओषधयो विद्यन्ते । तासां नामानि, स्वरूपाणि, गुणांश्च स सम्यग्जानाति । कानिचिन्मह्यमप्युपदिष्टानि । गोचारणेन केवलं लभ्यमाना भृतिरस्माकं कालयापनाय न पर्याप्ता भवति ।'

'किं त्वमप्योषधीराहर्तुं प्रभवसि ?'

'आर्य ! बाढम् । किन्तु काश्चिदतीव दुर्लभाः । ताः पित्रैवाहर्तव्याः । महाटव्यामेव ताः प्ररोहन्ति ॥'

(३)

संस्कृतमधीयानस्य गोविन्दस्य द्वौ वत्सरावतीतौ । गोविन्दो न केवलं मम, किन्तु मे गृहिण्या अपि वात्सल्यस्य भाजनमभूत् । स तस्याः कृते आपणं गत्वा तैलमाषादीन् पदार्थान् क्रीणाति । सा च तस्मै स्वादूनि भक्ष्याणि प्रयच्छति । इत्थमधीतकाव्योऽयमन्तेवासी शब्दशास्त्रमध्यापयितव्य इति, तस्य शास्त्राध्ययनमागामिन्याश्विने सरस्वतीपूजासमये समारब्धव्यमिति च मया निरणायि ॥

अत्रान्तरे मे गृहिणी दुःसहया शिरोरुजा बाधिताऽभवत् । अकस्माद्दुत्पन्नेन शिरःशूलेन दिवानिशं पीड्यमाना सा त्यक्ताहारा गृहकर्म कर्तुमप्यशक्ता

संवृत्ता । पाश्चात्यभैषज्यविदग्धस्य कस्यापि चिकित्सया मासमेकं निर्वर्तितया तनीयसी शान्तिरपि नासादिता । अतो नितरां व्यथितहृदयोऽहं पाठशालां गन्तुमपि नापारयम् । व्यतिकरेऽस्मिन् दूनमानसो गोविन्दः स्वाचार्यपत्नीमुपसृत्य सविनयमवोचत्—'अम्ब! अहं कस्याश्चिदोषधेर्मूलमानीय दास्यामि । सरसं तन्मूलमश्मना विमर्दितमनुक्षणं जिघ्रन्ती वर्तसे चेत् त्रिचतुरैरेवाहोभिः पीडेयं शममेष्यति । इदमौषधं मे पित्रा शिक्षितम् । नात्र कापि व्यापदाशङ्कनीया । सकृदुपयुज्य स्वयमेव फलं ज्ञास्यसि ॥'

गोविन्दस्यौषधमपि सकृदुपयोगेन परीक्षितव्यमिति निरचायि । परेद्युः प्रातरेव गोविन्देनानुगम्यमानः शङ्करः स्वयं तदौषधमानीय दत्तवान् । तस्य च यथोपदेशमुपयुक्तस्य फलमतीव विस्मयावहमदृश्यत । अहोरात्रेणैकेन सुसह्याऽभवत्पीडा ; सप्ताहेन केवलं शान्तप्राया च । गोपालकेन शङ्करेण जीविकार्थं स्वपुत्राय वितीर्यमाणं शिक्षणं गीर्वाणवाणीविचक्षणस्य मे शास्त्रप्रावीण्यादप्युत्कृष्टमिति तदैवाहमवागच्छम् ॥

आश्विने मासि नवरात्रावसाने गोविन्दः पाणिनीयमध्येतुमारभत; अहमपि समीपवर्तिनि ग्रामे वसतः कस्यचन निकटे आयुर्वेदं शिक्षितुं निश्चयमकरवम् । प्रत्यहं सायन्तने समये पाठशालातः प्रत्यागत्य पुस्तकमादाय भिषग्वरस्य गृहं गच्छतो मे मनसि प्रादुरभूदभिनवा काचिदाकाङ्क्षा —नूनमहमायुर्वेदेऽपि गोविन्दस्याचार्यो भवेयम्! सति भागधेये ग्रामीणानामगदङ्कारश्च !!

# दारिकापहरणम्

को. ल. व्यासराजशास्त्री

"परित्रायध्वमार्याः परित्रायध्वम्"

**रक्षी**—धावक ! अरण्यपरिसरकुञ्जे अबलाया इव करुणध्वनिः ।

**धावकः**—आम् । लुण्टाकानामावासभूमिः स प्रदेशः; ये खलु श्वापदा इव दिवा निलीय स्थिताः प्रसृते सन्ध्यातमसि बहिरेत्य पथिकानां धनजातमाच्छिद्य पलायन्ते । सायुधौ सत्वरं तत्र व्रजावः ॥

उभौ शब्दानुसारेण कुञ्जभूमिं द्रुतगत्या जग्मतुः । क्रोशन्ती काचन वृद्धा तौ वीक्ष्य किञ्चिदिव लब्धाश्वासा रक्षिणं जगाद—आर्य ! परित्रायस्व मां परित्रायस्व ॥

**रक्षी**—कस्मात् परित्रातव्या भवती ?

**वृद्धा**—अत्याहितात् ।

**रक्षी**—किमत्याहितम् ?

**वृद्धा**—मम दुहितापहृता ।

**रक्षी**—केन ?

**वृद्धा**—जामात्रा ।

**रक्षी**—किं जामात्रापहृता ? (उच्चैर्हसन्) वृद्धे ! किमेवं व्याकुलासि ? नेदमत्याहितम् । दुहिता नाम जामातुरर्थः । मा स्म क्रोशः ॥

**वृद्धा**—(सानुनयम्) आर्य ! मन्ददृष्टिरहं न पन्थानं पश्यामि । सदयं मां मम गृहं प्रापयतम् ॥

**रक्षी**—कुत्र ते गृहम् ?

**वृद्धा**—अत्रैव नातिदूरे चन्द्रगिरिग्रामे ।

वाचकमहाभागाः ! अस्ति पश्चिमोदधेस्तटे कल्लोलमालामारुतान्दोलितमहीरुहनिवहः चन्द्रगिरिर्नाम ग्रामः । चन्द्रवत् मण्डलाकारः कश्चिदल्पतनुः

गिरिः तत्र चकास्ति । तेनैव तस्य ग्रामस्य 'चन्द्रगिरिः' इति संज्ञा । तस्योपत्यकायां कणादो नाम धनाढ्यः सुवर्णकारः प्रत्यवसत् । तस्य चिराय सन्ततिः नासीत् । चरमे वयसि वर्तमानस्य तस्य पूर्वजन्मकृतसुकृतशेषेण दुहितैका समजनि । तस्याः 'हेमलता' इत्यनुरूपं नाम चक्रे । यदा सा द्विहायनी जाता तदा कणादः कालेन निमन्त्रितः लोकान्तरं जगाम । तदनु हरिणी नाम तस्या मातैव तां गुरुणा प्रेम्णा पुपोष । महत्या सम्पत्त्या सम्पादितैः वेषभूषादिभिः तामन्वहं प्रसाधयामास । अध्यापिकाः स्वगृहमानाय्य बालिकाजनोचितां विद्यामप्यग्राहयत् ॥

क्रमेण वर्धमाना हेमलता षोडशे वयसि पदं चकार । विभक्तावयवेन नवयौवनेनाऽलिङ्गिता सा फुल्लकुसुमा लतेव जनानां चित्तमाचकर्ष । तां वीक्ष्य हर्षनिर्भरास्तस्या बान्धवाः 'अनुरूपं भर्तारमाप्नुहि' इत्याशशंसिरे ॥

कुड्मलिताङ्ग्यास्तस्याः परिणयने मतिं चकार हरिणी । चन्द्रगिरेः समीपे ग्रामान्तरे कश्चिदन्यः सुवर्णकारः । स नातीव धनवान्; नाप्यकिञ्चनः । अशनाच्छादनपर्याप्तं धनमासीत् तस्य । स आत्मनः सुताय हीरनाम्ने कुमाराय मित्रमुखेन तामयाचत । हीरकुमारो यद्यपि सुन्दरः कृतविद्यः कलासु कुशलश्च हेमलताया अनुरूपो वरः, तथापि स कुलक्रमागतं कर्म परित्यज्य ग्रामसेवायां निरत इति कृत्वा तदर्थनां प्रत्याचख्यौ हरिणी । एतादृशा जनाः कुग्रामेष्वद्यापि सन्ति, ये खलु भव्यमपि नव्यं नाभिनन्दन्ति । क्षारजलेऽपि तातस्य कूपे परमादरः तेषाम् ॥

अन्यः कश्चित् स्वर्णकारः धनदासो नाम नेत्रावतीतीरवासी स्वर्णस्तेयोपार्जितविपुलवित्तराशिः । स हरिण्याः परिचितपूर्वः, विप्रकृष्टो बन्धुश्च । पञ्चपञ्चाशद्वर्षोऽसौ दुर्दैवयोगात् स्वजायया वियुक्तोऽभूत् । तस्य सन्ति पञ्चषाण्यपत्यानि-स्त्र्यपत्यानि पुमपत्यानि च । तथापि स कोटीश्वर इति कृत्वा

तस्मै दातुमैच्छत् स्वसुतां हरिणी । गुणान्तरापेक्षया हि धनमेव प्राणसदृशं मन्यन्ते प्राकृता जनाः । दोषाः सर्वेऽपि धनराशौ निमज्जन्ति ॥

किं बहुना! चन्द्रगिरेः पश्चिमतः क्रोशदूरे हरिण्याः भ्रातुः गृहम् । तत्र धनदासमानाय्य विवाहः—अथवा जीर्णप्राये स्तम्भे पशुबन्धः—निश्चितः । तदर्थं सुतया सह प्रातस्तत्र गता हरिणी सायं प्रतिन्यवर्तत । मध्येमार्गं कुञ्जवर्त्मनि हेमलता कण्टकविद्धचरणा पदमपि चलितुं न शशाक । मार्गस्थस्य शिलातलस्योपरि द्वे अप्युपाविशताम् । रुधिरधारा स्रवति स्म हेमलतायाश्चरणात् । चरणलग्नं कण्टकमपनेतुं प्रायतत हरिणी, किन्तु न शशाक । अस्तोन्मुखोऽभूत् भास्करः । उपस्थिताया निशाराक्षस्याः शरनिकरा इव परितः पतन्ति तमसः कणाः । हरिणी हरिणीव चकितनयना कर्तव्यमूढा दिशोऽपश्यत् ॥

तदा कश्चन कुमारः पञ्चविंशतिवर्षदेशीयः सत्वरगतिः तेनैव पथा गच्छन् वृद्धां विलोक्य—'अम्ब! कुतोऽत्र तस्करबहुले वनगहने स्थीयते' इत्यपृच्छत् ॥

वृद्धा—भद्र! एषा मे सुता कण्टकवेधवेदनया क्लिश्यमाना चलितुं न प्रभवति । तेनाहं व्याकुलमतिरस्मि । त्वं मे दैवेनोपस्थापितो बन्धुरसि ॥

कुमारः—अम्ब! किं क्रियतां मया?

वृद्धा—भद्रमुख! किं ते नाम?

कुमारः—मम नाम 'जामाता' इति ।

वृद्धा—सौम्य जामातः! कथञ्चिदावां चन्द्रगिरिं प्रापय ।

कुमारः—अम्ब! मा भैषीः । इमां ते दुहितरमहं स्कन्धेन वहन् व्रजामि । त्वं मामनुगच्छ । त्वरया गन्तव्यमस्माभिः । भीषयत्यन्धं तमः ।

वृद्धा—तथा भवतु । कृतज्ञास्मि ते ।

ततः कुमारः स्वकीयेन करवस्त्रेण हेमलतायाः कण्टकव्रणं बबन्ध । रुधिरधारा शान्ता । ततोऽसौ कुसुममृदुलां हेमलतामुद्धृत्य स्वस्कन्धमारोप्य

चलितः । वृद्धा तं कतिचित् पदान्यनुजगाम । द्रुतं गच्छन् कुमारः स्थविराया दृष्टिपथादपक्रम्य कुञ्जमध्ये क्वाप्यदर्शनं गतः । वृद्धा व्याकुलीभूता तारमाक्रोशत् । नातिदूरे स्थितात् ग्रामरक्षिगृहात् रक्षिणौ धृतायुधौ तत्र जग्मतुः । वाचकाः! वृद्धया रक्षिणोरग्रे यदुक्तं तत् पूर्वमेव प्रस्तुतमस्माभिः । तदनु वृद्धया प्रार्थितौ रक्षिणौ तां चन्द्रगिरिस्थं तस्या गृहं निन्यतुः ॥

गृहं प्राप्य हरिणी दुहितुः प्रत्यागमनं प्रतिपालयन्ती कतिपयानि दिनान्यत्यवाहयत् । तस्याः प्रतिपालनं न फलमदर्शयत् । एकाकिनी दुहितृविरहचिन्ताकुला नवीभूतभर्तृवियोगदुःखा हरिणी परितोऽन्धतमसमिवापश्यत् । भर्तुः विपुलमपि भूक्षेत्रादिकं तस्याः शोकायैव बभूव । निरालोकोऽभूत् जीवलोकः । विनोदावहान्यपि वस्तूनि तस्या विषादजनकान्यासन् । नाहारमरोचयत । न कञ्चिदभाषत । तस्याः सान्त्वनाय गृहमागतं भ्रातरमपि सा केवलमश्रुपूर्णेन चक्षुषा व्यलोकत । तस्या भ्रात्रा निवेदितैः रक्षापुरुषैरन्वेषणे कृतेऽपि नोपलब्धा हेमलता ॥

दुहितृशोकानलेन पच्यमानायाः स्थविरायाः षड्वर्षाण्यतीयुः । क्षणे क्षणे सा मृत्युदेवतां निमन्त्रयामास । अन्ततः सुदिवसः समुपस्थितः । कृष्णपक्षीया चतुर्दशी निशा । अर्धरात्रसमयः । हरिणीमाश्वासयन्निव शीतो मारुतः प्रवहति स्म । गृहस्य बहिर्वेदिकायां स्थिता हरिणी निश्शब्दीभूते दिगन्तराले गृहान्तः प्रविश्य कवाटं पिधाय दुःखशतानि मनसा चिन्तयन्ती शय्यामाशिश्रियत् । अकस्मात् कश्चन कवाटं हस्तेन बलवत् प्रजहार । वृद्धा न भीता । मृत्युदेवतां प्रतीक्षमाणस्य जनस्य किन्नु खलु भयकारणम्?

झडिति सा कवाटमुद्घाटयामास । पञ्चवर्षदेशीयो बालकः कश्चिदलिन्दे तिष्ठति । विस्मयव्याकुला हरिणी 'जात! कस्त्वम्?' इत्यपृच्छत् ॥

बालः—अम्ब! अहं तव दौहित्रः ।

वृद्धा—मम दुहितैव कुत्रेति न ज्ञायते, कुतो मे दौहित्रः?

बालः—मम मातापितरावत्रैव तिष्ठतः ।

एवमुक्तवति बालके नातिदूरे निलीय स्थितौ हेमलता तत्पतिश्च सप्रश्रयमुपसृत्य वृद्धां प्रणेमतुः । उद्वेल आसीत् वृद्धाया आनन्दः । सप्तति-वर्षा सा सप्तदशवर्षा युवतीव संवृत्ता । हर्षनिर्भरा सा त्रीनपि तानन्तर्गृहं नीत्वा यथोचितं पानभोजनादिकं सम्पाद्य तद्गतं वृत्तान्तमपृच्छत् ॥

वस्तुतो हीरकुमार एवासौ जामाता । हेमलतां पलितकेशाय धनदासाय दित्सितां ज्ञात्वा हीरकुमारः कथञ्चित् तामनिष्टापातात् निवारयितुकामः स्वस्य नाम जामातेति निवेद्य कुञ्जमार्गात् तामपजहार । हीरवत् भ्राजमानं हीरकुमारं वीक्ष्य हेमलता हर्षपुलकिताङ्गी कुञ्जमार्गस्थिताय कण्टकाय धन्यवादान् मनसा समर्पयन्ती तेन सह जगाम ॥

तदनु हीरकुमारो हेमलतायाः सम्मत्या रात्रावेव धूमशकटमारुह्य तया सह रत्नगिरिं जगाम । तस्य पूर्वतः पश्चिमघट्टस्योपत्यकायां जीर्णः कश्चित् ग्रामः । तत्रासौ ग्रामोद्धरणकर्मणि प्रावर्तत । प्रथमदिने ग्रामीणानां परिचयं सम्पाद्य तान् सर्वान् प्रबोध्य कर्मसु प्रेरयामास । स्वजायायाः भूषणानि विक्रीय खनित्रपिटकादीनि कानिचित् आवश्यकान्युपकरणानि चिक्राय । ग्रामीणैः सह स्वयमपि सभार्यः कर्माण्यकार्षीत् । ग्रामीणाः सर्वेऽप्युत्साहसम्पन्ना अभूवन् । बालानां बालिकानां चाध्यापनाय प्रथममेको विद्यालयः प्रतिष्ठापितः । प्रौढानां शिक्षणमप्यारब्धम् । संस्कृते देश्यभाषायां च परिचयः सम्पादितो जनैः ॥

कृषिकर्मणोऽभिवृद्ध्यर्थं नव्यः पन्थाः प्रचारितः । छायावृक्षाः फलवृक्षाः पुष्पवृक्षाश्च ग्रामे तत्र तत्र प्ररोपिताः । जनानां गतागतसौकर्याय विशालाः पद्याः कल्पिताः । नदीनां कुल्यानां चोपरि सङ्क्रमीथा निर्मापिताः । कूपास्त-डाकाश्च तत्र तत्र खानिताः । व्याधीनां निवारणाय चिकित्सालयः प्रतिष्ठापितः । ग्रामस्य मध्ये देवालयः, तत्समीपे विशालं पद्मसरः, तत्तीरे कुसुमोद्यानम्, तन्मध्ये वाचनालयः, तत्पार्श्वे नभोवाणीयन्त्रम् इत्यादयो नवजीवनोपयुक्ताः सर्वे विशेषाः सम्पादिताः । समीपस्थात् नगरात् विद्युत्स्रोतःसम्बन्धं सम्पाद्य ग्रामः विद्युत्प्रदीपैरुज्ज्वलीकृतः । ग्रामस्थाः सर्वे दैनन्दिनं कर्म समाप्य निशामुखे

वाचनालयं गत्वा प्रत्यहं तत्र वृत्तान्तपत्रिकाः पठन्तः नभोवाणीं शृण्वन्तश्च मुमुदिरे । तत्र अनक्षरज्ञो वा मितम्पचो वा नासीत् । सर्वे सुवेषाः मिष्टान्नभोजिनश्च अभूवन् । ब्राह्मणानामब्राह्मणानां च मिथो भेदो न लक्षितः । विशेषसन्दर्भेषु देवालये प्रवचनान्युपन्यासाश्च प्रावर्तिषत ॥

पञ्चभिर्वर्षैः स ग्रामः कमनीयां कामपि श्रियमवाप्य स्वर्गात् पतितं नन्दनं वनमिव रेजे । विवादो वा कलहो वा मतभेदो वा न जनेष्वदृश्यत । 'संहतिः कार्यसाधिका' इत्येतद्वचनं ते सत्यापयन्ति स्म । परस्परं भावयन्तः क्षेममविन्दन्त ॥

दिवमीयुषा महात्मगान्धिना स्वप्नदृष्टो ग्रामः कुमारेण सृष्टः । यथा यथा ग्रामश्चारुतामगात् तथा तथा जनानां हीरकुमारे सप्रश्रया प्रीतिरवर्धत । षष्ठे वर्षे कुमारः सपुत्रदारः स्वदेशं प्रति प्रस्थितः । ग्रामस्थाः सर्वे तस्य पुनर्दर्शनं प्रार्थयमानाः साश्रुनयनाः कथञ्चित् व्यसृजन् । स्त्रियो हेमलतां विविधैराभरणैरलङ्कृत्य बालकमुद्धृत्य मूर्ध्न्युपाघ्राय स्नेहस्य परां काष्ठामदर्शयन् ॥

स्वदेशं गतः कुमारः स्वग्राममपि परां सुषमामनैषीत् । हेमलतां हीरकुमारं च "आदर्शदम्पती" इव बहुमन्यन्त सर्वे जनाः । 'सर्वे लोकाः सुखिनो भवन्तु' इत्यासीत् तयोः प्रयत्नस्योद्देशः ॥

## मेघैर्मेदुरमम्बरम् ........ ।

श्रीमदनशर्मा "सुधाकरः"

निदाघो दृढं तापयित्वा निर्गतः। समागतोऽयमाषाढमासः। पूर्वस्यां पश्चिमायाम् उत्तरस्यां दक्षिणस्यां वाभ्रंलिहाग्राः कालकाला नीरदमालाश्चकासति। घना गर्जन्ति, विद्युतश्च नृत्यन्ति। अहह! पश्यतामेव प्रवृत्तो धारासम्पातः। पथि प्रयान्त आर्द्रपटा अभूवन्। भवनानां वीथीनां संसरणानां च जलधारा एकस्यामपरा परस्यामन्येति अहम्पूर्विकया निपतन्त्यः स्खलन्त्यः कलं गायन्त्यः सरलभुग्नवक्रगतयो मदघूर्णिता योषित इव कान्ताभिसारपथमभियान्त्यो वर्षद्वारिविप्रुषामाघातैर्बुद्बुदकदम्बान् रोमाञ्चितानीवाङ्कुरयन्त्यो मार्गान्तःपातिशिलापुत्रावरोधाकुलितास्तमपि परिष्वजमाना मदनतरङ्गाहता इवास्खलितोत्साहा वर्जनाशतं तिरयन्त्यः प्रतिभान्ति। वृक्षव्रततितृणकाण्डशून्यायां मरुस्थल्यामिव यस्मिन् निदाघकठोरे उड्डीनधूलिपर्वतानिव घर्मचक्रकदम्बान् परितो विकिरति विहायसि पूर्वं भानुमानेक एवाध्वन्यो निरीक्षितस्तत्राधुना लघुबृहदाकारा ईषच्छ्यामा गाढेन्द्रनीलनिकषोपलदूर्वाङ्कुरसङ्काशा घना घना अन्योन्यं शुण्डाश्लेषमाश्लिष्यन्तो दिक्कुञ्जरा इव पश्यतां जनानां तृष्णग्दृशां सान्त्वयन्ति परितापम्॥

नदीमातृकस्य देवमातृकस्य च भारतस्य चत्वार इमे मासा जीवनं वर्षन्तो जीवनमेव। ह्य एव भूमिर्वर्षता जलधरेण सिक्ता। अद्य प्रभात एव हलं बीजमनडुहश्च नीत्वा प्रतीक्षमाणाः कृषीवलाः कलावचायिसितपक्षदोषा इवोत्साहमुदिताननाः केदारेषु बीजाकृतमाचरन्तो विलोक्यन्ते। अमृतमिव सिक्तं बलाहकैः, पीयूषमिव पीतं पृथिव्या, सुधेव सुरालयं प्रतिष्ठमाना मध्येविहायः पृथिव्यां परिस्नुता। सर्वत्र नवीना चेतनेवाविवेश। घर्मेण वात्याव्यूहेन च या वनभूमिरमृष्टमलिनेव धूलिधूसरेव प्रोषितपतिकेव मलिनवेषा समलक्ष्यत, साद्य क्षालितप्रोञ्छिता शाखासु केकाकृतं किलकिञ्चितमिव बिभ्रती प्रियसमागमजातहर्षा वीततर्षा, प्रसाधितप्रकर्षा प्राप्तषोडशवर्षा युवतीव-वर्षास्वजायत। प्रतिपदं नवाङ्कुराः पल्वलानि च। ग्रामकासारेषु कियदिव पूरितं पय इति निरीक्षितुं परिवर्तनीयधौतशाटिकाधरा नागरिका अभियान्ति।

क्षामसरितां दृष्टतला दिवसा व्यतीताः । अद्य त्विमा उभयतः कूलानि प्लावयन्त्यः परिधिपरिखाः प्रोथयन्त्यो गर्जत्तरङ्गभङ्गाकलितभ्रूभङ्गाः सङ्गाय सरस्वतामनङ्गार्पिता इव वनगिरिदुर्गग्रामानतिक्रामन्त्यः सङ्केताभिसारदुर्वारा वारां धाराशते स्नात्यो हंसदुकूलमिव तीरस्थजलपक्षिणां पङ्क्तिं परिदधत्यः, नेत्राञ्जनमिव वेगाहृतरजःसङ्घातमञ्जयन्त्यः, कटककुण्डलकाञ्चीनूपुराणीव वर्तुलविभङ्गैर्बिभ्रत्यः, ताटङ्कमिव बुद्बुदसम्भारान् प्रसाधयन्त्यो मेघवसना तडिद्दशना सद्यः सिक्तपृथ्वीगन्धश्वसना, आवर्तरशनाः, रयःस्वनाः सुनासीरवधूभिः कान्तारे विस्मृतमार्गाभिः सासूयं वीक्ष्यमाणाः साभिमानमुच्चलन्त्यश्चलन्ति ॥

एतादृशं धरित्रीयौवनमहोत्सवं वीक्ष्य कतीनां सरस्वतीस्तनन्धयानां कवीनां मनःसु काव्यदोलारोहणाभिलाषो नाभूत् । प्रायो हि महाकाव्यकृतां प्रबन्धेषु सर्वत्र विकीर्णा लाजा इव वर्षाभाजां कौतुकानामाम्रेडितं निरीक्ष्येत सचेतोभिः । विप्रलम्भस्य दुर्दममौत्कण्ठ्यं कण्ठाश्लेषप्रणयिनां च सौभाग्यविजृम्भितं वर्णयन्तः संस्कृतकवयः प्रावृषेण्यं पयोवाहं मघोनः कामरूपं कलयन्ति । वस्तुतः ये हि युवानः प्रोषिताश्च सन्ति तेषां वध्वः खलूद्गृहीतालकान्ताश्चटुलशफरोद्वर्तनप्रेक्षितानि समाचरन्त्य उन्मत्तमुखरगीतैरखिलां मेदिनीमपि कामिजनमनोभेदिनीं कुर्वन्ति । युवानश्च वप्रक्रीडापरिणतगजप्रेक्षणीयं मेघं दृष्ट्वा विद्युत्सु वलयम्, शक्रचापेषु विद्रुमभिन्नाधरपल्लवारक्तहासान्, घनेषु कबरीभारान्, स्तनितेषु मदनदुन्दुभिं चोत्प्रेक्षमाणाः कामपि स्वदितवारुणीकलशां प्रकृतिमापन्ना लक्ष्यन्ते । धन्योऽयं मेघः, यो योषितां लीलापाङ्गे रमते, प्रोषितानां च सद्योऽवचितकुटजकुसुमोपहारान् विन्दति, राजहंसान् मानसोत्कण्ठान् कुरुते, मालतीकदम्बनीलोत्पलकुमुदकुसुमैरुद्यानानां ह्रदानां चाभिख्यां मुष्णाति । प्रेङ्खादोलारूढानां वधूटीनां झम्पाकृतैः सममेव मन्द्रगर्जितेषु मेघमालारागं मेलयति । कवयस्तु प्रावृषो यौवनमिदं वीक्ष्यैव मुग्धा लेखनीमकण्डूयन्त,

मेघैर्व्योम नवाम्बुभिर्वसुमती विद्युल्लताभिर्दिशो
धाराभिर्गगनं वनानि कुटजैः पूरैर्वृता निम्नगाः ।

अधुना हि पर्वते पर्वते जलप्रपाताः, वने वने मयूरोल्लासाः, पदे पदे नवाङ्कुरोद्भेदः । छन्नो दिवाकरः । मारुतस्यातप्तनिःश्वासानस्यन् जललवोत्सिक्तो वातः प्रवहति । पथि प्रोषितानां कृते खलु विषमम् उपस्थितम् ।

उपरि घनं घनपटलं
तिर्यग्गिरयोऽपि नर्तितमयूराः ।
क्षितिरपि कन्दलधवला
दृष्टिं पथिकः क्व पातयतु ॥

न केवलं पथि प्रोषितानाम्, अपि तु अभिसारसखीनामपि विषममुपस्थितम् । श्रृणुत तासां भणितिमपि-

जलधर, निर्लज्जस्त्वं
यन्मां दयितस्य वेश्म गच्छन्तीम् ।
स्तनितेन भीषयित्वा
धाराहस्तैः परामृशसि ॥

(मृच्छकटिके ५अङ्के-२८तमः श्लोकः)

घननिबिडासु रात्रिष्विमासु न चन्द्रश्चारु प्रकाशते । स हि कदाचिन्निलीयते ; कदाचिच्च पुनर्भूमिसौभाग्यं द्रष्टुमिव बहिर्निर्याति । अक्षिनिमीलनक्रीडामिवाचरन्नयं कवीनामुत्प्रेक्षाविषयं प्रयात एव । हेमचन्द्राचार्यो हि कुमारपालचरिते एतादृशवर्णनायां लिखति-

ओ गौरीमुखनिर्जितको वार्दले निलीनो मृगाङ्कः ।
अन्योऽपि यः परिभूततनुः स कथं भ्रमति निःशङ्कम् ॥

न केवलमियदेव । अन्यत्रासौ लिखति,

हृदये शल्यायते गौरी गगने गर्जति मेघः ।
वर्षारात्रिः प्रवासिकानां विषमं सङ्कटमेतत् ॥

सत्यमेव श्यामश्यामानां वारिदानां गौरविद्युतां च दृश्यमिदं दृष्ट्वा मनो मुह्यति । एवं च प्रतिभाति यत् विद्युतो घनबाहुपाशान् मुहुर्मुहुरुच्चलन्ति । स च कामी कामं तामुपगूहितुं सयत्नो गाढमङ्के करोति । हेमचन्द्रो ब्रवीति-

विटः श्यामलो धन्या चम्पकवर्णा ।
इव सुवर्णरेखा कषपट्टे दत्ता ॥

मेघैर्मेदुरमम्बरमित्ययं श्लोकस्तु केन वा साहित्याध्यायिना नैवाधीतः स्यात् । कालिदासमहाकवेर्मेघदूतं तु केवलं विशुद्धं वर्षाकाव्यमेव । तत्र हि तेन कविकुलगुरुणा या उद्भावना मेघमालम्ब्य कृतास्तास्तदानीमपि, अद्यापि, श्वोऽपि परश्वोऽपि वर्षावधूट्याः काञ्चीवेष्टनमिव सनातनविद्युतां चमत्कारं प्रेक्षावतां चक्षुष्षु आपादयन्त्यः स्थास्यन्त्येव ॥

# शिबिवैभवं नाम नाटकम्

जग्गु शिङ्गरार्यः

त्रयीशिखरगोचरस्त्रिभुवनावनैकव्रतः
समात्तसकलेप्सितः स्वयमजोऽपि नानाजनिः ।
समाश्रितजनोद्धृतौ समुपपन्नभूरिश्रमः
पुनातु परमः पुमान् पुरहरादिभिः पूजितः ॥

(नान्द्यन्ते सूत्रधारः)

**सूत्रधारः**—(सानन्दम्) संस्कृतप्रतिभाप्रभाप्रतिबोधनाय सततं यतमानानां विद्वन्मणीनां महती परिषदियं भारतभूभागस्य स्वातन्त्र्यदिनस्मरणमहोत्सवाचरणाय दिष्ट्यात्र सङ्गता हि! एनां केनाप्यपूर्ववस्तुप्रस्तावेन दृश्येन तोषयितुमुत्सुकोऽस्मि । किं वस्तु प्रयोक्तुमुचितमिदानीम्? (विचिन्त्य) भवतु, पारिपार्श्वकं पृच्छामि । (नेपथ्याभिमुखमवलोक्य) भोः पारिपार्श्वक! इतस्तावत् ।

**पारिपार्श्वकः**—(प्रविश्य) कृपया त्वरितमाज्ञापयत्वार्यः । कार्यान्तरे व्यग्रमनाः द्रुतमन्यत्र जिगमिषुरस्मि ।

**सूत्रधारः**—प्रभातारम्भावसर एव किं तत्कार्यम्?

**पारिपार्श्वकः**—पूर्वेद्युरेवाधिकृतालये प्राप्तां मासभृतिकां गृहोपयुक्तवस्तुक्रयणाय पत्नीहस्ते निक्षिप्य रात्रावप्यन्यत्र विशेषकार्यकरणादुत्पन्नेन द्रव्यलाभेन आत्मभोगाय चिरात् पिलपिलायमानां रसनां तर्पयितुमानन्दभवनं नाम भक्ष्यापणं प्रति प्रस्थितोऽस्मि ।

**सूत्रधारः**—भो भ्रातः! भवने ते भार्या भवन्तं सम्यक् नोपचरतीति तर्कयामि ।

**पारिपार्श्वकः**—शान्तं पापं, शान्तं पापम् । सा साध्वीमणिः सरलहृदया मामादरेण सविशेषमुपचरति ।

**सूत्रधारः**—तर्हि कुतस्ते जिह्वा पिलपिलायते? कुतो वा भक्ष्यापणगमनम्?

**पारिपार्श्वकः**—अत्र न मे भार्यापराध्यति । किन्तु कालविपर्ययदोष एव ।

सूत्रधारः—का ते तादृशी दुःस्थितिः, यतः कालेः दोषमारोपयसि ? प्रतिमासं शतं रूप्यकाण्यानयसि ।

पारिपार्श्वकः—भो महाशय ! त्वं गृहक्षेत्रारामधनादिषु सुसम्पन्नो दृश्यसे, यतो लोकस्थितिस्ते न विदिता। पश्य ! सर्वमाहारपदार्थजातं रूप्यस्यैकस्य प्रस्थमेकं निष्पन्नम्, रूप्यकशतमपि कुटुम्बभरणे मासपर्यन्तं न पर्याप्तम् । केवलं निस्साराहारपदार्थसेवनेन चिरान्निर्विण्णं मे कुटुम्बम् । पश्य ! "दधिमानय" इति केनापि महाकविना पूर्वमेवोक्तम्, वयमपि ब्रूमः, यतो दुर्लभे वस्तुनि जिहासा सिद्धैव । किञ्च तक्रमपि नासाद्यते । यतः 'तक्रं शक्रस्य दुर्लभम्', किं पुनरस्माकम् ? 'ऋणं कृत्वा घृतं पिब' इति केनापि महात्मना यद्यपि कथितं वञ्चनाप्रपञ्चाञ्चिते जगत्यस्मिन्नुत्तमर्ण एव न लभ्यते, तत् किं कुर्मः ?

सूत्रधारः—तर्हि ते कुटुम्बस्य किं करोषि? यत् त्वमेक एव पुष्कलं खादितुं जिगमिषुरसि ।

पारिपार्श्वकः—कुटुम्बस्य किं कर्तव्यम् ? गृहेऽस्त्येव कदन्नग्रासः, योऽयं ग्रासः भोजनावसरे गलान्तर्निरुद्धः बहिश्चान्तरप्यनपसर्पन् चडपडद्भिः भोक्तृभिः मुहुर्जलपानेन अन्तर्जठरं सार्यते ।

सूत्रधारः—(विहस्य) एवं सति तानन्तरेण भक्षणं ते सुतरामयुक्तम् ।

पारिपार्श्वकः—भोः ! शृणु । वृद्धौ मे पितरौ आपणभक्ष्यं हस्तेनापि न स्पृशतः । मम भार्यायाः पुत्रयोश्च अवश्यं यद्यपि दातव्यमेव । (विचिन्त्य) भो महाशय ! शृणु, पत्नी नाम पत्युरर्धशरीरं किल? किञ्च, 'आत्मा वै पुत्रनामासि' इत्युक्तम् । अतोऽहमेव मत्पुत्रयोः स्वरूपश्च । ततो यद्ययमहमेकः सुपुष्कलं भोजनेन सुखितः मत्पुत्राश्च सुखिता एव ।

सूत्रधारः—(विहस्य) हन्त ! महानभिज्ञोऽसि । एवं लोकोक्तिं शास्त्रोक्तिं च स्वप्रयोजनसाधनाय परिवर्तयन् सर्वान् प्रतारयसि । भवतु · भवतो वचनपरिपाटीपाटवेन प्रकृतं वक्तव्यमेव व्यस्मरम् ।

पारिपार्श्वकः—भोः! किं त्वं न जानासि? महाविद्वत्सदसः पुरस्तात् किमपि वक्तुं प्रवृत्तस्य एवं वक्तव्यविचारविस्मरणम् आत्मावहेलनकारणमिति?

सूत्रधारः—आम्! महाविद्वत्सदस्स्मरणेन वक्तव्यस्मरणमप्यभूत्—एतानार्यमिश्रान् केन दृश्यवस्तुप्रयोगेण आवर्जयाम इति प्रष्टुं त्वामाह्वयम्।

पारिपार्श्वकः—(विहस्य) हन्त। उत्तरकुमारादर्जुनस्य धनुर्विद्याभ्यास इव ते प्रश्नः।

सूत्रधारः—तथा न। पश्य—

समये बालकोक्त्यापि बुधः प्राप्नोति निर्णयम्।
कृशः कृशानुः शुष्केण काष्ठेनार्चिरिवोज्ज्वलम्॥

तत्समयोचितं सूचय।

पारिपार्श्वकः—(सानुस्मरणम्) आर्य! पञ्चषेभ्यो दिवसेभ्यः प्राक् भवताभिहितम्—"किमप्यपूर्वं शिबिवैभवं नाम नाटकं विलिख्य नटननिष्णातैः भवदीयैर्नटैः यथासमयं रङ्गभूमौ प्रयुज्यतामिदम्" इति केनापि प्रेषितमिति।

सूत्रधारः—(सहर्षम्) आम्! स्मारितोऽस्मि समये भवता युक्तरूपम्—अत एवोक्तं मया "समये बालकोक्त्यापि" इति।

पारिपार्श्वकः—तर्हि तत्प्रणेता कः?

सूत्रधारः—किं तत्प्रणेतृनामग्रहणेन प्रयोजनम्?

पारिपार्श्वकः—न किमपि प्रयोजनम्। तथापि तस्य कवेः प्रसिद्धिप्राशस्त्यादिकं चावगन्तुम्।

सूत्रधारः—तस्य कवेर्नामग्रहणात् तस्मिन् गौरवाभिसन्धिः दूरे तिष्ठतु नाम; परं तु लाघवबुद्धिरेव जिज्ञासूनामुत्पद्यते।

परिपार्श्वकः—कथमिव?

सूत्रधारः—कथमिति चेत्? सोऽपि कवी रसभरितमनेककाव्यनाटकजातं

विरचय्यापि न कुत्रापि प्रसिद्धिशुद्धिमध्यगच्छत् । किं बहुनोक्तेन । हुं! क्षीरपानावसरे धेनुशरीरवर्णवर्णनप्रसङ्गेनालम् । प्रकृतमनुसरावः । (नेपथ्ये घण्टानादः मधुरवादित्रध्वनिसहितो वेदमन्त्रघोषश्च)

**सूत्रधारः**—(कर्णं दत्वा नेपथ्याभिमुखमवलोक्य च) अये ! आत्मनः जन्मदिवसस्मारकं मङ्गलमहोत्सवं प्रवर्तयन् परिशुद्धात्मा शिबिसार्वभौमः प्रत्युषस्येव कृतमङ्गलस्नानादिकर्मा अनुष्ठितसन्ध्यार्चनादिविधिः लक्ष्मीनारायणमन्दिरे भगवदभ्यर्चननिरतः विद्वद्भिः ब्राह्मणैः सकलपरिजनैः परिवृतस्तिष्ठति । तदावामपि इमान् क्रैस्तीयविंशतितमशताब्दीमध्यसमयसमुत्पन्नान् नानाक्षोभान् विस्मृत्य महात्मनः शिबिचक्रवर्तिनो धर्मयुगसमयमवगाह्य सुखसम्पदा आत्मानम् आनान्दयावः । (इति निष्क्रान्तौ)

(इति प्रस्तावना)

(ततः प्रविशति यथानिर्दिष्टो राजा विभवतस्सपरिवारः)

(वेदवादित्रघोषेषु प्रवर्तमानेषु महाराजः तुलसीपुष्पाक्षतैः भगवन्तं विधिवदभ्यर्च्य दण्डवत् प्रणम्य भगवतो दक्षिणे पार्श्वे रत्नमयासने उपविशति । सर्वेऽपि यथोचितस्थानेषूपविशन्ति । वेदवादित्रघोषो विरमति ।)

(ततः अन्तरसचिवः समुत्थाय सविनयं राजानमुपसृत्य)

**अन्तरसचिवः**—महाप्रभुसन्निधौ किमपि विज्ञापयितुमयं दासजनो महाराजादेशं सविनयं प्रतिपालयन्नास्ते । इतः कृपाकटाक्षं निक्षिपतु मध्यमलोकेश्वरः । इह हि—

प्राचीदक्षिणपश्चिमोत्तरदिशां राज्येषु ये ये कृताः
सामन्तक्षितिपाः समेत्य त इमे नानाविधोपायनम् ।
भक्त्यानीय समर्पणाय समयं संवीक्षमाणाः स्थिताः
भोः स्वामिन् ! कृपयाद्य तत्तदुररीकृत्यानुगृह्णातु तान् ॥

महाराजः—इतोऽस्मच्छासनपत्रैः ये ये समाहूतास्ते सर्वे राज्यपालाः समागताः किम् ?

अन्तस्सचिवः—महाप्रभो ! पारसीकराज्यपालः कोङ्कणाधिपतिः कलिङ्गराज्यपालश्च इत्येते त्रयो नागताः । किन्तु अनागमने सहेतुकम् अन्तरायं विज्ञाप्य तदपराधक्षमां च प्रार्थयमानाः सोपायनं विज्ञापनापत्रं प्रेषितवन्तः । परमन्ये भूमिपालाः सर्वे समागताः ।

महाराजः—भवतु नाम । क्रमशः सर्वे समुपागच्छन्तु ।

अन्तस्सचिवः—यदाज्ञापयति महाराजः ।

(इति सोपायनहस्तमेकैकमेव राज्यपालं प्रभुसन्निधिं प्रति प्रहिणोति । उपायनार्पणसमये तत्तद्राज्यनाम तदधिपतिनाम च महाराजाय विज्ञापयति । महाराजस्तु तदुपायनभाजनं हस्तेन स्पृशति । राज्यपालास्तद्भाजनं भगवतः श्रीपतेः पुरतो निधाय यथापूर्वमुपविशन्ति ।)

महाराजः—भो भोः सभास्ताराः ! सततमस्मच्छ्रेयोऽभिवृद्धिप्रार्थनया सुवृत्तमान् विशुद्धबुद्धीन् भवतः सर्वान् भगवतः श्रीनाथस्य सन्निधाविदानीम् आलोकमानाः वयमानन्दभरममन्दं विन्दामहे । एवं प्रमोदभरितानामस्माकं हृदयं भवतां पुरतः किमपि भणितुं रसनां प्रचोदयति । विविधमनोवृत्तिस्वभावादिभिः भिन्नभिन्नाभिसन्धिसन्धुक्षिते जगत्यस्मिन् राज्याधिपत्यनिर्वहणं नाम समर्थानामपि पार्थिवानां परमार्थतोऽत्यर्थं क्लेशावहमेव । तथापि धर्मरतैः सदाचारनिरतैः पूर्वपुरुषैरादृतं पन्थानमेवानुसरन्तो वयमपि सकलजनकल्याणकरेण धर्माविरुद्धशासनाश्वासितेन परिपालनेन सर्वाः प्रजाः रञ्जयाम इत्यत्र भवन्त एव प्रमाणम् । एवं स्थितेऽपि कदाचित् प्रमादादस्माभिर्वा अस्मदीयाधिकारिपुरुषैर्वा अनुष्ठितं साधुजनहृदयारुन्तुदं धर्मावहेलनकालुष्यमलिनं किमप्यागः प्रवर्तितं यदि तदत्र निर्भयं निस्सङ्कोचं च प्रकटयितुमर्हन्ति भवन्तः । किञ्च सततमपि सज्जनानुमते पथि मतिं नियोजयतु नः परात्परो भगवान् लक्ष्मीनारायणः । भवन्तोऽपि

पापभीरवः सर्वसुहृदः इहपरश्रेयस्साधनतत्पराः भवन्त्विति समाशास्महे । सर्वेश्वरः सर्वजगतां सर्वविधं मङ्गलमातनोतु इत्येतदेवास्मदभिप्राय-निवेदनम् । अस्मदनुयोगं प्रति किमपि वक्तुकामाः स्वाभिमतमत्र प्रकाशयितुम् उत्सुकाः स्वाशयप्रकटनावसरं सफलयन्त्विति भूयो ब्रूमः । विवक्षुरस्ति यदि तदुत्तिष्ठतु ।

(सभासदः सर्वे तूष्णीं तिष्ठन्ति)

**विदूषकः**—(सर्वतः सभां पश्यन् शनैरुत्थाय) महाप्रभो! आत्मदृष्टान् कतिपयदोषान् प्रभुसन्निधौ प्रकटयितुमिच्छामि ।

**महाराजः**—विस्रब्धं प्रकाश्यताम् ।

**विदूषकः**—प्रभोश्चित्तक्षोभमुत्पादयितुं बिभेमि ।

**महाराजः**—भो महाब्राह्मण! अस्मासु विद्यमानान् दोषान् यथावस्थितं निवेदयतः सुहृत्तमान् वयमादरेण मानयामः । तदुच्यतां विवक्षितम् ।

**विदूषकः**—तर्हि ब्रवीमि ! भो मण्डलेश्वर! भवतो राज्ये सर्वत्र राजकीयवैद्यालयेषु अधिकारिणो भिषजश्च स्वकर्तव्यविमुखाः वृथा महतीं मासभृतिकां गृह्णन्ति । तथैव धर्मव्यवस्थापकाधिकारिणः प्राड्विवाकादयोऽपि धर्मालयेषु तूष्णीं धर्मासनमलङ्कुर्वन्तः निर्दिष्टकालापगमे गृहगमनाय समयं प्रतीक्षमाणाः व्यर्थं कालं नयन्ति । किञ्च नगरपालकपुरुषाः निशीथे वीथीषूपवीथीषु च निशाचरा इव विचरन्तः शब्दाडम्बरेण निद्रापरवशानां नागरिकाणां निद्राभङ्गं केवलं कुर्वन्ति । किन्तु कमपि चोरं वा दुर्जनं वा निर्दिश्य नैव बध्नन्ति । कारागृहं तु सततमपि शून्यमेव दृश्यते । एतत्सर्वं महदागः किल ?

**महाराजः**—(समन्दस्मितम्) अहो! हन्त! महानपराधः प्रकटितो ब्राह्मण-वरिष्ठेन ।

(सभासदः सर्वे हसन्ति)

महाराजः—तर्हि कुतो वैतेऽधिकारिणः स्वकार्यपराङ्मुखाः? तदपि विवृणोषि किम्?

विदूषकः—कुत इति कारणप्रकटनमत्रानावश्यकमेव । तथापि राजाज्ञया वक्तव्यमिति विवृणोमि । त्वदीये राज्ये सर्वासु प्रजासु प्रकृत्या नीरोगदृढतरदेहासु "रोगपीडितोऽहम्" इति न कोऽपि वैद्यालयं प्रविशति । तथा च सौजन्यात् सर्वेषु प्रजावर्गेषु विवादाभावात् धर्मालयः कुत्रास्तीत्येतदपि न कोऽपि जानाति । सर्वत्र चौर्याभावात् नगरपालकानां तदधिकारिणां वा नैव श्रमः ।

महाराजः—किमयं दोषो वा गुणो वा?

विदूषकः—दोषो वा गुणो वेति विमर्शने वयमसमर्थाः । परन्तु महाराजस्य शासनान्तर्गतेषु राजकीयविविधकार्यालयेषु यः कोऽपि कार्यालयः स्वकर्तव्याभावात् दुर्बलश्चेत् स्थापयितुरपकीर्तिं जनयतीति ममाभिप्रायः ।

महाराजः—(समन्दस्मितम्) एतादृशी ममापकीर्तिरितोऽपि जगति सम्यगेधताम् ।

विदूषकः—केवलं कोशव्ययकराः एतादृशाः कार्यालया एव अनावश्यका इति मे निर्णयः ।

महाराजः—नैतेऽनावश्यकाः । तत्र कर्तव्यमस्तु वा मास्तु वा । इमे सर्वे राज्याङ्गेषु अत्यन्तं प्रधानभूताः । अपरिचितराजनीतेस्ते वचनमिदमसाम्प्रतम् ।

विदूषकः—तथा किम्? तर्हि अनभिज्ञेन मया गुणोऽपि दोष इति परिगणितश्चेत् तत्क्षम्यतां महाराजेन । (इत्युपविशति)

(सर्वे प्रहसन्ति)

महाराजः—किमन्यः कश्चिद्विवक्षुरस्ति? (कञ्चित् कालं प्रतीक्ष्य) सर्वैः अस्मत्परिपालनक्रमोऽनुमत इति भवतां मौनमेव सूचयति ।

भवतु नाम । भगवदर्पितानां पुष्पफलताम्बूलादीनां विनियोगानन्तरं सभेयं विरमति ।

(ततो राजाशीर्वादपुरस्सरं सर्वेषां भगवत्प्रसादविनियोगः क्रियते) (महाराजः समुत्तिष्ठति, सर्वेऽप्युत्तिष्ठन्ति)

वन्दिमागधाः—विजयतां विजयतां सवितृकुलतिलको महामहिमा शिबिसार्वभौमः ।

(सपरिवारो महाराजः सभ्याश्च निष्क्रान्ताः)

इति प्रथमोऽङ्कः

---

अथ द्वितीयोऽङ्कः

(ततः प्रविशति रत्नाभरणपूर्णपेटिकां बिभ्रता सेवकेनानुगम्यमानः स्थूलकायः तुन्दिलो वणिग्वरः)

वणिक्—(सेवकमवलोक्य) रे! कुट्टक ! द्रुतमेहि । महाराजेन नियुक्तोऽवसरः सन्निहित इव ।

कुट्टकः—अयमहं स्वामिनः पदवेगमनुसरन्नेवागच्छामि ।

वणिक्—धिङ्मूर्ख ! मत्तः पुरतः शीघ्रं गच्छन् मम गमनवेगौत्सुक्यं वर्धय ।

कुट्टकः—तथा (इति गमनवेगेन पुरः प्रयाति)

वणिक्—रे! मूढ ! मामुत्सृज्यैव धावसि किम् ?

कुट्टकः—न हि न हि । किन्तु यथादिशति स्वामी । (इति मन्दमनुसृत्य गच्छति)

(प्रविश्य विदूषकः वणिजं दृष्ट्वा)

विदूषकः—अस्मन्मनोरथः प्रत्यक्षीभूतः ।

वणिक्—भो गोकर्ण ! कस्ते मनोरथः?

विदूषकः—भवद्दर्शनमेव ।

वणिक्—तर्हि ममावलोकनेनैव त्वं कृतकृत्यः किम्?

विदूषकः— अथ किम्? एवं सम्पूर्णवपुषं पुरुषमवलोकयतो मे मनोरथोऽपि सम्पूर्ण एव।

वणिक्—तर्हि! सम्पूर्णमनोरथश्चेत् द्रुतमपसर। ममापि महाराजस्य प्रासाद-गमनवेला सन्निहिता।

विदूषकः—भो रत्नाकर! किञ्चित्कृतावकाशो मम वचनमवधारय।

वणिक्—तर्हि द्रुत ब्रूहि। वेलातिक्रामति।

विदूषकः—भो रत्नाकर! महाराजसन्दर्शनाय का वेला ते निर्दिष्टा?

वणिक्—घण्टाद्वयताडनावसरः।

विदूषकः—पश्य, इदानीं सपादद्वादशघण्टापरिमितैव वेला। किमेवं मनसि ते त्वरायाः क्षोभः?

वणिक्—तर्हि समाश्वसितोऽस्मि। मन्दगमनोऽहमिति प्रागेव गृहात्प्रस्थितः महाराजस्य प्रासादासादनसमयो दूरे वर्तते। कृतोपकार इवास्मि भवता।

विदूषकः—तर्हि प्रत्युपकारकरणे सिद्धो भव।

वणिक्—भो गोकर्ण! मया यत्साध्यं तत्ते करगतमित्येव विद्धि-अतः त्वदभिलषितं ब्रूहि।

विदूषकः—भवतु नाम, पश्चाद्वच्मि। किमर्थमिदानीं महाराजेनाहूतस्त्वम्?

वणिक्—आज्ञप्तोऽस्मि महाराजेन "भो रत्नाकर! प्रातरुपायनार्पणेन दर्शितादरान् सर्वान् सामन्तनृपतीन् अन्यांश्च मान्यान् अनर्घरत्नाभरणैः सत्कर्तुमिच्छामि। अतः अत्युत्तमानि महार्घाणि केयूरकटकग्रैवेयकादीनि नानारत्नाभरणा-न्यादाय आगन्तव्य"मिति।

विदूषकः—भो रत्नाकर! राजसन्दर्शनकालावधिः महान्वर्तते किल? तन्ममापि किञ्चित्प्रदर्शय रत्नाभरणजातम्।

वणिक्—(स्वगतम्) महाराजसन्दर्शनार्थं प्रस्थितस्य मे पुरतोऽयम् एको ब्राह्मणो-

ऽभिमुखीभूतः। तदत्र किञ्चिदुपविश्य पश्चात् प्रयामि । (प्रकाशम्) भो ब्राह्मण! यदि तथा कुतूहलं ते दर्शयामि । अत्र शिलासने उपविशावः (इति सेवकशिरसः पेटिकामवतार्य शिलासनमध्ये निधाय विदूषकेण सहोपविश्य पेटिकाकीलिकामपनीय कवाटमुद्घाटयति)

विदूषकः—(विलोक्य, साश्चर्यम्) अहो! न पारयामि द्रष्टुम् अद्भुतप्रभमिदं रत्नाभरणजातम्। (चक्षुषी परिमृज्य) हन्त! दशावन्धीकृते इवास्य तेजःपुञ्जेन । गगनान्नक्षत्रगुच्छमाकृष्य. पेटिकान्तर्न्यवेशयः किम्? महार्घाणीमानि रत्नाभरणानीति निश्चिनोमि।

वणिक्—भोः किं तवापि रत्नपरीक्षा विदिता?

विदूषकः—अथ किम्, विदितैव।

वणिक्—तर्हि चतुरतरः किल त्वं सर्वविद्यासु!

विदूषकः—भो वणिग्वर! वणिग्जनसाधारणीं बहिरवयवालङ्काराणां रत्नानां परीक्षां त्वं जानासि। अहं तु अन्तर्जठरमलङ्कुर्वतो भक्ष्यरत्नवृन्दस्य परीक्षां जानामि।

वणिक्—अलं परिहासेन । किमुद्दिश्य मत्सकाशमागतोऽसि ।

विदूषकः—सुवर्णहारमेकं भवत्सकाशात् क्रेतुम् ।

वणिक्—तर्हि भार्यया साग्रहं पीडितस्त्वमिति मन्ये ।

विदूषकः—तथा न । प्रातःसभायां सर्वे महाराजाय स्वानुरूपं सम्भावनोपायनं भक्तिपुरस्सरं समार्पयन् । अहं तु तदुचितं महार्घं वस्तु समर्पयितुमशक्तः, तदा तूष्णीमेवाभवम् । मध्याह्नात् परमेकान्ते निषण्णाय महाराजाय किमपि समर्पयामीति निश्चित्य त्वत्तः सुवर्णहारं क्रेतुं समागमम्।

वणिक्—प्रियतमेन त्वयार्पितं सर्वं महाराजाय प्रियतममेव स्यात् । तदिदं गृहाण स्वर्णाभरणम्। (इति पेटिकातः स्वर्णहारमादाय विदूषकस्य हस्तेऽर्पयति) ।

विदूषकः—(गृहीत्वा सानन्दम्) अस्मच्छक्त्यनुरूपं प्रादाः । मूल्यमस्य यथाप्राप्ति समर्पयामि ।

वणिक्—भो गोकर्ण! राजगृहसम्पृक्तस्त्वं ममाप्ततमः किल? ततो यदा लभ्यते तदा देहि । भवतु त्वमपीदानीमेव राजभवनमागच्छसि किम्?

विदूषकः—नाहमधुनागच्छामि । मध्याह्नात् परमेकान्तगृहे स्थितं महाराजं द्रष्टुमिच्छामि । ततस्त्वं यथाकालं राजभवनं याहि ।

वणिक्—तर्हि त्वमधुना कथम्?

विदूषकः—अहमद्य गृहे भार्यायै स्वर्णहारममुं प्रदर्श्य अस्मिन् तस्याः लालसामुत्पाद्य किञ्चित्क्रीडामि ।

(इति निष्क्रान्तः)

(वणिगपि पेटिकां पिधाय सेवकेन वाहयन् निष्क्रान्तः)

इति शुद्धविष्कम्भः ॥

(ततो नानारत्नाभरणैरलङ्कृतमूर्तेः भगवतो लक्ष्मीनारायणस्य वीथी-यात्रोत्सवः मधुरवादित्रपुरस्सरं प्रचलति)

(वीथ्युत्सवसमाप्त्यनन्तरम्)

(ततः प्रविशन्ति नानावस्त्राभरणभूषिताः पण्डिताः)

साहित्यसर्वस्वसारः—हन्त! महाराजस्य वितरणशीलस्य महौदार्यं विद्वद्यो-ग्यतानिर्णयसामर्थ्यं च ।

तर्कार्कः—स्वयं सर्वशास्त्रपारङ्गतः किलास्मन्महाराजः! किञ्च तस्य इङ्गितज्ञता चातीवाश्चर्यावहा, यतो विद्वद्भिः सम्भाषणावसर एव जानाति तद्वैदुष्यसत्त्वम् ।

मीमांसावतंसः—विद्वद्गोष्ठ्यां परस्परं वादप्रसङ्गे स्वयमेव मध्यस्थ-पदमलङ्कुर्वन् समञ्जसेन निर्णयेन विपश्चितामपि चेतांस्याश्चर्योदन्वति निमज्जयति हि ।

सत्यदर्शनः—सुप्रसन्नमुखप्रभः प्रभुरसौ विपश्चितः सर्वानपि आत्माभिलषिताद-त्यधिकसम्भावनाद्रव्यदानेन परं परितोषयन् मधुरकटाक्षवीक्षणेन च समाकर्षति सर्वजनचित्तवृत्तिम् ।

साहित्यसर्वस्वसारः—सकलकल्याणगुणनिधेरस्य शिविसार्वभौमस्य गुण-निरूपणे विचक्षणेषु को वा दक्षः? तादृङ्महात्मा खलु अस्मन्महाराजः ।

तर्कार्कः—एतादृशि अस्मन्मण्डलेश्वरेऽपि गोकर्णः निर्भयं दोषारोपजल्पितैः प्रातः कलङ्कमङ्कुरयाञ्चकार ।

सत्यदर्शनः—तर्कशास्त्रनिपुणस्त्वमपि किमेवं वदसि? स तु गोकर्णः सामान्यः पुरुषो न भवति; परिहासवचसा महाराजाभिनन्दनार्थमेव तथावददिति मन्ये ।

तर्कार्कः—अत्र किमस्ति महाराजाभिनन्दनम्? यतस्त्वमविदितराजनीतिरिति महाराजेनैव गोकर्णः तिरस्कृतः किल? अत एव अवमाननात् अद्यतन-विद्वत्सम्भावनासभां नैव प्राविशदिति तर्कयामि ।

साहित्यसर्वस्वसारः—भो विद्वांसः! शृणुत मे वचनम् । बहुभिर्बहुधा आरोपितेन किं फलम्? महाराजस्तु कदापि तस्मै गोकर्णाय न कुप्यति । तं नैवावधीरयति च । अथवा कदाचित् कुपितोऽपि क्षणादेव गोकर्णेन केनापि परिहासचातुर्येण वशीक्रियत एव ।

इतरे पण्डिताः—सत्यमेव ते वचनम् । ब्रह्मबन्धुस्तादृगेव ।

(प्रविश्य राजास्थानोचितवेषो विदूषकः)

विदूषकः—मध्याह्नवेलायां निद्रा नाम अतीव सुखावहा, किन्तु तन्द्रीप्रसूश्च । अत एव "दिवास्वापं न कुर्वीत" इति यद्यपि वचनमस्ति, तथापि विश्रान्त्यै बहवो निद्रान्त्येव । तदहमपि किञ्चित् निद्रादेव्याः सम्पर्कसौख्यायाभिलषन् चिरं वञ्चितोऽस्मि तया । काले मां प्रबोधयितुं पत्नी प्रथममेव आदिष्टा । तथापि मम घोरनिश्वासोच्छ्वासघूत्कारशब्देन भीता सा समये नैव प्राबोधयत् । किं करोमि । भवतु, त्वरितं राजभवनं गच्छामि ।

(इति त्वरयाभिमुखागताननालोकनेन घर्षयन् प्रयाति)

पण्डिताः—(विलोक्य) गोकर्णोऽद्यास्मदभिमुखमागच्छति ।

विदूषकः—(पण्डितानालोक्य गमनवेगं परिहृत्य) (आत्मगतम्) सार्वभौमकोषगृहस्य भारापनयने सर्वेऽप्येते अग्रगण्याः । (प्रकाशम्) नमः कोविदेभ्यः । भवतः सर्वानद्य सार्वभौमः सम्मानितवानिति निश्चिनोमि । किमिदानीन्तनराजसभा निर्वर्तिता ?

पण्डिताः—अथ किम्, अचिरान्निर्वर्तिता । किन्तु हास्यकोविदस्यासान्निध्यात् किञ्चिन्न्यूनैवासीत् सभा ।

विदूषकः—भवतां पुरतः कोऽहम् ?

पण्डिताः—कुतो वा विद्वत्तल्लजेन राजसभाद्य विरहिता ?

विदूषकः—महत्या गाढनिद्रया वञ्चितोऽहम् । इदानीं महाराजं क्षमां प्रार्थयितुं राजभवनं गच्छामि ।

पण्डिताः—किं भवतापि महाराजसन्निधौ क्षमा प्रार्थनीया ? यत्त्वयि नित्यप्रसन्नः खलु सार्वभौमः ?

विदूषकः—भवतामनुग्रहात्तथैवास्तु । कुत्रेदानीं महाराजस्य सान्निध्यम् ?

पण्डिताः—अद्यतनसभापरिसमाप्त्यनन्तरं विश्रान्तिगृहमधितिष्ठतीति श्रुतम् ।

विदूषकः—तदनुगृह्णन्तु भवन्तः । महाराजसन्दर्शनार्थं व्रजामि ।

(इति निष्क्रान्तः)

(पण्डिताश्च निष्क्रान्ताः)

इत्युपविष्कम्भकः

(ततः प्रविशति माणिक्यमन्दिरान्तः विश्रान्तिशालायां सुखासनोपविष्टः देव्या सह महाराजः)

महाराजः—प्रिये ! महोत्सवैरानन्दमये अस्मिन् दिवसे अस्मदपेक्षया भवत्या एव महान् सन्तोषसम्भ्रम इति मन्ये ।

देवी—कथमिव ?

**महाराजः**—शृणु । उषःप्रभृति तदा तदा सभामध्ये आत्मनः महाराजत्वगौरवनियमपालनाय गाम्भीर्येण कीलित इव सनिर्बन्धमहमतिष्ठम् । त्वं तु यवनिकान्तः सखीभिः विनोदेन सर्वमुत्सवक्रमं विलोकमाना आसीः । अतस्तवैवोत्सवसम्भ्रमः ।

**देवी**—भवतु नाम । सर्वजनादरणीयम् अनितरसाधारणं सार्वभौमपदमासाद्य अनर्घं सम्माननवैभवमनुभवतो ह्यार्यपुत्रस्यापि प्रमोदोऽधिक एव ।

**महाराजः**—देवि ! तवाशयोऽयं केवलमविमर्शरमणीयः । महाराजपदगौरवानुभवो नाम निर्बन्धानुभवस्य पर्याय एव । आलोकितॄणां यथामनोविलासकरोऽयं तथा पूजापदस्थितानां न भवति । महाप्रभुत्वगौरवेऽपि लोकमोहकः नियमनिगडः क्लेशजनक एव ।

**देवी**—तर्हि आर्यपुत्रो महोत्सवैरद्य परिश्रान्त इति तर्कयामि ।

**महाराजः**—सत्यमेव ते वचनम् । इदानीं वपुषि श्रान्त्या किञ्चित् शैथिल्यमिवास्ति ।

**देवी**—अहमस्य कारणान्तरमपि तर्कयामि ।

**महाराजः**—किं तत्कारणम् ?

**देवी**—सामन्तनृपालादिभ्यः सर्वेभ्योऽपि अनुग्रहपूर्वकं सम्भावनाद्रव्यमपरिमितं कराभ्यामुद्धृत्य बहुशः प्रयच्छतः आर्यपुत्रस्य दोष्णोः ग्लानिरिति ।

**महाराजः**—(विहस्य) हन्त ! रणाङ्गणे चापकर्षणात् बाणप्रयोगाच्च श्रमजनकोऽयं किल ?

**देवी**—अत्र श्रमविवरणं न प्रधानम्, किन्तु आर्यपुत्रस्य वितरणमहत्त्वकथनमपि ।

**महाराजः**—देवि ! अहं तु न किमपि महत्त्वमत्र पश्यामि । सर्वेभ्यो यावत्प्रदातव्यं तावदेवार्पितम् ।

**देवी**—चामरग्राहिण्या मधुमञ्जर्या भणितम्—

**महाराजः**—किमिति ?

देवी—सभासदः सर्वे स्वाभिमतादत्यधिकसम्भावनाद्रव्यप्राप्त्या विस्मयानन्दयोः पारमपश्यन्तः परस्परं महाराजं प्रशंसन्तो ययुरिति ।

महाराजः—मया तथा न किमपि कृतम् । परन्तु तत्र सर्वेषां मनस्तुष्टिरेव हेतुः ।

देवी—सवितृकुलतिलकः किल आर्यपुत्रः !

महाराजः—कोऽत्र वंशग्रहणे विशेषः ?

देवी—'सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः' ।

महाराजः—साधु, प्रिये ! साधु । स्तुतिचातुर्ये वन्दिमागधेभ्योऽपि नैपुण्यं प्रदर्शयसि ।

देवी—यः कोऽपि भवदीयान् वास्तविकान् गुणान् वर्णयितुं प्रवर्तते सः आर्यपुत्रे महापराधमेव करोति ; यतः सर्वोऽपि जनः तत्राशक्त एव किल ?

महाराजः—स्तुतिनैपुण्यस्य परा काष्ठेयं वाणी । तद्भवतु इदानीं यया कयापि क्रीडया कालं नयावेत्यभिलषामि ।

देवी—कस्यां क्रीडायाम् आर्यपुत्रः समुत्कण्ठते ?

महाराजः—देव्यै या रोचते । किमक्षैः क्रीडावः ?

देवी—सा क्रीडा बहुशः प्रवर्तिता हि ।

महाराजः—तर्हि चतुरङ्गक्रीडनम् ?

देवी—तद्दीर्घकालावधिकमिदानीं मास्तु ।

महाराजः—उत चित्रपत्रखेलनम् ?

देवी—तदधुना न मे हृदयाह्लादकरम् ।

महाराजः—तर्हि त्वमेव कामपि क्रीडां निर्दिश ।

देवी—आर्यपुत्रस्तु इदानीं परिश्रान्त इव सन्दृश्यते किल । तदियं दासी आर्यपुत्रस्य चरणसेवया आत्मानं विनोदयितुमिच्छति । अनन्तरं यया कयापि क्रीडया मनस्तोषयाव ।

तदद्य—	बाहू ते चरणयुगं यथासुखं किं
संवाह्य व्यजनवरेण वीजयामि ।
पानीयं मधुरतरं किमर्पयामि
स्वामिंस्ते श्रमहरणाय किं करोमि ॥

महाराजः—देवि ! प्रेमातिशयोदिता ते वाण्येव मम क्लान्तिमपनयति । तदिहैकासने समुपविश । परिजना एव मामादरेण उपचरन्ति किल ।

देवी—तर्हि परिजनवर्गैर्लब्धं सुकृतमपि मन्दभाग्याया मे दुर्लभमिति मन्ये ।

मराहाजः—देवि, तथा न, पश्य—

कोमलशिरीषमृदुलं
गात्रं ते सुतनु ! जात्वपि क्लेशम् ।
सहते न किल, ततोऽहं
नेच्छामि करेण तेऽद्य सत्कारम् ॥

देवी—भो वल्लभ, भवदङ्घ्रिसेवाप्रतिबन्धकेन अलमनेन मे शरीरमार्दवेन —अथवा सेवाकौशल्ये परिजन इव त्वं नैव समर्थेत्यभिमतमार्यपुत्रस्य वचनमिदम् ।

महाराजः—प्रिये, किमेवं वदसि ? शृणु—

सेवकजनशतरचितो-
ऽप्युपचारः किल तथा न सुखजनकः ।
वल्लभया सरसगिरा
प्रेम्णा कृतः स एव यथा मधुरः ॥

देवी—हन्त ! तर्हि कृतानुज्ञेवेदानीम् आर्यपुत्रस्य चरणसेवायां दासीयम् ।

महाराजः—(समन्दस्मितम्) वल्लभे ! अपरिमितस्य प्रेमभरस्य स्वरूपं तु प्रेमिणोः परस्परमेवमेव प्रतिकूलप्रवृत्तिमेव जनयति । पश्य, यतोऽहं त्वां

सर्वथा आयासयितुं नेच्छामि । त्वं तु कथमपि मदुपचरणाय कृतप्रयत्ना मां निर्बध्नासि ।

देवी—आर्यपुत्र! उभयोरपीदृशी मनःप्रवृत्तिरेव अत्यन्तं रमणीया खलु!

महाराजः—सत्यं ते वचनम् । ततः त्वदिच्छानुसारं मामुपयुङ्क्ष्व ।

देवी—(समन्दस्मितम्) हन्त! स्वाधीनजनेऽपि आर्यपुत्रस्य शालीनता सर्वजनानुकम्पनीया हि । (इति व्यजनसेवां करोति)

महाराजः—किमद्यापि नर्मसचिवो गोकर्णो नायातः?

देवी—इदानीमेव किं नर्मसचिवस्यावश्यकता?

महाराजः—मनस्समुल्लासाय सोऽपि समीपे वर्तयितव्य एव ।

(ततः प्रविशति विदूषकः)

विदूषकः—(दूरे स्थित्वा) महाराजानुकम्पोपजीवी ब्राह्मणोऽयं प्रभुदर्शनाय स्वाम्यादेशं प्रतीक्षते ।

महाराजः—गोकर्णस्याप्यवरोधप्रवेशे किमस्त्युपरोधः । तदेह्येहि नर्मसचिव!

विदूषकः—मिथुनप्रियालापावसरेऽप्यद्य अवरोधे किमविरोधमस्मदागमनम्?

महाराजः—अलं परिहासेन । आगम्यताम् । आसनमिदम् । उपविशतु प्रियवयस्यः । (देवीमुद्दिश्य) देवि! अलं व्यजनसेवया । त्वमपीदमासनमलङ्कुरु । (इति बलादुपवेशयति)

देवी—(उपविश्य) अहो आर्यपुत्रस्य प्रेमभरो नर्मसचिवे! यद्दर्शनमात्रादेव सुहित इव प्रियतमः ।

विदूषकः—(उपविश्य उत्तरीयवस्त्राञ्चलेन मुखमामृज्य) महाराजदर्शने किञ्चित्कालातिपातदोषो घटित इति प्रभोः क्षमां प्रार्थये ।

महाराजः—कुतश्चिरायितं प्रियसुहृदा ।

विदूषकः—अस्मिन् दिवसे विशेषभक्ष्यभोज्यास्वादनेन अधिककालविश्रान्तिरपेक्षिता । किञ्च (इत्युक्त्वा तूष्णीं भवति) ।

महाराजः—किमन्यत्? उच्यताम्।

देवी—मत्पुरः कथयितुं विप्रवरो विशङ्कते।

विदूषकः—तथा न किमप्यस्ति। परन्तु महाराजस्य मङ्गलजन्मदिवसेऽस्मिन् शुद्धान्तेऽपि कस्याप्युत्सवविशेषस्य भङ्गो ब्राह्मणेनानेन मा भूदिति च।

महाराजः—अलमनेन असम्भवप्रसङ्गप्रस्तावपरिहासेन। कुतो वा माध्याह्निक-सम्भावनागोष्ठीं नालङ्करोति स्म प्रियवयस्यः? तवासान्निध्यात् भवदीयं संमाननद्रव्यं कोशाधिकारिवशे निवेशितमस्ति।

विदूषकः—प्रातरेव लक्ष्मीनारायणमन्दिरे महाराजेन अहमनर्घेण संमानेन अनुगृहीतः किल!

महाराजः—अहो! तर्हि नर्मसखः मयि कुपित इति मन्ये। अत एव माध्याह्निक-गोष्ठी भवता विरहिता।

विदूषकः—शान्तं पापम्, शान्तं पापम्। सार्वभौमसन्निधौ कोऽहं कीटकल्पः? अहमेवेदानीमागतः किल! किन्तु प्रातः सभायामात्मनो दोषविवरणात्मिकां विवक्षां यः कोऽपि प्रकटयत्विति महाराजेन सर्वे सभासदः सन्दिष्टाः। तां राजाज्ञां सभ्येषु कश्चिदपि न पर्यपालयत्। महाराजाज्ञा वन्ध्या मा भूदिति विचिन्त्य अहमुत्थाय भवतः सद्गुणान् दोषरूपेण प्राकाशयम्। तदनुचितमभूद्वा, न जाने।

महाराजः—साधु सखे! साधु। सम्यगाचरितं त्वया। एवं नीतिनिपुणं त्वां तदाहमविदितराजनीतिस्त्वमिति प्रत्यादिशम्। तन्मर्षयतु प्रियवयस्यः।

विदूषकः—प्रभो! तथा न। किन्तु मत्प्रत्याख्यानेऽपि काचिन्महती राजनीतिरन्तर्गतास्ति।

महाराजः—कात्र राजनीतिः?

विदूषकः—महाराजस्य शासनप्रभावः प्रियसुहृदि नर्मसचिवेऽप्येकरूप एवेति सर्वे जानन्ति।

देवी—अहो! ब्राह्मणतल्लजस्य बुद्धिवैशिष्ट्यम्! यतः सर्वत्र वचसि किमपि महत्त्वकल्पनम्।

महाराजः—अत एवास्य विरहः क्षणमपि मे दुस्सहः।

विदूषकः—परमनुगृहीतोऽस्मि सार्वभौमेन। (इत्युत्थाय) किमप्यपूर्वमुपायनमिदं प्रतिगृह्णातु कृपया मण्डलेश्वरः। (इति रजतकरण्डकं महाराजहस्तेऽर्पयति)

महाराजः—(गृहीत्वा) किमत्रास्ति?

विदूषकः—अत्रेदं जिह्वारुचिपाटववर्धकमौषधम्। महाराजेनास्वाद्यमेतत्।

महाराजः—किं नामास्य?

विदूषकः—उपस्कृतः कटुचिपिटकः।

महाराजः—भवतु नाम। कोऽत्र विशेषः?

विदूषकः—किञ्चिदास्वाद्यतां देव्या सह महाराजेन।

महाराजः—(करण्डात्पाणिना चिपिटकमुद्धृत्य देव्यै दत्त्वा स्वयमप्यास्वादयति) अहो! जिह्वासौहित्यातिशयप्रदमिदम्। कुत्र निर्मितमेतत्?

विदूषकः—अस्य निर्माणे गृहिणी मे निपुणधिषणेति गण्यते।

देवी—साधु, विप्रवर! साधु! त्वमेव धन्यः, यतः सुशिक्षितेव ते गृहिणी सर्वकार्येषु। चिपिटकयोग्यता तु वाचामगोचरा।

महाराजः—साधु वयस्य! साधु। रसनेन्द्रियाकर्षकमिदम् (इति पुनः करण्डात् चिपिटकमुद्धरति चिपिटकेन सह स्वर्णहारोऽपि निर्गच्छति।)

महाराजः—(सविस्मयम्) हन्त भोः! किमेतत्?

विदूषकः—महाराजसन्निधौ दुर्विधेन ब्राह्मणेनार्पितमिदं सविशेषमुपायनम्।

महाराजः—(समन्दस्मितम्) उपायनविशेषमात्रणैव वयं सन्तुष्टाः। अमुं स्वर्णहारं तु ब्राह्मण्यै वितर।

विदूषकः—महाप्रभो! तथा न। सुवर्णहारमप्यङ्गीकृत्य अनुगृह्णातु समाश्रितजनमिमं महाराजः।

महाराजः—सखे! शृणु मद्वचनम् । सुस्वादुचिपिटकप्रेषणार्थमिदं मया प्रदत्तमिति ब्राह्मण्यै समर्पय । (इति विदूषकहस्ते हारमर्पयति)

विदूषकः—(गृहीत्वा) इतः प्रागेव अमुं हारं गृहिण्यै प्रदर्श्य त्वदर्थमानीतमिदं भूषणमिति प्रतारणवचसा तां प्रालोभयम् ।

देवी—लोके एवमेव भूषणप्रिया भार्याः प्रतारयन्ति किल पुरुषाः !

विदूषकः—महाराजानुग्रहेण तदेव परिहासवचनमिदानीं तथ्यमेवाभूत् ।

महाराजः—तथा न । शृणु सखे! त्वं महाब्राह्मणः किल! अत एव भवादृशानां विप्राणां वाचमर्थोऽनुधावति । तस्मादेव पूर्वमेव त्वया तथा भणितम् ।

विदूषकः—तत्रापि महाराजप्रभाव एव निदानम् । (इत्युपविशति)

महाराजः—(देवीमुद्दिश्य) वचनान्तरैः क्रीडासङ्कल्पस्त्वयापवाहितः ।

देवी—आर्यपुत्रस्योत्कण्ठां नाहमपवाहयामि । किन्तु का वा क्रीडेति विचिकित्सा ।

महाराजः—त्वयैव क्रीडानिर्देशः कार्यः; यतोऽस्मदुक्ताः सर्वाः क्रीडा भवत्या अननुमता ननु!

विदूषकः—काः क्रीडा निर्दिष्टा महाराजेन ?

महाराजः—अक्ष-चतुरङ्ग-चित्रपत्रक्रीडासु या काचित् ।

विदूषकः—(स्वगतम्) श्वस्तृतीये यामे "चलनचित्रदर्शनार्थमस्माभिर्गन्तव्यम्, अतो भवानपि सज्जो भवतु" इति पूर्वेद्युरेव महाराजेनादिष्टम्। ममापि चलनचित्रदर्शने महत् कौतुकमस्ति । अतो महाराजस्य मनस्तत्रैव प्रवर्तयामि । (प्रकाशम्) अन्याश्च बह्व्यः क्रीडाः सन्ति किल! तासूभयोरपि या क्रीडाभिमता सास्तु । अथवा, देव्याः क्रीडैवानभिमता चेत् मास्त्वेवेदानीम् । चलनचित्रावलोकनाय पूर्वेद्युरे चित्रशालाधिकारिणः सन्दिष्टाः किल! अतस्तत्रैव गच्छाम इ। ममाशयः ।

महाराजः—बाढम्, पूर्वेद्युरेवमादिष्टम्, इदानीं तु वपुषि पाटवाभावात् बहिः कुत्रापि गन्तुं नाभिलषामि । अत्रैव क्रीडया कालं नयामेति सङ्कल्पः ।

विदूषकः—(स्वगतम्) हन्त! भग्नो मे मनोरथः। भवतु। पुनरपि समयोचितेन वचसा मदिच्छां पूरयामि। (प्रकाशम्) तर्हि! देव्यधीनः क्रीडानिर्णयः।

देवी—ममाभिमतं तु यया कयाप्यपूर्वक्रीडया दिवसावशेषं सफलयाम इति ।

महाराजः—अतस्त्वमेव क्रीडामपि निर्दिश ।

देवी—सर्वाः क्रीडा भूयोऽप्युपभुक्ता एव । किञ्च आर्यपुत्रस्येदानीं विश्रान्तिरप्यावश्यकी । अतो मदीयस्य महाश्वेताभिधानस्य कपोतस्य आर्यपुत्रवर्धितस्य मेघोदयाभिधस्य पारावतस्य च डयने पणबन्धनिबन्धनपूर्वकं खेलनं प्रवर्तयामः ।

महाराजः—देवि! सम्यक् चिन्तितं भवत्या । तथैवास्तु । अनयोर्डयने नियमप्रकारः कः?

देवी—इतो विमुक्तयोः महाश्वेत-मेघोदययोः यो गगने उपरि दूरं गच्छति, चिरं डयते च, स विजयी। यस्त्वशक्त्या प्रागन्तरिक्षादवतरति, स पराजित इति।

महाराजः—साधु प्रिये साधु । अत्र पणबन्धश्च कः?

देवी—मदीयो महाश्वेतः पराजितश्चेत् मधुरतरालापां परिहासकथनचतुरां विविधप्रबन्धबन्धनधुरन्धरां रसिकरञ्जनीनामिकां प्रियतमां लीलाशुकीमार्यपुत्रायार्पयामि । अत्र आर्यपुत्रस्य पणबन्धस्तु—

महाराजः—असुरसमरावसरे यक्षाधिपतेः साह्यकरणप्रसङ्गे कृतज्ञेन तेन समर्पितः स्वर्णगरुत् सुधाकरो नाम राजहंसः पणीक्रियते मया । नर्मसचिवोऽत्र किं भणति?

विदूषकः—पणबन्धानुबन्धनक्रीडनमेव नोचितमिति ममाशयः, यतोऽत्र बहवो दोषाः सन्ति । पश्यतु महाराजः—

स्पर्धा हि सिद्धा पणबन्धने स्यात्
दुराग्रहस्तेन सुहृत्त्वभङ्गः ।

क्रमेण कोपः कलहश्च पश्चात्
क्रीडासु तस्मान्न पणो हि युक्तः ॥

महाराजः—पणबन्धविरहिता क्रीडा निस्सत्त्वैव । अतः पणबन्धनमवश्यं कल्पनीयमेव ।

विदूषकः—(सवितर्कं किञ्चिदालोच्य) देव्याः सन्निधावपराधक्षमां संप्रार्थ्य किमपि वक्तुमिच्छामि ।

देवी—मनसि निगूढं स्फुटं प्रकटयतु महाब्राह्मणवरः ।

विदूषकः—(महाराजस्याननं मुहुः पश्यति)

महाराजः—सखे ! त्वन्मनोगतं सुविशदं ब्रूहि । तेन ते न कापि हानिः ।

विदूषकः—तर्हि शृणु प्रभो-

क्रीडाविधौ न हि पणं ललनाजनेषु
कुर्यात् पुमान् यदि जितो ननु लाघवं स्यात् ।
जेत्रे न कीर्तिरबलाविजयी किल त्व-
मित्थं वदन्त्यसहनाः स्वपणप्रदाने ॥

अन्यच्च कपोताधीनजयपराजयौ च युवां भवथः किल । अतश्चलनचित्रदर्शनार्थं गमनमेव प्रशस्तमिति विज्ञापयामि ।

महाराजः—(अहो) ! नर्मसचिवस्य चलनचित्रदर्शनोत्कण्ठा उन्मत्तकेव दृश्यते । भवतु, शृणु सखे देव्या सन्दिष्टमवश्यमादरणीयं हि । किञ्चाहमपि राजगृहादन्यत्रेदानीं गन्तुं नाभिलषामि । एतदप्यवधारय ।

प्रणयकलहः प्रेमाधिक्यं मुहुः प्रमदाजने
प्रचुरयति हि प्रायः पुंसः परस्परकुर्दने ।
अपि च ललनाचातुर्याद्वा जितस्य कुतो व्यथा
न किल नियतः क्रीडायां वा रणेऽपि जयः क्वचित् ॥

इदमपि मनसि निधेहि; यत् आत्मना परिवर्धितैः सुशिक्षितैः कुक्कुटमेषादिभिः खेलयित्वा स्वजयपराजयाङ्गीकरणं लोके कुर्वन्ति किल? अतो देव्यभिमतमेवास्मदभिमतम् ।

विदूषकः—(स्वगतम्) हन्त! व्यर्थः प्रयत्नः। (प्रकाशम्) तर्हि! भवदभिमतमस्मदभिमतमेव।

देवी—महाब्राह्मण! मा चिन्तय। अत्र निर्णयाधिकारे आर्यपुत्रानुमत्या भवन्तमेव मध्यस्थपदालङ्करणे नियोजयामः।

विदूषकः—मैवं मैवम्। महाराजपक्षीयोऽयमिति कदाचित् शङ्काकरणं स्यात्।

देवी—अहमेवात्रभवन्तमसूचयं किल। तद्विस्रब्धं मध्यस्थपदमलङ्करोतु विप्रोत्तमः।

महाराजः—किमेवं चर्चापरम्परया कालक्षेपः? तद्भवतु इदानीं सर्वैः सर्वमनुमतमेव। कः कोऽत्र भोः!

(प्रविश्य कञ्चुकी)

कञ्चुकी—आज्ञापयतु महाराजः।

महाराजः—भो चारुचर! देव्यादिशतीति महाश्वेतं कपोतराजमानेतुं मधुमञ्जरीं ब्रूहि। तथा च मेघोदयाभिधमस्मत्पारावतवतंसमभ्यानीय उभावपि कलरवौ चन्द्रशालाया ज्योत्स्नोपकार्यावितर्दिकां प्रापय।

कञ्चुकी—यदादिशति महाराजः (इति निष्क्रान्तः)

महाराजः—देवि! वयमपि चन्द्रशालोपकार्याप्राङ्गणं प्रविशाम। सखे, एह्येहि। (इति निष्क्रान्ताः सर्वे)

॥ इति द्वितीयोऽङ्कः ॥

## अथ तृतीयोऽङ्कः

(ततः प्रविशति पूजाद्रव्यभाजनहस्तो राजगृहज्यौतिषिकः)

ज्यौतिषिकः—अहो! ग्रहाणां संचरणात् तत्तत्स्थानगतिफलस्य महत्त्वम्! हन्त! सुरासुरेश्वरा अपि तदतिलङ्घितुं न प्रभवन्ति। पश्यत। नक्षत्रेशग्रहपत्योरपि शशिदिवाकरयोर्ग्रहपीडनम्, किं पुनर्नराणाम्!

तथा हि—

सुखिनमसुखिनं च द्रव्यपूर्णं दरिद्रं
निपुणधिषणमज्ञं सार्वभौमं वनीपम् ।
रचयितुमपि शक्ता क्रूरदृष्टिर्ग्रहाणां
भवति शुभकरी सा सुप्रसन्ना यदि स्यात् ॥

अस्मिन् दिवसे तु महाराजजन्मदिनस्मारकोत्सवसम्भ्रमः अभूतपूर्वः परिदृश्यते । तदर्थमिदमलङ्कृतं राजभवनमपि भव्यदर्शनं विभाति ।

तथा हि—

माल्यैः सुगन्धिकुसुमैरपि चित्रवर्णैः
चीनांशुकैः कलिततोरणपङ्क्तिपूर्णः ।
चक्राश्चितध्वजपटोच्छ्रितकेतुदण्डः
प्रासाद एष परिकर्मविशेषरम्यः ॥

किञ्च सर्वाः प्रकृतयोऽपि महाराजस्य शुभोत्सववासरोऽयमिति हर्षोत्कर्षनिर्भराः सुविशेषालङ्काराः तत्र तत्र विहरन्ति । एवं विद्यमानेऽपि सार्वभौमस्य ग्रहगतिरवलोकिता चेत्, तस्य किं वा अनिष्टमुत्पद्यत इति भीतिः मे हृदये क्षोभं जनयति । अथवा अतिस्नेहः पापशङ्की किल ! तेनैव ममैवं भीतिः । यतः एतावत्पर्यन्तं महाराजो भगवदनुग्रहेण क्षेमतः सुखितोऽस्ति । इतश्च सदुदर्क एव भूयात् ।

(प्रविश्य परिगृहीतदूरदर्शकयन्त्रा मधुमञ्जरी)

**मधुमञ्जरी**—(दैवज्ञमवलोक्य) अहो ! राजकुलदैवज्ञः सत्यदर्शनः ! मानयाम्येनं माननीयम् । (इत्युपसृत्य) नमो दैवविदग्रण्याय । (इति प्रणमति)

**सत्यदर्शनः**—वत्से ! मङ्गलभाग्भव । उत्तिष्ठ, मधुमञ्जरि !

**मधुमञ्जरी**—(उत्थाय) भवद्दर्शनात् चिरन्तनसुकृतं फलितमिदानीम्

**सत्यदर्शनः**—भवतु नाम । किमिदं तव हस्ते ?

**मधुमञ्जरी**—दूरदर्शकयन्त्रमिदं महाराजादेशात् तत्सकाशं नीयते ।

सत्यदर्शनः—किमनेनाधुना महाराजस्य कार्यम् ?

मधुमञ्जरी—देव्या संप्रार्थितो महाराजः अपूर्वक्रीडया मनो विनोदयितुं कपोतडयनक्रीडां प्रवर्तयति । गगने दूरं गतं वीक्षितुमिदमुपयुज्यते । पूज्यतमस्य गमनमिदानीं कुत्रेति जिज्ञासुरस्मि ।

सत्यदर्शनः—धर्मशीलस्य अस्मन्महाराजस्य विपन्निवारणपूर्वकं शुभोदयं प्रार्थयितुं नवग्रहपूजां चिकीर्षुः राजोद्यानगतं नवग्रहदेवालयं प्रति प्रस्थितोऽस्मि ।

मधुमञ्जरी—किमिदमकाण्डे नवग्रहपूजनम् ?

सत्यदर्शनः—त्वं महाराजस्याप्ततमा गुप्तचेटी किल ! तदिदं शृणु रहस्यम् । अद्य महाराजस्य अङ्गारकग्रहदृष्टिः भूयसी क्रूरैव दृश्यते । परन्तु सूर्याचन्द्रमसोः वीक्षणमतीव शुभप्रदमस्ति । शुक्रग्रहस्तु एकादशस्थाने वर्तते । एतेन महाराजस्य भूयांसि श्रेयांसि इतोऽपि प्रवर्त्स्यन्ति एव । एवमपि अङ्गारकग्रहदोषस्तु साम्प्रतं महाराजवपुषः रक्तपातपर्यन्तां विपदमुत्पादयितुमपि प्रभवति । अतोऽङ्गारकग्रहस्य विशेषपूजामर्पयितुमुद्युक्तोऽस्मि ।

मधुमञ्जरी—(सभयम्) हन्त! शान्तं पापम् प्रतिहतमस्त्वमङ्गलम् । आर्य ! शृणु । अस्मिन् दिवसे महाराजो मध्याह्नात् प्रभृति किञ्चिदस्वस्थ इव दृश्यते ।

सत्यदर्शनः—भगवदनुग्रहेण एतावतैव अङ्गारकग्रहदोषस्य परिहारोऽस्तु महाराजस्य ।

मधुमञ्जरी—अस्मदधिपतिः सततमपि भगवति लक्ष्मीनारायणे न्यस्तसमस्तात्मभरः तदेकपरायणो वर्तते किल ! शरणागतरक्षकः स एव लक्ष्मीनारायणः स्वाश्रितमेनं रक्षत्येव ।

सत्यदर्शनः—भो तत्त्वाभिज्ञे! सत्यं ते वचनम् । स एव भगवान् लक्ष्मीपतिः सततं परिरक्षत्यस्मन्मण्डलेश्वरम् । तथापि क्रूरग्रहदोषशान्तिरवश्यं

कर्तव्यैव खलु ! किञ्च भोः ! शृणु । अमुं वृत्तान्तं कस्यापि मा प्रकटय । चतुष्कर्ण एवास्त्वयं विचारः ।

**मधुमञ्जरी**—किमेतदपि शिक्षणीयं मधुमञ्जर्यै ? परन्तु भवदुक्तिश्रवणात् प्रभृति महाराजदर्शनाय त्वरयति मे हृदयम् । तदनुजानीहि माम् ।

**सत्यदर्शनः**—वत्से! शुभमस्तु । याहि राजगृहम् । अहमपि प्रकृतपूजा-कार्यनिर्वहणाय देवमन्दिरं गच्छामि । (इति निष्क्रान्तौ)

इति विष्कम्भकः

(ततः प्रविशति चन्द्रशालोपकार्याधिष्ठितो मितपरिवारबन्धुजनपरिवृतो देव्या विदूषकेण च महाराजः)

**महाराजः**—(चारुचरेणानीतौ कपोतावालोक्य) कञ्चुकिन्! विमुञ्चैतौ मत्सकाशे ।

**कञ्चुकी**—यथादिशति महाराजः (इति महाराजसमीपे कपोतौ निवेशयति)

(तौ च वल्गनकूजितैः परस्परं विहरतः)

**महाराजः**—(विलोक्य सानन्दम्) देवि! पश्य—

प्रवालपादौ मृदुबर्हकोमलौ
मुहुः समुत्तानितकण्ठकूजितौ ।
सुवल्गनौ स्निग्धतनुत्विषावमू
ग्रहीतुमुत्पादयतो मम स्पृहाम् ॥

(इति कपोतग्रहणाय बाहू प्रसारयति कपोतौ च सवल्गनं देवीसमीपमुपयातः । देवी उभौ गृहीत्वा महाराजहस्ते मेघोदयमर्पयति)

**विदूषकः**—महाराज ! भवदीयो मेघोदयोऽपि देवीमेवानुसरति ।

**महाराजः**—अनुसरतु नाम, यथाहं तथायमपि । (इति पारावतं चुम्बति)

**देवी**—कालोऽतिक्रामति । मुञ्चाव कपोतौ । भो महाश्वेत! गगने बहुदूरं गत्वा चिरं डयमानो विजयी भव । (इति महाश्वेतं चुम्बति)

**विदूषकः**—भो महाश्वेत! विजयी भव ।

5

महाराजः—रे मेघोदय ! महाश्वेतात् प्राक् गगनान्मावतर ।

विदूषकः—रे मेघोदय ! त्वमपि विजयी भव ।

महाराजः—क्रीडास्पर्धिनोः कथमुभयोरपि विजयमाशंससि ?

विदूषकः—देव्यात्र मध्यस्थपदमनुगृहीतमिति तदीयमहाश्वेतस्य विजयः प्रार्थितः । किञ्च भवदीयोऽहमिति त्वदीयमेघोदयस्यापि विजयाशीः प्रयुक्ता । तत्तिष्ठतु नाम । मध्यस्थपदे तिष्ठता मया नियमाविरोधेन उभयपक्षोऽपि वीक्षितव्यः । अतो ब्रवीमि—उभावपि समकाल एव मुञ्चतं कपोतौ ।

राजा देवी च—एवमेव ! (इति सममेव पारावतौ मुञ्चतः)

(उभौ गगनमार्गमारूढौ विविधचङ्क्रमैर्डयेते)

महाराजः—(विलोक्य सानन्दम्) प्रियतमे ! पश्य । कथं डयेते !

क्वचित् सखायाविव मिश्रचङ्क्रमौ
क्वचित् सवैराविव दूरगामिनौ ।
गतागतैरूर्ध्वमधोऽप्रयायिनौ
महद्दधाते डयनेषु कौशलम् ॥

विदूषकः—इमौ धान्यलोभादन्यत्र यत्र कुत्रापि धावतश्चेत् किं कर्तव्यमस्माभिः ?

महाराजः—सखे ! मैवं चिन्तय । सम्यक् परिरक्षितौ सुशिक्षितौ च । (गगनमालोक्य) अहो ! पश्यत, बहुदूरमूर्ध्वं गतौ नैव दृश्येते । (सर्वेऽप्यूर्ध्वदत्तदृष्टयः पश्यन्ति)

विदूषकः—भो महाराज ! कपोताविमौ ऊर्ध्वगमने सम्पातिजटायुषावप्यतिक्रामत इति तर्कयामि ।

महाराजः—(विहस्य) परन्तु अनयोः कोऽपि दग्धपक्षो मा भूदिति आशासे ।

देवी—(दूरदर्शकयन्त्रेण दृष्ट्वा) आर्यपुत्र ! यन्त्रेणाप्यतिसूक्ष्मरूपौ दृश्येते ।

महाराजः—(यन्त्रेण स्वयमप्यालोक्य) हन्त ! क्वचिदपि पारावता एतावद्दूरं

गगनं नाधिरोहन्ति । (किञ्चित्कालावलोकनानन्तरं यन्त्रं समीपे निधाय नगरीं सर्वतो विलोक्य देवीमुद्दिश्य) प्रिये ! यन्त्रं विनैव सर्वतो नगरीमिमामवलोकय । यावद् दृष्टिः प्रसरति तावत्पर्यन्तं भवनारामादिभिः परिपूर्णा दृश्यते ।

**देवी**—(विलोक्य) बाढं पृथ्वी सर्वापि वेश्मारामादिभिः निचितेव भाति । यन्त्रेणेदानीं पश्याव । (इति राजा देवी च यन्त्रेण नगरीं पश्यतः)

**महाराजः**—देवि ! नगरमिदानीं कथं दृश्यते ! समवलोकय ।

निकटस्थसमस्तवस्तु यन्त्रे
सुबृहद्रूपतया स्फुटं न भाति ।
क्रमशस्तु यदेव दूरदूरे
निकटस्थात्तदिह स्फुटं चकास्ति ॥

**विदूषकः**—महाराज ! अहमपि यन्त्रमुखेन सर्वामिमां नगरीमालोकयामि (इति महाराजहस्ताद्यन्त्रमादाय विपरिवर्तितेन यन्त्रेण पश्यन्) महाराज ! किमेतत् ? यन्त्रे किमपि न दृश्यते नगरम् ; दृष्टमपि सङ्कुलितमेव किमपि न स्फुरति ।

**महाराजः**—कुशाग्रबुद्धे ! एवं परिवर्तितेन यन्त्रेण पश्य (इति दर्शनौचित्येन यन्त्रेण नगरीं प्रदर्शयति)

**विदूषकः**—(सर्वतः पुरीं विलोक्य) महाराज ! भवदीयं नगरमिदं सर्वं गृहे कक्ष्यायाः कक्ष्यान्तरमिव केवलं पदसञ्चारार्हपरिमितमेव वर्तते ।

**महाराजः**—(विहस्य) तर्हि पद्भ्यामेव सर्वं नगरं परिभ्रमतु महाब्राह्मणः । (ततः गगनात् हा हेति कूजन् महाराजाङ्के हठात् पारावतः पतति । सर्वे सम्भ्रान्ताः पश्यन्ति)

**महाराजः**—(श्वसितकम्पिहृदं श्लथपक्षतिं विवृतचञ्चुमुदस्तविलोचनं पारावतं विलोक्य सोद्वेगम्) हन्त ! स्पर्धायां साग्रहोऽयं डयने साहसं कृत्वा एवं मूर्छितः पतितः । शीघ्रं सलिलमानयत । (मधुमञ्जरी सलिलमानयति । महाराजः सलिलेन कपोतं सिञ्चति ।)

देवी—हन्त! ममापराधादेवं मेघोदयो विपन्मुखे निपतितः ।

विदूषकः—धिगमुं कपोतम्! यतो निस्सत्त्वेनानेन पारावतहतकेन अस्मन्महाराजः पराजितः ।

महाराजः—मैवं वादीः । दैवानुग्रहेण समुच्छ्वसतु तावत्तपस्वी मम मेघोदयः ।

कपोतः—(शनैरुत्थाय) भो भो शिबिसार्वभौम! शरणागतरक्षक! अनाथं मां श्येनात् परित्रायस्व, परित्रायस्व ।

महाराजः—(साश्चर्यम्) किमपूर्वमेवं मेघोदयो मानुषवाचा व्याहरति । भवतु, भो मेघोदय! मा भैषीः । चिरादस्माभिः परिरक्षितस्य ते कुतो वेदानीं भीतिः? परिरक्षाम्यहं त्वाम् । (इति हस्तेन कपोतं परामृशति)

कपोतः—महाप्रभो! नाहं त्वदीयो मेघोदयः । भवता पूर्वं कदापि न परिरक्षितश्च । इदंप्रथमतया त्वां शरणं गतोऽस्मि । वने विहरन्तं मां श्येनः कश्चिदनुधाव्य जिघांसुरागतः । तदशरण्यस्त्वां शरणं प्रपन्नोऽस्मि ।

महाराजः—अहो! न ह्ययं मेघोदयः, किन्त्वन्यः कोऽपि कपोतः ।

देवी—(साश्चर्यम्) कथमयं सर्वप्रकारेणापि मेघोदयमेवानुकरोति?

विदूषकः—अत एव अयं मेघोदय एवेति विभाव्य तथा कदर्थितः ।
(आकाशे श्येनः प्रविश्य)

श्येनः—रे कपोतापशद! मद्दृष्टिपथात् परिच्युतस्त्वं जनसङ्घमध्येऽत्र आत्मानं परिरक्षितुमिच्छसि? इदानीं मद्दृष्टिगोचरोऽसि । इतस्त्वं न भवसि । पश्य । (इति वेगादन्तरिक्षादवतरति, कपोतः सभयं कम्पते ।)

महाराजः—मा भैषीः कपोत! अहमस्मि भवद्रक्षणे कृतनिश्चयः । (इति पारावतं निगूह्य वस्त्रेणाच्छादयति)

श्येनः—(महाराजस्य पुरतः स्वर्णमयविटङ्के समुपविश्य) महाप्रभो! सर्वरक्षक! चिरात् क्षुधितेन मया परिश्रमात् सम्पादितं मदाहारममुं कृपया मह्यं वितर ।

महाराजः—भो विहङ्गोत्तम! शरणागतममुं कपोतं नाहं प्रयच्छामि । तदन्येन केनापि सत्त्वेन आत्मक्षुधां निवारय । याहि'

श्येनः—सत्यसन्धस्य धर्मनिष्ठस्य ते वचनमिदमनुचितं किल; यतो मध्याह्नात् प्रभृति भूयः पर्यटता मया परिश्रमादुपलब्धममुं विमुच्याद्य अन्यं प्राणिनं विचेतुं कथं वा शक्यते? तद्देहि ममाहारमेनम्। जीवो जीवस्य जीवनं हि!

महाराजः—भो! श्येनेश्वर! शृणु मद्वचनम्; क्षुधस्त्वया न भेतव्यम् अस्मात् कपोतादप्यधिकप्रमाणं प्राणिनं भोक्तुं ते ददामि। तदमुं कपोतमन्तरेण कमन्यं प्राणिनमिच्छसि? ब्रूहि।

श्येनः—भो महाराज!

द्विजोऽहमिति भिक्षान्नं भोक्तुं मां प्रेरयस्यहो।
स्वशक्त्यैवार्जितैः सत्त्वैर्जीवाम्युत न याच्ञया॥

तन्मया परिश्रमादासादितं मह्यं वितर; नान्यमपेक्षेऽहम्।

विदूषकः—रे श्येनहतक! किं ब्राह्मणावधीरणपर्यन्तस्ते गर्वोत्कर्षः? अलमनेन विशृङ्खलजल्पनेन। ब्राह्मणशापात् त्वमेवं न भवसि। पश्य।

श्येनः—(स्वगतम्) नाहमेवं भवाम्येव वस्तुतः।

महाराजः—रे दुराग्रहिन्! एष कपोतः कथमपि तव दुर्लभ एव। तस्मादेतत्कपोतप्राप्त्याशां विमुच्य त्वदभीप्सितं ब्रूहि। तत्ते ददामि; यतः शरणागतरक्षणार्थमहमस्मच्छरीरदानेऽपि सज्जोऽस्मि। परन्तु शरणागतं न त्यजानि।

श्येनः—भोः सत्यवादिन्! भवानेवं स्थिरसङ्कल्पश्चेत् शृणोतु, ममाभीप्सितम्। त्वद्वचनानुसारमेव एतत्कपोतभारप्रमाणं त्वद्गात्रपिशितमेव मे देहि। तावतैवालम्।

महाराजः—अहो! महान् प्रमोदः! किमेतावदेव तवेप्सितम्? कपोतभारात् द्विगुणितं त्रिगुणितं वा अस्मदङ्गपिशितं प्रीत्या ते ददामि। तेन तृप्तो भव।

श्येनः—धर्मनिरत! सत्यवादिन्! शिबिसार्वभौम! त्वं दानशौण्ड इति दुराशया प्राप्तव्यादधिकमहं नैवाभिलषामि। अत एतत्कपोतभारप्रमाणं त्वदङ्गपललं तोलयित्वा मह्यं देहि। तावतैवालम्।

महाराजः—औत्सुक्याद्दीयते ! कः कोऽत्र भोः ? (प्रविश्य कञ्चुकी)

कञ्चुकी—आज्ञापयतु महाराजः ।

महाराजः—चारुचार ! शस्त्रागाराङ्गणे तुलां शस्त्राणि च सज्जीकर्तुं शस्त्रशालाधिकारिणं ब्रूहि ।

कञ्चुकी—यदाज्ञापयति महाराजः । (इति निष्क्रान्तः)

देवी—(स्वगतम्) हा ! हतास्मि मन्दभाग्या ! किमेवमार्यपुत्रस्याभिसन्धिः ? (प्रकाशम्) भोः पतगोत्तम ! पत्नी नाम पत्युः शरीरार्धमिति प्रसिद्धिः किल । तन्मम शरीरात् पिशितं ते यथेच्छमर्पयामि । तेनैव तृप्तो भव ।

श्येनः—धर्मशीले ! सतीमणेस्ते वचनमिदमुचितमेव । तथापि स्त्रीशरीरामिषमहं नाभिलषामि ।

विदूषकः—रे श्येन ! तर्हि पवित्रतमं ब्राह्मणगात्रपिशितं यथेप्सितमास्वादय । ममाङ्गान्निकृत्य ते ददामि ।

श्येनः—किमेवमनुपयुक्तवचःपरम्परया प्रयोजनम् ? शिबिसार्वभौमवचनानुसारं तदीयगात्रपिशितं स्वयं दास्यति चेद्ददातु । नोचेन्मास्त्वेव । नान्यदहमभिलषामि । अथवा भवतामनभिमतं मास्त्वेव मह्यम् । तद्यथागतं गच्छामि । (इति गन्तुं प्रयतते)

महाराजः—भो श्येनराज ! शान्तिमवलम्बस्व । अस्मासु प्रेमातिशयादुदीरितेन बन्धुमित्रवचसा त्वं क्रुद्धो मा भूः । मदङ्गमांसवितरणेऽहं कृतसङ्कल्पः किल !

विदूषकः—(स्वगतम्) हन्त ! अविनीतोऽयं तिर्यक् महाराजसन्निधावपि कथं प्रदर्शयत्यात्मधार्ष्ट्यम् ? (प्रकाशम्) महाप्रभो ! श्रूयताम् ।

तिरश्चः कस्यचित्तृप्त्यै स्वाङ्गात् मांसं ददाति कः ।
अयं नेच्छति चेदन्यत् क्रव्यं दण्डेन हन्यताम् ॥

श्येनः—भो महाब्राह्मण ! त्वं महाराजस्य प्रियवयस्योऽसि । किन्तु नैव हितवयस्यः । यतस्तु अधर्माचरणाय प्रचोदयसि धर्मपरायणं महाराजम् ।

**महाराजः**—(सक्रोधम्) अस्मिन् प्रसङ्गे किमपि वक्तुं न कस्याप्यवकाशोऽस्ति । तत्सर्वे तूष्णीं तिष्ठन्तु ।

**श्येनः**—(स्वगतं) किं विदितोऽस्मि महाराजेन ?

तिर्यग्वा त्रिदशेशो वा समावेव ममार्थिनौ ।

**महाराजः**—तदेहि, विहङ्गम !

आश्रितस्यावनार्थं यत् प्रतिज्ञातं करोमि तत् ॥

शस्त्रागारप्राङ्गणं गच्छाम (इति कपोतमादाय निर्गच्छति—श्येनोऽपि डयनेन तमनुगच्छति । सर्वे सखेदमनुसरन्ति) (अङ्काङ्गयवनिका पतति)

(प्रविश्य विदूषकः)

**विदूषकः**—हन्त ! महाराजस्य हृदयमेवं कठिनमिति एतावत्पर्यन्तं मया न विदितम् ! यतः एतद्घोरप्रसङ्गावलोकनं परिहर्तुं सर्वे बन्धुपरिजनाश्च सनिर्बन्धं निवर्तिताः । समीपवर्तिनं मामपि निरकासयत् । सबाष्पां दैन्यवाचा भूयः प्रार्थयमानां देवीं केवलं समीपे स्थातुं कथंकथमप्यनुमेने । भवतु, महाराजस्य दृक्पथं परिहृत्यात्र दूरे तिष्ठन् तत्र प्रवर्तमानं सर्वं पश्यामि । (इति स्थित्वा नेपथ्यान्तर्विलोक्य) अहो ! महाराजस्त्विदानीमेव मांसलात् निजोरुभागात् नारिकेलप्रमाणं क्रव्यं शस्त्रेण स्वयमेव निकृत्य तुलायाः एकत्र घटे निवेशितेन कपोतेन समं तोलयितुमन्यत्र घटे स्वमांसं निक्षिप्य तोलयति ! (विलोक्य साश्चर्यं) किमेतावतापि मांसेन पारावतभारस्य समप्रमाणं न भवति ! (पुनरालोक्य) कष्टं भोः कष्टम् ! इदानीं सपादजङ्घं दक्षिणमूरुप्रदेशं पूर्णं निकृत्य तोलयति ! धिगमुं पारावतम् ! अधुनापि तत्तुल्यभारं न भवत्येव ! (पुनरालोक्य) हा हा ! वामोऽप्यूरुभागो निकृत्तः । इतः परं द्रष्टुं न पारयामि । हा ! रक्तप्रवाहो निस्सरति गृहे ! गृहिणीविमर्दितमत्कुणरक्तकणदर्शनेनैव कम्पमानहृदयोऽहं कथमिमां रक्तधारां वीक्षितुं शक्नोमि ! (पुनरालोक्य सभयम्) किमेतत् ! भुजगराजभोगसदृशो वामो भुजदण्डोऽपि निकृत्य निवेशितः

इदानीमपि कपोततुल्यभारो नैवाभवत् । अत्र कोऽपि मायाप्रयोगो निर्मितः स्यात् । अन्यथा कथमेवं भवितुमर्हति? महाराजस्त्विदानीम्—

महात्मायं भूयो निशिततरशस्त्रेण वपुषो
बहून् भागान् कृन्तन् पतगपरितोषैकनिरतः ।
सुधान्धःप्रीत्यर्थं कृतनिजवपुःप्रेमदमनः
कलाशेषश्चन्द्रस्तनुतनुरिवाभाति नितराम् ॥

(नेपथ्ये रोदनध्वनिसहितम्) हा! हतास्मि मन्दभाग्या! आर्यपुत्रस्य गात्रे अर्धभागादधिकप्रमाणं निकृत्य निवेशितमपि कपोतभारसमानं न भवत्येव । कपोतरूपेण मृत्युरेवागत इति तर्कयामि । का गतिः! हा! मन्दचैतन्योऽद्य आर्यपुत्रो दृश्यते । हा प्राणनाथ! देहि मे प्रतिवचनम् । हा तात! युष्मज्जा-मातुर्दुरवस्थामवलोकय । अब्रह्मण्यमब्रह्मण्यम्! हा! कृच्छ्रात् परिस्फुरति प्रियतमः । इतःपरं प्रियतमस्य जीविताशा न विद्यते । कथमहमिमामार्यपुत्रस्य दुरवस्थामवलोकयन्ती वज्रसारहृदया अधुनापि जीवामि मन्दभाग्या! हा दुर्विधे! पूर्णकामो भव ।

लोकैकरक्षकं धीरं धर्मनिष्ठमरिन्दमम् ।
दृष्ट्वेर्ष्ययैव दुर्दैव पतिमेवं ममाहरः ॥

विदूषकः—(नेथ्यान्तरमवलोक्य सोद्वेगम्) वपुषि निकृत्तबहुभागतया क्षीण-चैतन्योऽपि प्रियवयस्यः अङ्गेभ्यः पललानि पुनः पुनः कृच्छ्रात् निकृन्तत्येव । देवी च विदीर्णहृदया मूर्छिता यदृच्छागतया मधुमञ्जर्या परिचर्यमाणापि निश्चेतनैव दृश्यते । किञ्च, महाराजस्य स्थितिरिदानी-मत्यन्तं दुःखावहा । इतःपरमन्यद् द्रष्टुं न पारयामि । हा! हतोऽस्मि मन्दभाग्यः! (इति मूर्छितः पतति) । (ततः प्रविशति नवग्रहपूजाप्रसाद-मादाय सत्यदर्शनः)

सत्यदर्शनः—(मूर्छितं गोकर्णमालोक्य सोद्वेगम्) हन्त! किमेतत्? (इति तीर्थपात्रसलिलेन गोकर्णमुखे निषिच्य वस्त्राञ्चलेन वीजयति)

गोकर्णः—(मन्दमुत्थाय) हा! प्रियवयस्य! शिबिसार्वभौम! सत्यसन्धस्य धर्मावतारस्य ते किमेवं विपत्प्राप्तिः? कथमितः परमहं जीवितुमिच्छामि मन्दभाग्यः? (इति मुखमावृत्य रोदिति)

सत्यदर्शनः—(सवैक्लब्यम्) गोकर्ण! महाराजस्य किमभूत्? का वा विपत्? द्रुतं ब्रूहि।

विदूषकः—सखे सत्यदर्शन! तत्रावलोकय महाराजस्य दुरवस्थाम्! (इति नेपथ्यान्तः प्रदर्शयति)

सत्यदर्शनः—(विलोक्य ससाध्वसम्) हा! हा! अब्रह्मण्यमब्रह्मण्यम्! निकृत्त-सर्वावयवो महाराजस्त्विदानीं स्वशिरश्छेत्तुं खड्गमुद्धरति। निवारयामि तावद् द्रुतं गत्वा। (इति किञ्चिद् दूरं गत्वा पुनरालोक्य साश्चर्यम्) किमेतत्? केनापि देवपुरुषेण निरुद्धहस्तः शिबिसार्वभौमः स्वशीर्ष-कर्तनसाहसात् निवर्तितः?

विदूषकः—(स्वयमप्यालोक्य सानन्दम्) पश्य, सखे! इदानीं द्वौ देवप्रवरौ प्रसन्नेन कटाक्षेण निजपाणिपद्मैः महाराजस्य संहननं सर्वतः परामृशतः। हन्त! किमेतत्! तौ श्येनकपोताविदानीं नैव दृश्येते!

सत्यदर्शनः—(पुनरालोक्य) प्रियं नः प्रियं नः सखे! पश्य! अमृतेन ताभ्यां परिषिच्यमानो महाराजः यथापूर्वमिदानीं परिपूर्णसर्वावयवः पूर्णचन्द्र इव चकास्ति।

विदूषकः—(विलोक्य) महान् प्रमोदः! देव्यपि पीयूषसिक्ता परिहृतमूर्छा राका-निशाकौमुदीव सुप्रसन्नवदना दृश्यते। (ततः प्रविशति महेन्द्र-पावकाभ्यामुभयतः समवलम्बितकरतलः मधुमञ्जरीसहितया देव्या अनुगम्यमानः महाराजः)

गोकर्णसत्यदर्शनौ—(विलोक्य) विजयताम्, विजयताम् शरणागतरक्षकः सत्यप्रतिज्ञः शिबिसार्वभौमः; यतोऽद्य दिष्ट्या वयमीदृशं महाराजं पश्यामः।

महाराजः—विप्राशीःप्रभावमहत्त्वायत्ता किलास्मदखिलश्रेयःपरम्परा! (इत्यञ्जलिं

बध्नाति, देवीमुपसृत्य करे गृहीत्वा) प्रिये! मदर्थं तथा परितप्यमानां त्वां कर्तव्यैकतानतया तदाहं नैव पर्यसान्त्वयम् । किमिदानीमपगतोद्वेगा समाश्वसिता च वर्तसे!

देवी—आर्यपुत्र! मा स्मारय तावत् पुनरपि तादृग्विपत्तिपराकाष्ठां तां दुरवस्थाम् ।

महेन्द्रपावकौ—अत्र कृतापराधावावां दम्पत्योर्युवयोः क्षमां प्रार्थयावहे ।

विदूषकः—अविदितयुष्मद्यथार्थस्वरूपेण मया श्येनकपोतभ्रान्त्या भवतोः सन्निधौ कृतो यो वागपराधः तं युवां प्रथमं क्षमेथाम् । पश्चादस्मन्महाराजः बुद्धिपूर्वकं कृतं युवयोरपराधमप्यवश्यं क्षमते ।

महाराजः—शान्तं पापम्! सखे, मैवं वादीः । अस्मासु कृपया उपकृतवतोः देवप्रवरयोः संनिधौ वयं भक्तिपुरस्सरं कृतज्ञतां निवेदयामः । (इत्यञ्जलिं बध्नाति)

महेन्द्रपावकौ—शिबिसार्वभौम! एतत्प्रवर्तने निदानं श्रूयताम् । देवसभायां नारदेन मुहुः परिश्लाघ्यमानस्य भवतः सद्गुणान् श्रावंश्रावं मात्सर्येणेव गीर्वाणगणैः प्रार्थनापूर्वकं प्रचोदितावावामेवं सर्वजनक्लेशजनकावभवाव ।

महाराजः—धन्योऽस्मि इदानीम्, यतो गीर्वाणगणप्रवर्तितायां परीक्षायां परिशोधितः दिष्ट्या समुत्तीर्णोऽस्मि ।

महेन्द्रः—भो गुणनिधे! शिबिसार्वभौम! इतःपरं निर्जराणामिव दम्पत्योर्युवयोः गात्रे नित्ययौवनमुद्भविष्यति । लावण्येन वर्चसा च अतीतमानुषवपुषौ युवां चिरं सुखिनौ जीवतम् ।

महाराजः—परमनुगृहीतोऽस्मि देवप्रवरकृपाकटाक्षेण ।

सर्वे—प्रियं नः प्रियं नः । दिष्ट्या सदारः शिबिसार्वभौमो विजयतेतराम् ।

महाराजः—देवप्रवरयोः मङ्गलनामपरिचयजिज्ञासा मां प्रचोदयति प्रष्टुं भवन्तौ ।

(देवेन्द्रः समन्दस्मितं पावकमुखमवलोकयति)

वैश्वानरः—अयमनिमिषनाथो वज्रपाणिर्महेन्द्रः
हुतभुगहमिमौ द्वौ भो महीमण्डलेन्द्र ।
प्रकटयितुमनल्पान् सद्गुणांस्ते त्रिलोक्यां
क्षणमिह समभूव श्येनपारावतौ तौ ॥

महाराजः—महान् प्रमोदः!

(ततः महाश्वेतमेघोदयावन्तरिक्षादवतीर्य महाराजस्यांसदेशे समकाल एव उपविशतः)

देवी—(आलोक्य सानन्दम्) अहो! सम्पत्परम्परा उभावपि पारावतौ विजयिनावेव संवृत्तौ ।

विदूषकः—ममाशीःप्रभावोऽयम्! अन्यथा कथमेवं स्यात्!

महाराजः—(समन्दस्मितम्) भो ब्राह्मणवर! शृणु, पूर्वमेवं मया श्लाघितोऽसि-"भवादृशानां वाचमर्थोऽनुधावति" इति ।

महेन्द्रः—का वेपमानयोः पारावतयोः प्रवृत्तिः ?

महाराजः—भो मघवन्! विनोदार्थमनयोर्डयनक्रीडा प्रवर्तितास्माभिः ।

महेन्द्रः—भवतु! एवमेव विनोदप्रियः सुखी भव । भो भूमण्डलेश्वर! शृणु—शुभंयोर्हरिभक्तस्य धर्मासोः सुखिनश्च ते ।
आशास्महेऽन्यत् किं श्रेयः शाश्वती कीर्तिरेधताम् ॥

महाराजः—त्रिलोकाधिपतेः प्रसादाद्धन्योऽस्मि ।

महेन्द्रः—शिबिसार्वभौम! किं ते भूयः प्रियमुपकरोमि! तथापीदमस्तु भरतवाक्यम्—

सर्वे सत्यरताः सन्तु द्रोहेर्ष्याशाविवर्जिताः ।
लक्ष्मीनारायणः सर्वानाश्रितान् परिरक्षतु ॥

(इति निष्क्रान्ताः सर्वे)

॥ इति तृतीयोऽङ्कः ॥

॥ समाप्तं च शिबिवैभवं नाम नाटकम् ॥

# विवाहविडम्बनं नाम प्रहसनम्

## श्रीजीवन्यायतीर्थः

गौरीविवाहे गरुडैकवाहे
विश्वम्भरे द्रागुपयाति शम्भुः ।
चलद्भुजङ्गः स्खलदम्बरस्य
विडम्बितः सम्वरणेऽवताद्वः ॥

(नान्द्यन्ते सूत्रधारः)

सूत्रधारः - पुरतो दृश्यत एषा परिषत् सत्पुरुषरचितपरिवेषा ।
किमिह भवेदभिनेयं नेयं मतिरस्ति सविशेषा ॥

तद्वयस्यमाह्वयामि । भो वयस्य ! तारय मां सङ्कटात् ।

विदूषकः - (प्रविश्य) कस्ते सङ्कटो यन्मादृशबालिशजनात् परित्राणं कामयसे?

सूत्र० भो वयस्य ! न बुध्यसे को मे सङ्कट इति । इदानीं रङ्गस्य पुरो मम स्थितिरेव सङ्कटाय ।

विदू० किं भग्नपादोऽसि ? उत बुभुक्षाकातरोऽसि ?

सूत्र० वयस्य ! न परिहासः शोभते साम्प्रतम् । नवं वस्तु विचीयताम-भिनयार्थम् , अन्यथा विडम्बनं मदवस्थानं भवेत् ।

विदू० यद्येवम् , तर्हि विवाहविडम्बनं नाम प्रहसनमभिनीयताम् ।

सूत्र० साधु ! वयस्य ! साधु ! यत् स्मारितोऽस्मि विवाहविडम्बनं नाम नवीनं रूपकम् । यस्य किल निर्माता--

आचार्यपञ्चाननसूनुरग्रयः
श्रीजीवशर्मा प्रियचारुकर्मा ।
वङ्गस्थलीभूषणभट्टपल्ली-
वास्तव्य आस्ते किल शास्त्रसेवी ॥

नेपथ्ये—अरे श्याल ! कियत्कालं बहिर्यातोऽसि गेहतः
न जानासि कशाघातजर्जरं त्वां करोम्याहम्

विदू० भाव ! क एष आक्रोशति तारस्वरम् ?

सूत्र० वयस्य ! एष खलु रतिकान्तो नाम कश्चित् प्रवयाः स्वभृत्यं श्याल इत्याह्वयति रोषान्धः । तन्न युक्तमावयोरेतस्याग्रतः स्थातुम् !

परं क्षीबस्य जीवस्य पुरतः स्थितिरिष्यते ।
न तु रोषान्धतादोषग्रस्तस्य क्षणसन्निधिः ॥

विदू० भाव! सुष्ठु विचारितम् । यदि भृत्यभ्रमात् मामकपृष्ठे कशाघातं कुर्यात्? तत् पलायावहे ।

सूत्र० सर्वं सम्भवति विकारग्रस्तस्य । (निष्क्रान्तौ)

(इति प्रस्तावना)

प्रथमोऽङ्कः

[ततः प्रविशति रोषान्धो गृहकर्ता रतिकान्तः]

रतिकान्तः - अरे श्याल! कियत्कालं बहिर्यातोऽसि गेहतः ।
न जानासि कशाघातजर्जरं त्वां करोम्यहम् ॥

अहो दौर्भाग्यम्! धनार्जनाय समग्रदिवसं कृतश्रमः प्रत्यागतोऽस्मि स्वगृहम् । का कस्य परिदेवना! न कोऽपि पाद्यमुपनयति माम्, गात्रमार्जनीं वा मदग्रे स्थापयति । एको भृत्यो विधवा भगिनी काचन दासी च प्रतिपाल्यन्ते । न कोऽपि जनोऽवलोक्यते मत्सेवावसरे । अथवा सत्यमुक्तमभियुक्तैः -

भार्या यस्य गृहे नास्ति वश्यः पुत्रोऽथवा सुता ।
अरण्यं तेन गन्तव्यं शरण्यं नान्यदिष्यते ॥

अहं वर्षद्वयं यावद्दयिताविरहविधुरोऽस्मि, कथं संसारधुरां वहामि? वैराग्यमाश्रयामि ।

अयि भगिनि खड्गधरे ! तव हि—

भोजने द्विगुणा मात्रा शयने च चतुर्गुणा ।
कर्मकाले खमात्रा च ततः शूर्पणखास्वरः ॥

क्व वर्तसे रे खड्गधरे !

[प्रविशति खड्गधरा नेत्रे सम्मार्ज्य सानुनासिकस्वरेण]

खड्गधरा - सर्वं दिनं कृतश्रमाया मे यावन्निद्रावेशस्तावदेव कर्णज्वरद-स्वरेणाह्वानम् । कथय किमस्ति प्रयोजनम् ?

रति० नारीणां श्रम एव श्रमः, न तु पुरुषाणाम् । परिश्रान्तो गृहमागत्य स्वमुपादप्रक्षालनार्थं जलमपि न लभेय ?

[प्रविशति भृत्यः कङ्कनामा]

भृत्यः - (त्वरितं व्यजनं गृहीत्वा): कर्तः !

रति० अरे पाषण्ड! निष्क्राम रे गृहात् । सचेतनोऽसि वेतनगणनायाम्, मत्सेवायामचेतनो वञ्चनाचतुरो वा भवसि । अहं जानामि व्यजनं चालयितुम् ।

खड्ग० भ्रातः! किमहं व्यजनं करोमि?

रति० 'व्यजनं करोमि'? त्वं दूरमपेहि, गृहमध्ये स्वपिहि वा ।

भृत्यः - कर्तः! कुप्यसि मे । अहं गतवान् घटक[1]महोदयमामन्त्रयितुम् । अविलम्बं तदागमनमाशास्यते च ।

खड्ग० आ दग्धमुख! पलितकेशस्य गलितदन्तस्य लुलितगात्रस्य स्थविरस्य विवाहाय घटकयोजनायां नियुक्तोऽसि? यथा कर्ता तथा भृत्यः!

रति० त्वं दूरीभव गृहात् ।

खड्ग० अहं यामि । त्वमधुना भृत्यमाद्रियस्व ।

(निष्क्रान्ता)

रति० अरे मूर्ख! कदापि मे गृहजनसमीपे न तावद् घटकविषयकं किमपि वृत्तं वाचय ।

भृत्यः - कर्तः! जानामि तव विवाहवार्तया जनानामसूया भवतीति । किं करोमि? त्वमबोध इव कुप्यसि? क्रोधस्य कालाकालं न विचारयसि?

---

1. प्रदेशविशेषे वरवधूनिर्वाचनपूर्वकविवाहघटको घटकपदेनाभिधीय

रति० (भृत्यस्य पृष्ठे करामर्शं नाटयन्) अरे कङ्क! न विषीद! न वा शङ्कस्व। यदि घटकयत्नः सफलो भवेत् तदा ते वेतनवृद्धिरवश्यं भविता।

भृत्यः - (सोपेक्षम्) इदानीं तिष्ठतु वेतनकथा। त्वरतां निजप्रसाधनाय। एष्यति घटकः सत्वरं त्वां द्रष्टुम्।

रति० तर्हि दीयतां धौतधवलं कृष्णदशान्वितं कुञ्चितं वसनम्। कञ्चुकं कङ्कतिका, गन्धयुक्तिर्दर्पणः पटवासचूर्णं[1] च।

भृत्यः - विस्मरसि कर्तः! पक्वं श्मश्रुलोम किञ्चिदुद्गतं मुखलग्नं काशांशुकवत् प्रतीयते। क्षौरकर्मणा तदाशु परिष्करणीयम्। कर्तः! कृते क्षौरकर्मणि तव वदनं तरुणस्येव चिक्कणं प्रतिभास्यति।

रति० वत्स कङ्क! सर्वमानय प्रसाधनोपकरणम्। (भृत्यो निष्क्रान्तः)

(सदुःखम्) भार्यां विना भान्ति जगन्ति जीर्णा-
न्यरण्यरूपाणि भयस्थलानि।
भावे च तस्या मरुभूर्विशाला
प्रतीयते शीतलचन्द्रशाला॥

अहो गृहिणीवियुक्तः कियता क्लेशेन रात्रिन्दिवं यापयामि तज्जानाति भगवानेव।

[प्रविशति भृत्यः]

भृत्यः - कर्तः! घटक आगतः। किमधुना करोमि?

रति० बहिर्देशे वेत्रासने तमुपवेश्य तूर्णमिहागच्छ।

भृत्यः - यथाज्ञापयति कर्ता। (निष्क्रम्य पुनः प्रविश्य) कर्तः! घटकोऽयमुपवेशितः, कथितश्च - गृहस्वामी शौचालयं प्रविष्टः, क्षणमपेक्षस्वेति।

रति० आः कथमेवमुक्तवानसि! स मन्येत चेद् वृद्धोऽयमुदररोगीति, तदा किं भवेत्!

1. Toilet-powder.

भृत्यः - कर्तः ! इतोऽवसरे भवन्तं तरुणमिव प्रसाधनैः कल्पयामि । तथा समयलाभार्थमेवं कथितवानस्मि ।

रतिः० कथं न भोजनच्छलमुदाहार्षीः ?

भृत्यः - कर्तः ! घटका अतिलुब्धा भवन्ति । यदि भोजनकथामगादिष्यम्, तदा त्वया सहैकत्र भोजनाभिलाषं प्रकाश्य गृहाभ्यन्तरमवश्यमागमिष्यत् । शौचागारे न तथा सम्भाव्यम् ।

रति० भवतु, तथापि न महान् विलम्बः कार्यः, उदरामयशङ्का समुत्पद्येत ।

भृत्यः - (त्वरया प्रसाधनद्रव्याणि समाहृत्य क्षुरं च शाणोपले घृष्ट्वा, दृष्ट्वा च) कर्तः ! नैतेन तव कुशमूलस्थूलश्मश्रुलोम सत्वरं मुण्डयितुं शक्यम् । तत्तिष्ठतु क्षौरकर्म । पटवासचूर्णैस्तथा भवन्मुखं लिम्पामि, यथा सर्वं मुखमन्डलं सुधालिप्तभाण्डमिव दर्शनीयं भवेत् ।

रति० अरे कङ्क ! पलितकेशस्य कृते वैज्ञानिकचिकित्सकं शङ्करनाथं नाहूतवानसि ? किमधुना करोमि !

भृत्यः - मम कर्मणि प्रमादो नास्ति । शङ्करनाथो यथासमयं आगमिष्यामीत्युक्तवान् । यदि ते नासम्मतिः स्यात्तदा मयापि किञ्चित् कर्तुं शक्यते । कियत्कालस्य कृते पलितकेशान् कज्जलकृष्णान् विधास्यामि ?

रति० कथं कथं करिष्यसि ?

भृत्यः - घनमसीप्रयोगेण ।

रति० तव हस्तौ मसीमलिनौ दृष्ट्वा घटको ज्ञास्यति ।

भृत्यः - कर्तः, तवोपानत्परिष्करणपट्टिकया[1] कार्यं साधयामि । न मे हस्तौ कलङ्कितौ भविष्यतः ।

रति० यदि मसी मस्तकान्मुखावधि क्षरेत् तदा मे वैरूप्यं महदेव स्यात् ।

---

1. Shoe-brush.

भृत्यः - कर्तः! तदहं जानामि ; यदि कथञ्चित् तथा भवेत् तदुपरि पटवासचूर्णमधिकं क्षिपामि येन सर्वथा मसीमोषणं भविष्यति ।

[ नेपथ्ये—भो भद्र! मम कार्यान्तरं वर्तते, नाहमधिककालं स्थातुमीशोऽस्मि । ]

भृत्यः - कर्तः! घटकोऽयं त्वरयति ।

रति० त्वमपि सत्वरं स्वकर्म समाप्य तमानय गृहाभ्यन्तरम् ।

भृत्यः - (मसीपात्रतो मसीं शिरसि क्षिपति । मसी क्षरति गण्डदेशयोः उपानत्पादुकिया मस्तकं घर्षयति, मुखे च शुभ्रपटवासचूर्णं म्रक्षयति) कर्तः! सुन्दरं सज्जितो भवान् । इदानीं घटकमाह्वयामि । (निष्क्रान्तः)

रति० (वस्त्रं परिवर्तयति । परित्यक्तवस्त्रेण दर्पणमाच्छादयति) अहो! दर्पणः क्व रक्षितः? न स्वयं मुखं पश्यामि । अथवा भवन्ति भृत्या अपि काले विश्वसनीयाः ।

विपत्काले सुतं जायां मित्राण्यपि च किङ्करान् ।
प्राज्ञो विश्वासपात्राणि कृत्वात्मानं हि रक्षति ॥

[ततः प्रविशति खड्गधरा दुग्धपात्रहस्ता]

खड्ग० भ्रातः! प्रतिक्षणं मामुपालभसे । अहं तु यथासमयं तव सेवार्थं सन्नद्धा तिष्ठामि । पिब दुग्धम् । (अग्रे भ्रातरं दृष्ट्वा) अहो! दधिलिप्तवदनस्य हनूमत इव ते मुखं प्रतीयते ।

रति० त्वमेव वैधव्यदावदग्धमुखी शृगाली । गच्छ त्वमभ्यन्तरम् । अन्यथा महान् मे क्रोधो भविष्यति । इदानीं नाहं दुग्धं पिबामि ।

खड्ग० तव बुद्धिभ्रंशो जातः । नूनं तव परमप्रियस्य कर्मैतत् । सम्मार्जनीप्रहारेण तदीयशासनं मयैव कर्तव्यम् । (निष्क्रान्ता)

[ततः प्रविशति भृत्येन दर्शितमार्गो घटकः]

भृत्यः - प्रविशतु भवानभ्यन्तरम् । बहिर्देशेऽहं प्रतीक्षे ।

घटकः - (अभ्यन्तरप्रवेशं नाटयन्) भवतः शौचकर्मणि महान् विलम्बो जातः । किमुदररोगो भवन्तं क्लेशयति ?

रति० (स्वगतम्) यच्चिन्तितं तदेवापतितम् ! (प्रकाशम्) न हि न हि । सुस्थः सबलश्चास्मि । (इति बाह्वास्फालनं नाटयति) उपविशतु भवान् अस्मिन् वेत्रासने ।

घटकः - (उपवेशनं नाटयन्) (रतिकान्तमुखं दृष्ट्वा हास्यसंवरणं कृत्वा च) अहो ! मन्ये तारुण्यद्योतकं मुखमण्डले प्रसाधनं प्रयुक्तम् । भद्र ! सुन्दरं भवदाननं प्रतिभाति । परन्तु मध्ये काश्चन कृष्णरेखाः कथम् ?

रति० न हि न किञ्चित् । मन्ये प्राचीने संस्काररहिते शौचागारे धूममलं लम्बमानं मुखे लग्नं भवेत् ।

घटकः - न हि धूममलं तरलं भवति । किमप्यौषधं व्यवहृतमिति प्रतीयते ।

रति० आम् ! स्मरामि केशानामकालपक्वतानिवृत्तये किञ्चिदौषधं व्यवहरामि ।

घटकः - अकालपक्वता ? इदानीं भवतो वयःक्रमः कः ? मया श्रुतं यत् षष्टिवर्षदेशीयो भवान् ।

रति० अनृतमनृतम् । शत्रूणां प्रचार एषः ।

घटकः - हम् ! तर्हि वयःक्रमः कः ?

रति० जरादोषात् (इत्यर्धोक्ते जिह्वां दशन्) ज्वरदोषात् न सम्यक् स्मरामि । तथापि मन्ये चत्वारिंशद् वर्षेभ्यो नाधिकं मे वयः । वरं ततोऽपि दश पञ्चदश वा वर्षाणि न्यूनानि स्युः ।

घटकः - तर्हि पञ्चविंशवर्षवयस्को भवान् ?

रति० घटकमहोदय ! किं प्रतिवत्सरं वयःसङ्ख्या लिखित्वा रक्ष्यते ?

घटकः - हम् ! एका विधवा भवद्गृहे दृष्टा, का सा ?

रति० मम सेवार्थं काचन परिचारिका गृहे रक्षिता ।

घटकः - सा तु कथयति भवतो भगिनीति ।

रति० एवमेव परिचारिकाणां भवति स्पर्धा ।

[ततः प्रविशति दुग्धपात्रहस्ता खड्गधरा]

खड्ग० भ्रातः! किमिदानीं दुग्धं पास्यसि? वृद्धे वयसि नियमेन पानभोजने कुरु । अन्यथा दुर्बलो भविष्यसि ।

रति० पुनरपि त्वमिहागतासि, रे गर्भदासि! त्वरितं निर्गच्छ गृहादस्मात् ।

खड्ग० भद्र! शृणोतु वचनं मे सहोदरस्य । अहमस्मि चत्वारिंशवर्षवयस्का, मत्तोऽपि विंशतिवर्षैः ज्यायानयं निजभगिनीं गर्भदासीति सम्बोधयति । हा! मन्दं भाग्यं मे । (इति शिरस्ताडयन्ती निष्क्रान्ता)

[नेपथ्ये—कर्तः! परित्रायस्व पितृष्वसुर्हस्तात् । सा प्रहरति मां निर्दयम् ।]

घटकः - (शृण्वन्) भद्रमहोदय! सा भवदीया भगिनीति निश्चितम् । अन्यथा भृत्यताडनं न सम्भवति परिचारिकायाः ।

रति० दूरसम्पर्कात् कथञ्चिद् भगिनी भवतीति ज्ञायताम् । यदि मे विवाह-प्रबन्धो भवता कर्तुं शक्येत तर्हि निष्कासयेयं गृहादापन्मूर्तिमेनाम् । तिष्ठतु भवान् मुहूर्तमात्रम् यावदागच्छामि ।

(निष्क्रान्तः)

घटकः - षष्टिवर्षवयस्कस्य तारुण्यलाभाय समीहा हास्याय मे । तथापि धनार्जनाय घटकवृत्तिरवलम्बिता । एवं चेद् यजमानो लभ्यते, आशास्यते महानर्थलाभः ।

[ततः प्रविशति रतिकान्तः]

रति० जातो जातः ।

घटकः - कीदृशः? कथं जातः?

रति० जातो महान् विप्लवो मदीयगृहजनेषु । सा भगिनी सम्बन्धगन्धातिगर्विता भृत्यं तथा प्राहरत् यथासौ वराको भृशं रोदिति । नोत्थातुमपि समर्थः । घटकमहोदय! मयावश्यं परिणेतव्यम् । अन्यथा जीवनयात्रा मे विकला भविष्यति ।

घटकः - इदानीं प्रकृतमनुसरामि । चन्द्रलेखा नाम कापि कन्यका भवदर्थे विनिश्चिता । पिता दरिद्रः । कश्चित्तरुणो वाग्दत्तामपि तां धनादिलाभे निराशः प्रत्याख्यातवान् ।

रति० (सोत्साहम्) अहो ! तरुणानामत्याचारः ! अत एव वृद्धेन तत्प्रतीकारः कर्तव्यः । उच्यतामसौ कन्याजनकः यथा सहस्रं मुद्रास्तदर्थमेकीकृत्य रक्षिताः । यदैव मह्यं कन्यां दातुमिच्छेत् तदैव तदीयकरतलामलकवत् मुद्राधिगमो भवेत् ।

घटकः - आर्य ! भवादृशः पुरुषो दुर्लभः । सङ्कटस्तु कन्यापितुरधिकतरः । सहस्रद्वयपरिमिता मुद्रा ऋणरूपेण वर्तन्ते । ऋणशोधनं विना कन्याविवाहः किमुचितो भवेत् ?

रति० तर्हि तरुणेन सह कथं विवाहनिश्चयः कृतः ?

घटकः - पात्रस्यैव पिता उत्तमर्ण आसीत् । यदि कन्याया विनिमयेन ऋणमोचनं भवेदित्यशया विवाहप्रस्तावः कृतः ।

रति० भवतु, सहस्रद्वयीमेव दास्यामि ।

घटकः - अहो ! औदार्यम् ! परन्तु विवाहरात्रौ व्ययो वर्तते । वरयात्रिणां कन्यायात्रिणां च भोजनम्, वरस्य वस्त्रमङ्गुलीयकम्, कन्याया वसनानि च व्यवस्थेयानि ।

रति० तर्हि किं पञ्चशतीं पुनरिच्छसि ?

घटकः - पुनः सहस्रं रक्ष्यताम् । अधुना पञ्चशत्या किं वा सम्पाद्यते ?

रति० भवतु, तर्हि सहस्रत्रयं निश्चितम् ।

घटकः - मदर्थं किमुपढौकनं स्थिरीक्रियते ?

रति० इतः परं मा तावन्मां पीडय ।

घटकः - तर्हि किमहमलाभवाणिज्यं करोमि ?

रति०- यस्मिन् पक्षे सहस्रत्रयं निक्षिपसि तस्मात् कश्चिदंशोऽवश्यं निपतिष्यति भवत्कुक्षौ ।

घटकः - परिगणितोऽर्थः शार्दूलेनापि न भक्षयितुं शक्यते । भवत्प्रदेयानामर्थानां यत्र यत्र विनियोगो भवेत् स त्वशेषविशेषक्षेत्रविचारपूर्वकं दर्शितः । तस्मान्मदंशनिष्कासनं कथं सम्भवेत्? यदि मत्पारिश्रमिकदाने भवानसमर्थः कथयतु वृथाकालक्षेपं परिहरामि ।

रति० घटकमहोदय! मदीयार्थस्यापि सीमा वर्तते ।

घटकः - ममापि श्रमस्य मूल्यमस्ति । तत्तिष्ठतु भवान् । अहमन्यत्र पात्रं स्थिरीकरोमि । दरिद्रकन्यापि सा तरुणी सुदर्शना सुलक्षणा च । यद्गृहे सा गमिष्यति, तत्रैव लक्ष्मीः शतगुणमुज्जृम्भिता भवेत् । साधयामि ।

(प्रस्थातुमुद्यतः)

[नेपथ्ये - यष्टिधारी षष्टिवर्षः सहर्षः स्थविरो वरः ।
चन्द्रलेखास्पर्शकामः करं विस्तारयत्यहो ॥]

[प्रविशति भृत्यः]

भृत्यः - कर्तः, श्रूयते भवतो यशोगाथा? प्रतिवेशिनः केचन तरुणा घटकस्य मम च प्रहाराय सन्नद्धास्तिष्ठन्ति । रक्ष रक्ष मां तव घटकं च ।

रति० घटकमहोदय! पक्षद्वारेण सत्वरं पलायताम् । इयं पल्ली दुष्टजनाध्युषिता, वृद्धस्य मे (इत्यर्धोक्ते) प्रौढस्य मे न परिणयं सहिष्यन्ते । मम सा कुटिला भगिनी सर्वं वृत्तान्तं पल्लीवासिभ्यो विज्ञापयति ।

दुष्टा ममान्नपुष्टासौ ममैवानिष्टमिच्छति ।
यथा गृहस्था भुजगी दशति स्वगृहार्भकम् ॥

घटकः - तर्हि महोदय! किं प्रहारलाभाय वृद्धस्य भवतः परिणयं घटयिष्यामि?

रति० पुनरपि त्वं मां वृद्धं कथयसि? गच्छ त्वम्, बहवो घटका वर्तन्ते । विकीर्णेष्वन्नेषु काकानामभावो न भविष्यति ।

घटकः - तथैवास्तु । साधयामि ।

(स्वगतम्)

आहारो वा प्रहारो वा लभ्यो भवति भाग्यतः ।
यथा भ्राम्यशुना दण्डो भ्राम्यता मण्ड एव वा ॥

[नेपथ्ये - इष्टकापातशब्दः]

घटकभृत्यौ - भवद्गृहमागत्य किं प्राणान् विमुञ्चामि? इदानीं रक्षतु माम् ।

रति० किमहं करोमि? राजकीयान् रक्षिपुरुषान् आह्वयामि ।

घटकः - श्रूयताम् । राजपुरुषाह्वाने द्विगुणतर उपद्रवो भविष्यति । बहुवित्तव्ययायाससाध्या च रक्षिपुरुषपरिचर्या । मुद्राणां पञ्चशती मम पारिश्रमिकवेतनार्थं परिकल्प्यताम् । ततश्चाद्य दीयतामेकशतं प्रतिवेशिनां मुखमुद्रणाय । पश्चान्मह्यं चतुःशती दातव्या ।

भृत्यः - सुष्ठु चिन्तितं घटकराजेन । भक्ष्यं लब्ध्वा कुक्कुरा अपि नीरवा भवन्ति । किं पुनस्तरुणाः?

रति० कथयतु भवान् यदेतेन चिरशान्तिः प्रतिष्ठिता भवेत् ।

घटकः - तत्र कः सन्देहः?

रति० तर्हि स्वीकरोमि ते प्रस्तावम् । गृह्यतां शतं मुद्राणाम् ।

(इति मञ्जूषामुन्मोच्य दशमुद्रापत्राण्यर्पयति) .

घटकमहोदय! सम्प्रति तुष्टोऽसि? सा मनोरमा तरुणी स्थिरीकर्तव्या, विवाहात् पूर्वं तामेकदा द्रष्टुमिच्छामि ।

घटकः - शतवारान् पश्यतु भवान् । परन्तु स्मर्यतां कदापि न प्रकाश्यं यद् भवानेव पात्रमिति ।

रति० यदि कन्यापक्षः कदाचित् पात्रं दिदृक्षेत, तदा मम का गतिर्भवेत्?

घटकः - न खलु विना तदुपायचिन्तामहं मुद्राप्रतिग्रहं करोमि । भवत्प्रतिवेशिनामेकं तरुणं वरत्वेन प्रदर्शयामि ।

ति० किं प्रतिवेशिनां कोऽपि मदर्थं तथा स्वार्थत्यागं करिष्यति?

घटकः - आधुनिकास्तरुणाः केचन परमोदाराः परार्थोत्सृष्टजीवाः सन्ति ।

रति० तर्हि निश्चिन्तोऽस्मि ।

घटकः - पूर्णरूपेण । परन्तु सप्ताहाभ्यन्तरे प्रतिश्रुतार्थानामर्पणं क्रियताम् । पक्षमध्ये विवाहोऽवश्यम्भावी ।

रति० धन्यो भवान् । अरे कङ्क! मार्गं प्रदर्शय घटकमहोदयम् ।

भृत्यः - यथादिशति कर्ता । (उभौ निष्क्रान्तौ)

रति० अहो ! सुस्थोऽस्मि । इदानीमेकां कवितां रचयामि ।

(गायन्) लगतु लगतु कण्ठे सुन्दरीबाहुपाशो
विरहविधुरवृद्धो मोदतां वर्द्धिताशः ।
विरमतु चिरशान्त्यै क्लेशदश्वासकासः
स्फुरतु लुलितगण्डे मण्डनं मन्दहासः ॥

(ततः कासं नाटयति)

[ततः प्रविशति भृत्यः]

भृत्यः - कर्तः ! गमनसमये घटको मामकथयत् यद् भवतो वयो रूपं च विवाहयोग्यमेव वर्तते ।

रति० सत्यं भाषसे, उत मां तोषयितुं यथेच्छं प्रलपसि ?

भृत्यः - कर्तः ! नाहं कदापि मिथ्या वदामि; न वा कञ्चन वञ्चयामि ।

[नेपथ्ये—एषोऽहं समागतोऽस्मि]

रति० वत्स ! कङ्क ! पश्य कोऽयमागत इति ।

भृत्यः - (एकं वस्त्रखण्डं गृहीत्वा रतिकान्तस्य मुखं घर्षयन्) कर्तः ! वैज्ञानिकचिकित्सकः शङ्करनाथ आगतः । अत एव स्वाभाविकं ते रूपं प्रकाशयामि । (भृत्यो निष्क्रम्य पुनः शङ्करनाथेन सह प्रविश्य) उपसर्पतु भवान् । अयमस्माकं गृहस्वामी विराजते ।

रति० (उत्थाय) स्वागतम्, स्वागतम् । अरे कङ्क ! दीयतां वेत्रासनम् उपवेशनाय ।

भृत्यः - (तथा करोति)

शङ्करनाथः - (उपविश्य) कथमाहूतोऽस्मि भवता । भवद्भृत्यो मामाह्वयत् ।

रति० ममैव प्रयोजनसिद्धये ।

शङ्कर० किं तत्प्रयोजनम् ?

रति० श्रूयते यदिदानीं वार्धकेऽपि तारुण्यसृष्टिः सम्भवति ?

शङ्कर० सम्भवति, परन्तु बहुधनव्ययसाध्या सा ।

रति० नाहं दरिद्रः । कियता द्रव्यव्ययेन सा निष्पादयितुं शक्यते ? कियान् समयश्चापेक्ष्यते ?

शङ्कर० श्रूयताम्—

केशकल्पं[1] कायकल्पं[2] कपिपेशी[3]निवेशनम् ।
कृत्वा षण्मासमध्ये स्याद् वृद्धोऽपि तरुणद्युतिः ॥

केशकल्पे पञ्च शतानि, कायकल्पे सहस्रं पेशीयोजनेऽपि तथा ।

रति० धनव्ययार्थं सज्जोऽस्मि, परन्तु षण्मासापेक्षा न सम्भवति । पक्षकाल-मध्ये केशकल्प एव क्रियताम् । तेन किं भविष्यति ?

शङ्कर० काशकुसुमसङ्काशाः कज्जलकृष्णा भविष्यन्ति । पश्यामि भवदीयान् केशान् ।

रति० (मस्तकं दर्शयति)

शङ्कर० (दृष्ट्वा) कथमस्वाभाविकं वर्णान्तरं भजते भवन्मस्तकम् कोऽप्युत्कटगन्धश्चानुभूयते ।

रति० । तेन किं केशकल्पस्य बाधा भविष्यति ?

शङ्कर० । अवश्यमेव । इदानीं किञ्चित्तरलमौषधं दास्यामि यस्य प्रयोगेण स्वाभाविकं भवत्केशानां शुक्लत्वं पुनराविर्भविष्यति । पक्षकालस्तु तत्रैव यास्यति । ततः केसकल्पव्यवस्था भवेत् ।

---

1. Application of hairdye.
2. Ayurvedic process of rejuvenation.
3. Grafting of monkey-glands according to modern science.

रति० हा भग्ना मे विपुलाशा! तथापि पृच्छामि पक्षे व्यतीते केशकल्पकाय-कल्पादिकार्यं सम्भवेन्न वा?

शङ्कर० कथं न सम्भवेत्? कायकल्पारम्भे - प्रथमं विरेचनौषधं सेव्यम्। ततश्च सप्ताहानि यावद् आमलकीपिण्डाः सेवनीयाः। ततः स्वल्पं हविष्यान्नभोजनं ब्रह्मचर्यपालनञ्च कर्तव्यम्।

रति० कियत्कालं ब्रह्मचर्यपालनमभीष्टं भवतः?

शङ्कर० यावज्जीवम्, तेनैव भवेत् सुन्दरसुस्थदेहरक्षा।

रति० तर्हि तारुण्यलाभस्य किं सार्थक्यम्?

शङ्कर० विज्ञानसिद्धान्तं विज्ञापितो भवान्। अतः परं भवदधीनं सुस्थदेह-धारणं तन्मारणं वा।

रति० उत्सीदतु विज्ञानम्।

(मुद्राचतुष्टयं शङ्करनाथाय समर्पयति)

शङ्कर० (गृहीत्वा) यथेष्टाचरणानां न विज्ञानमहिमा प्रतिभाति। साधयामि।

(निष्क्रान्तः)

रति० प्रवञ्चका एते वैज्ञानिकाः। मिथ्याडङ्कां वादयति, चिरयौवनं व्यवस्थापयितुं शक्यत इति। प्रवञ्चकैर्देशः परिव्याप्तः।

भृत्यः - सत्यमुक्तं त्वया। घटकस्तु न तथा।

रति० - अयं सरल इति प्रतीयते।

[प्रविशति घटकः]

घटकः - महोदय! सर्वं स्थिरीकृतम्। इदानीं कन्यादर्शनाय गच्छतु भवान्। यदि कन्या भवदभिमता भवेत्तर्हि तत्रैव पितुर्हस्ते ऋणशोधनार्थं विवाह-दिनव्ययार्थञ्च मुद्रासहस्रत्रयं न्यस्तव्यम्। विवाहदिने कन्याया अङ्गे भवतैव भूषणानि परिधाप्यानि। चन्द्रलेखाविवाहानन्तरं मम पुरस्कारः प्रदेयः।

रति० तत्र कः सन्देहः? तर्हि कन्यासन्दर्शनाय गच्छामि। भोः कङ्क! त्वं तावदत्र तिष्ठ। भो घटकराज! पात्रदर्शनाय कः प्रबन्धः कृतः?

घटकः - सर्वं सुव्यवस्थितं वर्तते। पात्रदर्शनं मया छलेन कृतपूर्वम्।

रति० - कीदृशम्? कीदृशम्?

घटकः - भवद्गृहाद् बहिर्गत्वैव कतिपयमुद्रानियोगेन तरुणमेकं सजूःकृत्य कन्याभवनमगमम्। कन्यायाः पिता तु तं दृष्ट्वा महता हर्षेण विवाहकर्म सम्यगन्वमोदयत्। इदानीं भवता कन्यादर्शनं काम्यते मया। भवान् पात्रपक्षस्य वरकर्ता इत्यबोधयं कन्यापितरम्॥

रति० मम पात्रत्वं कथं सिद्धं भवेत्?

घटकः - विवाहलग्नसमये भवदुपस्थितिरेव कार्यसाधिका भवेत्।

रति० यदि तदानीं कोऽपि कोलाहलः स्यात्?

घटकः - मया राष्ट्रीयरक्षिपुरुषव्यवस्था कृता। दरिद्रः कन्याजनको भयाद्भवन्तं वरत्वेन वरयिष्यति।

रति० बाढम् बाढम्, धन्यो भवान्। अरे कङ्क! सावधानो गृहं रक्ष। न क्वापि गच्छ।

भृत्यः कर्तः! किमहं निर्बोधः प्रमत्तो वा? शुभे कर्मणि गच्छति भवान् शुभास्ते पन्थानः सन्तु।

(निष्क्रान्तौ घटकरतिकान्तौ)

[ततः प्रविशति खड्गधरा दासी च]

खड्ग० - अरे कङ्क! त्वमेव मरिष्यसि! तव वञ्चना यदा प्रकाशमेष्यति तदा तव शिरश्छेदं करिष्यति मे भ्राता।

भृत्यः - प्रतिवेशिनस्तरुणा मां रक्षिष्यन्ति। तेषामेव मन्त्रणया तरुणेन भास्करशर्मणा सह चन्द्रलेखाया विवाहः स्थिरीकृतः। चन्द्रलेखायाः पिता दरिद्रः, सत्यम् ऋणग्रस्तश्च। तदुपकाराय वृद्धवञ्चना क्रियते। न मे स्वार्थाय।

खड्ग० मन्ये ममैव मरणमासन्नम् ।

भृत्यः - पितृष्वसः! नास्ति कापि चिन्ता भवत्याः। यद्यहं रक्षितः स्यां भवत्या अपि रक्षा भविष्यति ।

दासी - अरे कङ्क! तव लभ्यांशान्मह्यं कञ्चिदंशं दास्यसि ।

भृत्यः - आः! किं मया लब्धव्यं तदपि न जानामि। तिरस्कारः पुरस्कारो वा।

दासी - तर्हि दुर्मन्त्रणां सर्वामपि निवेदयिष्यामि गृहस्वामिने ।

भृत्यः - तेन का मे क्षतिर्भविष्यति? अहमपि जानामि वृद्धं बोधयितुं यदियं दासी सर्वानर्थस्य मूलमिति ।

दासी - अरे दग्धमुख!

भृत्यः - स्थिरा भव । पदशब्द इव श्रूयते ।

(ततः प्रविशति रतिकान्तः)

रति० (स्वगतम्)

दृष्ट्वा शुचिस्मितमुखीं नवयौवनस्थां
स्वर्णोज्ज्वलां विकचचम्पकगौरवर्णाम् ।
आकर्णचारुनयनां रुचिराङ्गयष्टिं
साक्षादनङ्गदयितामिव विस्मितोऽस्मि ॥

किमियं मे गृहलक्ष्मीर्भवेत्? अथवा विधेर्विधानात् सर्वं सम्भवति । मां दृष्ट्वैव सा मृदुहास्यं कृतवती । लज्जया मुखञ्चावनमितम् । किं वृद्धमपि मां पश्यन्त्या भावोदयो जातस्तस्याः? अथवा

यो यस्याः पतिरित्यस्ति विधातृलिखिता लिपिः ।
न तां खण्डयितुं शक्तः स्वयं शक्रोऽपि देवराट् ॥

(प्रकाशम्) अरे कङ्क! (कङ्क उपसर्पति । खड्गधरा दासी च मृदुपदक्षेपं पलायते)

भृत्यः - कर्तः! आज्ञापय । एषोऽहमुपस्थितः ।

रति० कङ्क! त्वं मे पुत्रस्थानभूतो भृत्योऽसि । अतः कथयामि—घटकेन कन्यानिर्वाचनं सम्यक् कृतम् । तादृश्येव कन्यका मदीयगृहभूषण-योग्या भविष्यति ।

भृत्यः - कर्तः! भवदीयं मनः प्रसन्नम् ?

रति० आम्, सुप्रसन्नम् ।

भृत्यः - तर्हि स्वर्णकारमाह्वयामि । भूषणानि यथा सम्यक् सुष्ठु घटितानि स्युस्तदर्थमुपदेष्टव्यः स्वर्णकारः ।

रति० एतदर्थं ममापि चिन्ता स्थिता, सत्वरं गच्छ ।

भृत्यः - (प्लुत्या गच्छन्) यथादेशो भवतः ।

[निष्क्रान्तः, स्वर्णकार आगतः । ]

भृत्यः - कर्तः! स्वर्णकार आगतः ।

स्वर्णकारः - नमस्ते ।

रति० भोः स्वर्णकार! सर्वाङ्गशोभाकराण्याभरणानि कियद्भिर्दिवसैर्घटयितुं शक्नोषि ?

स्वर्ण० अद्यैव दातुं प्रभवामि । इदानीमस्माकमापणे घटितपूर्वाणि भूषणानि सर्वदैव सन्नद्धानि वर्तन्ते विक्रयार्थम् ।

रति० तर्हि कियता मूल्येन सर्वावयवशोभीन्यलंङ्करणानि सम्भवन्ति ?

स्वर्ण० प्राक् कथ्यतां भवता कियन्मूल्यं दातुमिष्यते ।

रति० मुद्रासहस्रपर्यन्तम् ।

स्वर्ण० महाशय ! ते हि नो दिवसा गताः! स्वर्णमूल्यवृद्धया च सर्वं विपर्यस्तम् । तथापि सर्वनिम्नतमं सर्वाङ्गभूषणानां मूल्यं सहस्रद्वयं विज्ञायताम् ।

रति० स्वर्णकार ! कथञ्चिन्मुद्रासहस्रेण निर्वाहय ।

स्वर्ण० भवतो निन्दा ममापि कलङ्को भविष्यति । अलङ्करणानि दत्तानि पुनर्भवद्गृहमेव समेष्यन्ति ।

रति० तथापि मुद्राणां रूपान्तरीकरणं न मे रोचते ।

स्वर्ण० तर्हि सार्धसहस्रं विनियोज्यताम् ।

रति० (स्वगतम्) अहो मधुरमस्या हास्यम् !

जनयति तरुणीहास्यं दास्यं किल विरहविधुरपुरुषाणाम् ।
नवघनमालास्फुरितं चपलादामेव नयनानाम् ।

अहो ! चन्द्रलेखाङ्गभूषणाय भवतु मुद्राणां सार्थक्यम् ।

(प्रकाशम्) भोः स्वर्णकार ! तव वाक्येन तुष्टोऽस्मि । स्वीकरोमि सार्धसहस्रम् । परन्तु यथा भूषणानां धातुशुद्धिः कारुकर्मचारुता च प्रकटिता स्यात् तदर्थं यतनीयम् ।

स्वर्णः० यथादेशः प्रभोः । (निष्क्रान्तः)

[ततः प्रविशति माल्यचन्दनादिसज्जितो वरवेषेण रतिकान्तः]

रति० अरे कङ्क ! सत्वरमागच्छ भूषणपेटिकामादाय मामनुसर्तुम् ।

भृत्यः - (प्रविश्य) एष सज्जोऽस्मि भवन्तमनुगन्तुम् ।

[ततः प्रविशति खड्गधरा]

खड्ग० अहो दुर्बुद्धिर्ममाग्रजस्य! न लज्जा भवति वरवेषमङ्गीकर्तुम् वृद्धे वयसि । सहस्राणि मुद्राणामपव्ययं नीतानि । न जानामि के तावद् भ्रातरं वञ्चयितुमिच्छन्ति ।

रति० तूष्णीं तिष्ठ । शुभयात्राकाले न तावदश्लीलं भाषस्व । शङ्खध्वनिं कुरु ।

(नेपथ्ये शङ्खध्वनिः)

खड्ग० श्रूयते शङ्खध्वनिः? प्रतिवेशिनः सर्व एव प्रस्तुतास्तत्रोपहासाय ।

रति० त्वमिदानीं गृहाभ्यन्तरं गच्छ । विधवामुखदर्शनं यात्राभङ्गाय भवति ।

खड्ग० अहं गृहमध्ये प्रविश्यैव तिष्ठामि । त्वं तावद् गोब्राह्मणहुताशनदर्शनपूर्वकं यात्रां कुरु ।

(निष्क्रान्ता)

[ततः प्रविशति प्रतिवेशी कश्चित्तरुणः]

**प्रतिवेशी तरुणः** - इदानीमेव मङ्गलवाद्यकाराः समाहूताः । तेषां भोजनव्ययो दक्षिणा च मदीयहस्ते रक्ष्यताम् । अद्यप्रभृति दिनद्वयं यावद् भवान् मङ्गलकर्मणि व्यापृतः क्षुद्रेष्वीदृशेषु कर्मसु न मनो निवेशयितुं समर्थो भवेत् । वयमेव बाह्यकर्माणि सम्पादयामः । भवतो द्वितीयस्तृतीयो वा पक्षो भवतु । चन्द्रलेखायास्तु प्रथमः पक्षः । तस्या विवाहे बाधाभावश्चेत् सर्वे दुःखमापद्येरन् । भवन्तमासाद्य कन्यायाः पिता कृतार्थो भविष्यति ।

**रति०** सर्वं सूनृतमभिदधासि । गृहाण पञ्चविंशतिमुद्रा वाद्यकाराणां कृते ।

**तरुणः** - (गृहीत्वा) शिवाः सन्तु पन्थानो भवतः । परन्तु विवाहलग्नस्य विलम्बो वर्तते । भृत्योऽयं प्रथमतो गत्वा कन्यां सज्जीकरोतु । अहमपि भृत्येन सह गच्छामि । भवदर्थं यानं यथासमयमत्रोपस्थास्यति ।

**रति०** अरे कङ्क ! गच्छ त्वं श्रीमतानेन सार्धं भूषणानि गृहीत्वा । भोः प्रतिवेशिन्! सावधानो गच्छ । कन्यकाञ्चाभरणैर्भूषय ।

**तरुणः** - बाढम् । अरे कङ्क! मामनुव्रज ।

(निष्क्रान्तौ)

**रति०** अहो तरुणानामौदार्यम् । धन्याः प्रतिवेशिनः । शतमुद्राव्ययेन यन्मया युष्माकं मनः क्रीतम्, तद् युष्माकमेव महत्त्वम् । (सानन्दं यष्टिहस्तः परिक्रामति) समयस्तु समागतप्रायः । अयि खड्गधरे! जलपूर्णकुम्भं सम्मुखे रक्ष । न जानासि शिष्टाचारम् ?

**खड्ग०** (नेपथ्ये) विधवामुखदर्शनं यात्राकाले नोचितम् ।

**रति०** अयि दासि! त्वमेव जलपूर्णं कुम्भं द्वारि स्थापय ।

**दासी** - (प्रविश्य) कर्तः! प्रथमविवाहे जलपूर्णकुम्भस्थापनेन वधूवियोगः समजनि । अस्मिन् विवाहे विनैव कुम्भं दासीमुखं दृष्ट्वा कुरु, शुभं भविष्यति ।

**रति०** दुर्गे! दुर्गे! नारायण नारायण!

**दासी** - कथं युगलदेवताया विस्मरणं भवति यात्राकाले ।

रति० उमामहेश्वर! सीताराम! राधाकृष्ण!

दासी - धम शङ्खम्; वादय वाद्यम्।

[अपटीक्षेपेण—विवाहप्राङ्गणम्। रतिकान्तः परिक्रामति। नेपथ्ये मङ्गलवाद्यध्वनिः।]

रति० अरे कङ्क! पादुके रक्ष मे।

[ततःप्रविशति कन्यायाः पिता विधुशेखरः]

विधुशेखरः - स्वागतं वैवाहिकमहोदयस्य! भृत्येन किं प्रयोजनम्; अहमेव भवदीयपादुके रक्षामि।

वयसापि भवाञ् ज्यायान् प्रेयान् श्रेयांश्च कर्मणा।
पादपीठायमानस्य मम वक्षसि रक्ष्यते॥

रति० (स्वगतम्) अस्यैव हस्ते मया मुद्रासहस्रत्रयं प्रदत्तम्। अयमेव मे भावी श्वशुरः। कथं मदीयपादुकारक्षणं गुरुजनेनानेन क्रियताम्? (प्रकाशम्) श्वशुरमहोदय! किमिदमनुचितमुच्यते! वयोविचारस्तु संशयाधीनः; सम्बन्ध एव गरीयान्।

विधु० ज्ञायतां श्वशुरो नाहं भासुरो भवदर्थतः।
सम्बन्धो विधिनिर्बन्धाद् वैवाहिकसुगन्धभाक्॥

तद्वैवाहिक! भवदनुग्रहेणैव मम ऋणमोचनं कन्यापरिणयनं च निर्बाधं सुसाधिते।

रति० कन्याविवाहः साधयिष्यत इत्युच्यताम्। भवतो जामाता भविष्याम्यहमेव।

विधु० किमिदं प्रलपितं भवतः! भवत्प्रतिवेशी युवा भास्करो मम जामाता जातः। अद्यैव प्रथमलग्ने चन्द्रलेखाया विवाहः सुसम्पन्नः। भवदीयभृत्येन प्रेषितानां भूषणानामुपयोगोऽपि कृतः। किं जरा-दोषात् सर्वं विस्मर्यते भवता!

रति० आहूयतां घटकः।

विधु० भो घटकमहोदय!

तरुणः - [प्रविश्य] घटकमहोदयो भोजने रत इति साम्प्रतं नागन्तुं शक्नोति ।

विधु० मान्य श्रीरतिकान्त ! कान्तचरित ! स्वार्थं परार्थे जहत्
कीर्तिं मूर्तिमतीं भवानधिगतोऽप्यादर्शसन्दर्शकः ।
मत्कन्यापरिणीतिसङ्कटपरित्राणाय नीतिं नवा-
मालम्ब्य त्रिजगज्जनप्रियकरो धन्यो धरण्यां भवान् ॥

रति० (शिरसि हस्तौ न्यस्य मूर्छापन्न इवोपवेशनं नाटयति) (स्वगतम्)
स्तुतिः परिहासो वा श्रूयते । हा विधे ! वैराग्यं वैराग्यमेव श्रेयः ।
दशाचक्रगतो नूनं भगवानपि भूतति ।[1]
कोऽहं यः पञ्चभूतात्मा वञ्चनावागुराधृतः ॥

विधु० अरे तरुण ! दीयतामत्रैवासनम् । भोजनद्रव्याणि च समाह्रियन्तां वैवाहिकसेवार्थम् ।

तरुणः - यथादिशति भवान् । (निष्क्रान्तः)

भृत्यः - (प्रविश्य) कर्तः ! राष्ट्रीयरक्षिपुरुषः सहघटकमहोदयो भवत्सकाशात् मुद्राचतुःशतीं ग्रहीतुमागच्छति ।

रति० (सभयम्) सर्वं दुर्दैवं विजृम्भते । भो वैवाहिक ! यदि सत्यं सम्बन्धगौरवं मानयसि तर्हि रक्ष मां घटकहस्तात् ।
घटको घोटकश्चैव स्यान्मनोरथचालकः ।
क्वचित् सन्निधिमासाद्य पदाघातप्रियः पुनः ॥

विधु० वैवाहिक ! मा भैषीः । घटकोऽयमधुनैव निवार्यते । किमतःपरमपि भवतः प्रियं करोमि ? तथापीदमस्तु—
निष्कामकर्म जयताद् भुवि शर्महेतु-
र्दीनस्य सङ्कटसमुद्धरणाय सेतुः ।
मा वञ्चनापरिभवो नवधूमकेतु-
र्लोकस्य विप्लवकरः क्वचिदप्युदेतु ॥

॥ इति विवाहविडम्बनं नाम प्रहसनं समाप्तम् ॥

---

[1] भूत इव आचरति । भूतो देवयोनिविशेषः ।

# शक्तिशारदं नाम नाटकम्[1]

श्रीयतीन्द्रविमलचतुर्धुरीणः

प्रणमामि विश्वमातरं शक्तिसारां
श्रीशारदां सुतहितैकध्यानपराम् ।
सीताराधाप्रियाप्रपूर्णाकारां
सर्वयुगावतारचिरक्षेमंकराम् ॥

सूत्रधारः (नान्द्यन्ते)—अद्य पश्चिमवङ्गसर्वकारीयसंस्कृतशिक्षापरिषत्-कर्तृपक्षैरादिष्टोऽस्मि, यद् महाजनन्याः श्रीश्रीशारदामणेः पूतजीवन-चरितं नाट्येन प्रयोक्तव्यमिति । तद्वयं सर्वकारीय-वङ्गीय-संस्कृत-शिक्षापरिषदध्यक्षेण डाक्टर् श्रीयतीन्द्रविमलचतुर्धुरीणेन विरचितं शक्ति-शारदं नाम नाटकं प्रयोक्ष्यामहे । (नटीमुद्दिश्य) देवि ! इतस्तावत् । त्वरितमागच्छ ।

नटी—(प्रविश्य) इयमहमागताऽस्मि । क आदेशः ?

सूत्रधारः—न खल्वादेशः, भवत्याः कृपा मया याच्यते ।

नटी—आर्य ! दयस्व ।

सूत्रधारः—भारतवर्षस्य परमं सौभाग्यमिदं यदस्मिन्नेव देशे करुणामयो भगवान् जगतः कालुष्यमपाकर्तुं वारं वारं शक्तिरूपिण्या जगज्जनन्या लीलागणेन च समम् अवतीर्णो भवतीति । तथा हि—

त्रेतायामवतीर्य वीर्यविदितः सीतापतिः कोसले
सीतालक्ष्मणमारुतिप्रभृतिभिर्लीलां चकारोज्ज्वलाम् ।
श्रीमत्या सह राधया सह तथा श्रीदामरामादिभि-
र्लीलां कर्तुमवातरन्मधुपुरे कृष्णश्च स द्वापरे ॥

नटी—यथा इयं भागवती कथा मह्यं रोचते, न तथाऽन्या काऽपि । कलियुगविषयेऽपि वदतु भवान् ।

---

1. श्रीरामकृष्णपरमहंससहधर्मचारिण्याः शारदामणिदेव्याश्चरितमधिकृत्य कृतम् ।

सहजसुभगजीवनप्रणाली-
सुखसरणव्रतिनीदृशी हि नारी ।
चरितमधुरिमा ततो हि मातुः
कथमभिनीय करोमि सार्थकं तम् ॥

नटी—परमशोभना खलु आर्यस्य उक्तिः । किन्तु ईदृशीनां महाजननीनां चरित्रानुध्याने यथा सुखं परमा शान्तिश्च, तथैतासां नाट्ये चरित्ररूपणे महत् कष्टं परमा भीतिश्च जायेते ।

सूत्रधारः—जगज्जनन्या अंशभूतायास्ते कथं भीतिर्जायताम्? स्थिरसंकल्पायाः शक्तेराधारभूताया नार्या भीतिं नाहं स्वीकरोमि । नारीणां लज्जा तु बलीयस्येव ।

लज्जा नाम कुलस्त्रीणामात्मरूपावगूहनम् ।
पुरतो रामकृष्णस्य यथा श्रीशारदामणेः ॥

(इति प्रस्तावना)

। प्रथमोऽङ्कः । प्रथमदृश्यम् ।

[समयः रात्रिः, स्थानं दक्षिणेश्वरकालीमन्दिरम् ।
प्रविशति पूजारतः श्रीरामकृष्णः ।]

रामकृष्णः—(कालिकां स्तौति)

चामुण्डा घोरहुङ्कारा चण्डमुण्डविनाशिनी ।
अष्टसखीसहाया त्वं शुम्भनिशुम्भसूदनी ॥
सृष्टेरादौ तमोरूपा कालिका वरवर्णिनी ।
अन्ते चापि महाकृष्णा घोररूपा कपालिनी ॥
तन्त्रेषु त्वं परा शक्तिर्महामाया सनातनी ।
श्मशाने सुखसञ्चारा कालिका शिवभामिनी ॥
सहस्रारे महापद्मे पूर्णानन्दविहारिणी ।
भक्तिमुक्तिप्रदा देवी दक्षिणा बन्धहारिणी ॥

जननि भवतारिणि! मनो मे परमसंफुल्लं प्रजायते। काऽपि माङ्गलिकी घटना भाविनीव! जननि! त्वमेव सर्वकल्याणकारिणी, अघटनघटनापटीयसी च। कथमद्य मृदुमधुरं हससि! ब्रूहि मां कस्तेऽभिप्रायः! अहो! सर्वं बुद्धम्, अहं स्वयमेव गच्छामि।

(ततः प्रविशति पित्रा श्रीरामचन्द्रमुखोपाध्यायेन सह जननी शारदामणिः)

[शारदा श्रीरामकृष्णं पितरं च प्रणमति]

श्रीरामचन्द्रमुखोपाध्यायः—वत्स गदाधर! बहोः कालादनन्तरं त्वां दृष्ट्वा नितरां प्रीतोऽस्मि। इयं मे कन्यका शारदा शीर्णा दीर्णा पथि भूयोऽपि ज्वररोगाक्रान्ता पीड्यमानाऽऽस्ते। तथापि अयमेव हर्षो यत् शारदा त्वत्समीपमानीतेति। योग्यपतिसन्निहिता अनाकुलप्रसादा कन्यका पितुरानन्दप्रकर्षं जनयति। पश्य,

हृद्यस्य पत्युः सविधे वसन्ती
यां शान्तिमाप्नोति तृणस्य गेहे।
तथाविधां शान्तिमुपैति साध्वी
नारी न सौधेऽपि विधाय वासम्॥

भगवांस्तथा करोतु यथा युवां जगतो दैन्यम् अपनयेतम्।

रामकृष्णः—पितः! प्रणमामि भवन्तम्। भवताम् आशीर्वादैरेव आवयोर्जीवन-सौन्दर्यम् अम्लानं स्थास्यति। कथम् आसते जयरामवाटिकायां जननी अन्ये च सर्वे, कीदृशाश्च सर्वे कामारपुकुरे?

रामचन्द्रः—कल्याणमस्तु ते पुत्र! देशस्थाः सर्वे कल्याणिनः।

रामकृष्णः—प्रथममागता भवतां कन्यका; तथापि अशुभक्षणं मार्ग एव समतीतं मन्ये।

शारदामणिः—(स्वगतम्) अहो! आनन्दमूर्तिः पतिर्मे मम सुखमुद्दिश्य आगमनसमयस्य प्राशस्त्यादिकं चिन्तयति। सत्यं कृतार्थास्मि। कुतः?

पतिर्न पाणिग्रहमात्रतो भवे-
ज्जाया न जायेत च सप्तभिः पदैः ।
परस्परं यावनुकूलचारिणौ
तौ दम्पती तौ च सुखाकरौ भुवि ॥

रामकृष्णः—हृदय ! अत्रागच्छ । पितरं विश्रामस्थानं नय ।

हृदयः—(प्रविश्य) मातुल ! मातामहमन्तर्नेष्यामि । का पुनर्मातुलानीविषये व्यवस्था ! अपि नाम तत्रभवती मातामहीसकाशं नहवतखानायां स्थास्यति !

रामकृष्णः—न हि हृदय ! मातुलानी तेऽत्रैव अस्मिन्नेव कक्षे स्थास्यति । अस्वस्था सा चिकित्सनीया ।

शारदामणिः—(स्वगतम्) अहो ! मत्सुखचिन्तनं स्नेहकरुणाप्रीतिपरिपूरितस्य पत्युर्मे ।

(रामचन्द्रो हृदयश्च बहिर्गच्छतः)

रामकृष्णः—(शारदामुद्दिश्य) तवागमनं परं शुभकरम् । किन्तु बहुविलम्बितं त्वया । यदि नाम अस्माकम् "सेजबाबुः" अजीविष्यत्, त्वां प्रति सेवाशुश्रूषणादिव्यापारे न कापि त्रुटिविच्युतिरभविष्यत् ।

शारदा—(स्वगतम्) अहो ! महान् मे आनन्दो यत् पतिर्मे स्थितप्रज्ञो महामुनिः सर्वम् अनायाससिद्धमिव उच्चारयति, तथा व्यवहरति च ।

रामकृष्णः—यदि शरीरं त्वां बाधेत, तदा निद्रासुखं लभस्व ।

शारदा—देव ! सर्वं मे कष्टमपगतम् । इदानीं नाहमस्वस्थाऽस्मि । त्वद्दर्शनानन्तरं कथं वा अस्वस्थता स्यात् ? (सस्मितम्)

प्रायेण परिणीतानां व्याधिः पत्युरसन्निधिः ।
पतिसन्निहितास्ताः स्युश्चिराद् व्याधेरगोचराः ॥

भवान् नितरां चिन्तयति मदीयं सुखम् । मया तु चिन्तितमासीत् मम त्वत्सकाशागमनं सुष्ठु स्यात् न वेति । पुनर्यदा केचन जनाः—मया निर्णी-

तमासीत् ते त्वसम्बद्धप्रलापिन इति—तव शारीरकमानसिकसुस्थतानिबन्धि वाक्यं कुत्साक्रूपेण रटयामासुः, तदा त्वहं 'मयाऽत्र ध्रुवमेव आगन्तव्य'मिति स्थिरसङ्कल्पाऽभवम्। स्नेहातुरः पिताऽपि मया सार्धम् आगतवान्।

रामकृष्णः—सुष्ठु आचरितं त्वया। अहो स्नेहशीलत्वं पितुर्यत्तेनापि कृपया सुदीर्घं पन्थानमतिक्रम्य अस्मत्सकाशम् आगतम्।

शारदा—नाथ! कथं नाहं चतुर्वर्षं यावत् आहूता? अपि त्वं रुष्टोऽसि यदहं त्वदादेशं विना अत्रागतास्मीति।

रामकृष्णः—त्वं कथं नाहूता इति? परन्तु काल एव बलवान्। त्वदागमने पुनः कथं रोषः स्यात्! त्वं सुष्ठु आचरितवती। चतुर्वर्षं यावत् आसीद् आवयोः प्रस्तुतिसमयः। गते तस्मिन् काले त्वमागतवती!

यदुक्तं नाहूतेति, तत्र ब्रवीमि—

आमन्त्रणं तव चिरस्य मदीयपार्श्वे
द्वारञ्च साध्वि विवृतं सदनस्य नित्यम्।
स्वाधीनता तव गतागतयोरिहास्ते
त्वं स्वेच्छया यदभिवाञ्छसि तत् कुरुष्व॥

शारदा—इदानीं निश्चिन्ता धन्या चास्मि। (स्वगतम्)

अविज्ञायाशयं पत्युः स्वैरं किमपि कुर्वताम्।
आतदाशयविज्ञानं वेपते हृदयं नृणाम्॥

रामकृष्णः—भृशं श्रमक्लान्ता पीडिता च त्वं साम्प्रतं निद्रासुखं लभस्व। अन्येद्युरावां संलपनं करिष्यावहे।

शारदा—यथा देव आदिशति।

(उभौ निष्क्रान्तौ)

। इति प्रथमदृश्यं समाप्तम्।

। द्वितीयं दृश्यम् ।

(ततः प्रविशति शारदामणिः श्रीरामकृष्णश्च)

रामकृष्णः—यथा जननी अभिलषति तथा सर्वं सङ्घटते । तस्या हि आशीर्वादक्रमेण साम्प्रतं सुस्था वर्तसे । पश्य—

इच्छामयी मम यदिच्छति मुक्तकेशी
व्यक्तं तदेव घटते सततं जगत्याम् ।
का वा कथा तनुभृतः कुधियस्तदीयाम्
ईशोऽपि न प्रभवति प्रतिहन्तुमिच्छाम् ॥

चतुर्वर्षेभ्यः प्राक् या याः शिक्षाः तुभ्यं मया प्रदत्ताः ताः सर्वास्त्वया सम्यक् समधिगता इति मन्ये ।

शारदा—देव ! मया परममधुरं स्मर्यतेऽधुनापि ते कोमलरक्तं वचः यथा "असौ चन्द्रमाः सर्वेषामेव मातुलः, तथा ईश्वरोऽपि सर्वेषामेव स्वकीयः! यः कोऽपि कायमनोवाक्यैस्तमाह्वयति, स निर्बाधं ध्रुवमेव तं पश्यति । त्वमपि तथा करोषि चेत्त्वमपि ईश्वरं द्रक्ष्यस्येव । अन्यच्च, भगवद्दर्शनमेव जीवनाभिलषितमन्यथा जीवनं वृथैव" इति ।

रामकृष्णः—तत् त्वं सर्वथा ईश्वरम् आहूतवत्यासीः? नितरां प्रीतोऽस्मि । यतः—

पथ्यानामुपदेशानां लोके दातैव दुर्लभः ।
श्रोता ततोऽपि विरलः क्रियावान् नावलोक्यते ॥

शारदा—त्वयैव उक्तम् आसीत् यत् करतालैः सार्धं भगवन्नामोच्चार्यमिति । यथा करतालैर्वृक्षात् पक्षी उड्डयनपरो भवति तथा करतालशब्दात् पापपक्षी अपि देहवृक्षादपसरति । तथा सति परिवेशे गुन् गुन् गानमपि गेयम् ।

रामकृष्णः—नितरां हृष्टोऽस्मि । यद् यद् मया भाषितं तत् सर्वं त्वयाऽनुस्वारविसर्गपर्यन्तम् अविकलं स्मर्यते । मन्ये सर्वं तथा त्वयाऽनुष्ठितमपि ।

**शारदा**—यथाशक्ति कृतम् । दीना हीना क्षुद्राऽहं शारदा, भगवानपि विभुरनन्तवैभवः । तथापि—

अनादिबोधः स हि देवदेवो
भक्तानुरक्तः करुणानिधानम् ।
त्वच्छिष्यया शारदया विधाना-
दाराधितः शं कुरुतादशेषम् ॥

**रामकृष्णः**—यदि त्वम् असन्तोषपरवशा न स्याः ममैकः प्रश्नः प्रष्टव्य आस्ते । (क्षणं विचिन्त्य) अपि त्वं मां संसारपथं नेतुमत्रागतवती ?

**शारदा**—(त्वरितम्) न हि न हि देव ! कथमहं त्वां संसारपथं नेष्यामि । तव सहधर्मिणी अहं तव धर्मपथे साहाय्यकमेव केवलं करिष्यामि ।

**रामकृष्णः**—भद्रे ! चिरं जीव, सदृशमुत्तरं विहितवत्यसि ।

**शारदा**—देवदेव ! त्वं किमपि मनसि न करोषि चेत् ममापि हृदये प्रश्न एको जागर्ति—मया सहजसारल्येन त्वत्पादपद्मे स निवेद्यते ।

**रामकृष्णः**—अनायासं पृच्छ ।

**शारदा**—तत् कृपया ब्रूहि 'काऽहं तव' इति ।

**रामकृष्णः**—कथम् ?

येयं सृष्टिलयस्थितिप्रणयिनी काली करालानना
या चेदं कृपया शरीरमसृजत् सर्वार्थसंसाधनम् ।
सा मे मन्दिरवासिनी 'नहवत'स्था चापि मे यादृशी
त्वं तादृश्यसि लेशतोऽपि न तथा भिन्ना मया मन्यसे ॥

**शारदा**—(स्वगतम्) अहो ! सर्वभूतेषु ईश्वरदृष्टिः पत्युर्मे । (रामकृष्णमुद्दिश्य) देव ! तवाभीष्टसाधनविषये यद् यदेव करणीयमास्ते, तस्मिन् उक्ते सर्वं कर्तुम् अहं यतिष्ये । भगवान् मां सार्थकप्रयत्नां करोतु ।

**रामकृष्णः**—परमकल्याणि को वा भेदस्तव प्रयत्ने मम वा ? आवयोः प्रचेष्टनव्यापारः समानः लक्ष्यं च सममेव ।

अत एवोच्यते पत्नी मुनिभिः सहधर्मिणी ।
पतिपत्न्योः समं लक्ष्यं पन्थाश्चापि समो भवेत् ॥

शारदामणिः—तद्विषये कः सन्देहः ?

रामकृष्णः—"मन एव सोपानम्, मन एव झटिकावर्तः, मन एव गुरुः, मन एव विघ्नः। सर्वं मन एव। तस्मात् सर्वाग्रे मन एव स्थिरीकरणीयम्। शुद्धं शान्तं मनो विना न किमपि संसिध्यति । जपसमये मनो वानरवल्लम्फझम्पं वाञ्छति चेत् सर्वं क्षणादेव नाशोन्मुखं प्रजायते । मनःस्थैर्ये च गुरुवैष्णवादिकृपैव हेतुः । अत एव गायन्ति 'बाउल' सम्प्रदायानुसारिणः—

कृष्णस्य वैष्णवानाञ्च गुरोश्चाप्नुवतः कृपाम् ।
जीवस्य जायते सिद्धिर्न त्वेकमपि मुञ्चतः ॥

शारदामणिः—(विषण्णा) तर्हि क उपायः? मनो धावति चेत् जपसमये कथं तत् प्रशमनीयम्?

रामकृष्णः—उपायोऽभ्यासो वैराग्यं निष्ठा च । जपात् सिद्धिः । अभ्यासात् मनस्तन्मयं प्रजायते । जपश्च नित्यं सन्धिक्षण एव करणीयः ।

शारदा—किं जपनीयम्?

रामकृष्णः—कलौ नाम एव जपनीयम् । यत् नाम तुभ्यं रोचते तदेव । अभेदो नाम नामनामिनोः । मातृनाम अहं जपामि । पितृनामापि केचन आद्रियन्ते । एतयोस्तु मातृनाम वरम् इति मन्ये, मातुः सहज-प्रसन्नत्वात् ।

तातः शास्ति सदा सदा च कठिनो गम्भीरधीरच्छवि-
र्माता कोमलकोमला करुणया पूर्णा सुधास्राविणी ।
सन्तानेष्वनुरज्यतोरपि समं पित्रोरतः कारणा-
देकत्र स्तिमितोऽमितश्च परतः स्नेहः सुतानां भवेत् ॥

तस्मात् मातृनाम मह्यं रोचते ।

शारदा—नाथ! जन्मजन्मान्तरतपश्चर्याफलेन त्वादृशः पतिर्मया लब्धः। (स्वगतम्) नाथो मे भगवान् विजयताम्।

रामकृष्णः—अस्या जनन्या भवतारिण्याः कृपाबलेन आवामद्य भूयोऽपि मिलितौ समव्रतचारिणौ जीवनैक्यमधिगतौ। तस्याः महदुद्देश्यं संसिद्धं भवतु। अस्मिन् परममङ्गलमये निशीथे अनुपमशुभक्षणे सुभगे! मया सह भगवतीस्तुतिमुच्चारय—

देवि प्रसीद सदया दवयाखिलार्तिं
पन्था नवः कुसुमकोमलतां दधातु।
सम्पूर्णतां समधिगच्छतु साधना नौ
भूयासुराशु भुवनानि सुखास्पदानि॥

॥ इति समाप्तं द्वितीयं दृश्यम्॥

॥ समाप्तश्च प्रथमोऽङ्कः॥

। अथ द्वितीयोऽङ्कः। प्रथमदृश्यम्।

[फलहारिणीकालीपूजा। प्रविशति शारदामणिः]

शारदामणिः—वर्षादधिकः कालो गतोऽत्र आगताया मम। सर्वत्र राजते परमा शान्तिः। वक्षसि मे आनन्दघटः केनापि संस्थापित इति मन्ये। स्मर्यते मया प्रभूतादरेण विश्वपतिस्वरूपेण पत्या मे जिह्वाया अग्रे लिखितो मातृमन्त्रः। पुनस्तु तेनैव उपदिष्टास्मि—न मया सर्वक्षणं गृहे स्थातव्यम् इति। यतो वन्यविहगोऽपि निरन्तरपञ्जरस्थितो जडतामापद्य दीनो मूको भवति। ततः अवसरक्रमेण मम पल्लीभ्रमणं देवेनैव उपदिष्टम्। हन्त!

स्वाधीनभ्रमणं पत्न्याः पत्या यदुपदिश्यते।
तत् स्मारयति कीरायाः शौनिकेनेह निष्कृतिम्॥

किन्तु नाहं कुत्रापि गन्तुमिच्छामि। नहबतखानाभ्यन्तरे राजते विश्वजननीरूपिणी मे पत्युर्जननी चन्द्रकान्तमणेः कोटिगुणाभ्यधिक-

रूपगुणशालिनी चन्द्रमणिः । यथा पत्युस्तथा श्वश्रूदेव्याश्च चरणसेवा मे सर्वसुखकरी । कस्यास्तु ईदृशी श्वश्रूमाता वर्तते । स्वयं नाथो नित्यश आहारग्रहणात् प्राक् यां जननीं प्रणम्य आशीर्वादान् याचते, जगति तस्यास्तुलनं कुतः ?

चन्द्रमणिः—(प्रविश्य) मातः शारदे ! कथं विलम्बः सङ्घटते गदाधरस्य स्वगृहप्रत्यावर्तने ? ज्येष्ठमासस्य अमावास्येयं फलहारिणीकालिकापूजातिथिः । परमपुण्यदिवसोऽयम् । मातस्त्वमिदानीम् ऊनविंशतिवर्षीया वर्तसे । वारं वारं स्मरामि पञ्चवर्षवयस्कायाः क्षुद्रकायायास्तव मद्गृहे प्रथमागमनम् । चतुर्दशवर्षाभ्यन्तरे कीदृशं महत् परिवर्तनं ते सङ्घटितम् ?

आसीद् या वसनासहा तनुलता सा वाससा वेष्टिता
काले यौवनमञ्जुले परिणता निम्नोन्नतैरङ्गकैः ।
नेत्रे त्रस्तकुरङ्गनेत्रचपले शान्तस्थिरे साम्प्रतं
सर्वोपर्यपि शोभना विजयते कान्तिच्छटा कापि ते ॥

मनसि मे जायते त्वय्येव विश्वस्य पूजासम्भारः सत्यम् उपपद्यते ।

शारदा—(चन्द्रमणिं प्रणम्य) महाजननि ! भूयो भूयस्ते पदरजांसि मूर्धनि धारयामि । मातुराशीर्वादापेक्षि सर्वं सुखम् । मातुर्गरीयसी कापि जगति नास्ति । तव पुत्रस्येदममृतमयं भाषितम्—

मातुः सृष्टिः सर्वा मातुः पुत्रस्य को नु वा भेदः ।
पुत्रेऽपि मातरीव प्रकाशते सा महाजननी ॥

मातः ! एतत् सर्वं त्वां दृष्ट्वैव मयाऽनायासेन प्रतीयते, त्वमेव महाजननी मातः !

चन्द्रमणिः—(स्वगतम्) ईदृशी निष्ठा, ईदृशी भक्तिश्च अचिन्तितपूर्वे एव । सत्यं नु हृदयेन एकदा कथितं तमुद्दिश्य गदाधरस्य मधुरं वचः—

कञ्चित् सहस्व समयं निर्मास्ये मानुषीषु जगदम्बाम् ।
हृदय ! जगन्मातेव हि जननी सर्वस्य शारदा भविता ॥

(शारदामणिमुद्दिश्य) वधूमातः! सतीसावित्र्योरपि अभ्यधिकपुण्यात्मिकायास्ते चिरकल्याणमनिवार्यमेव । त्वं जगतः शान्तिस्थानं भव । त्वं महाजननी भव ।

(ततः रामकृष्णः प्रविशति)

**रामकृष्णः**—फलहारिण्याः कालिकायाः पूजादिवसेऽद्य अहं सर्वार्थसाधिकां जननीं षोडशीं संपूजयिष्यामि । यामिन्या मध्यभागे लग्नः । पूजोपकरणानि सर्वाणि हृदय एव संग्रहीष्यति । (शारदादेवीमुद्दिश्य) उपकरणानां सर्वेषां प्रस्तुतिः त्वय्येव उपपद्यते । उपवासश्च ते करणीयः ।

(निष्क्रान्ताः सर्वे)

। इति प्रथमदृश्यं समाप्तम् ।

। द्वितीयदृश्यम् ।

(ज्येष्ठमासस्यामावास्याया मध्यभागो निशीथिन्याः । सुसज्जितो रामकृष्णस्य स्वकक्षः । मातुः षोडशीदेव्या आसनं सुसज्जितम् । आम्रपल्लवादिसंयुतं घटादिकम् । नैवेद्यम् । पुष्पचन्दनधूपदीपादिपूजोपकरणानि ।)

(शारदा एकाकिनी उत्कण्ठाकुला प्रविशति)

**शारदा**—पूजासमयः समागत एव । कथं नाथस्य विलम्बः? (अदूरे रामकृष्णं दृष्ट्वा) अहो! आनन्दो मे! देव आयाति महाजनन्याः संपूजनार्थम् ।

**रामकृष्णः**—आयाहि! स्वहस्तेन सुसज्जितां करोमि त्वाम् ।

**शारदा**—कैरुपकरणैः ।

**रामकृष्णः**—यैर्मृन्मयी प्रतिमा सज्जिता क्रियते तैरेव अलक्तकशाटिकासिन्दूरप्रभृतिभिः । पूर्वास्यस्य मे पुरत एव त्वं पश्चिमास्या मातुरासने एव उपविश ।

**शारदा**—कथमहम्?

रामकृष्णः—त्वमेव अद्य त्रिपुरासुन्दरी भूत्वा मे पूजां ग्रहीष्यसि। अस्मिन् कक्षे षोडशोपचारैः त्वमेम षोडशी शारदा श्यामा सर्वमङ्गला समर्चनीया।

शारदा—किमिति देवीं षोडशीं परित्यज्य मानुषीं मां समर्चयितुमिच्छति देवः?

रामकृष्णः—शारदे! यन्मया पूर्वमुक्तं ("येयं सृष्टिलयस्थितिप्रणयिनी" इत्यादि पुनः पठति) तस्य याथार्थ्ये मा नाम कस्यापि संशयो भूदिति स्वाचरणेन प्रमाणीकर्तुं ममायमुद्यमः।

शारदा—अथैवं देवहेलनेन कच्चिदावयोः प्रत्यवायो न भवेत्?

रामकृष्णः—कथं देवहेलनं कथं वा प्रत्यवाय आशङ्क्यते? सैव देवी पूज्यते, भेदः परम् आधारे। आधारभेदश्च प्राचाम् अपि सम्मत एव। किञ्च—

मृन्मय्यां प्रतिपूजिता भगवती मूर्तौ घटे वा पटे
सन्तुष्येद् यदि किं स्वकीय-तनुजे तुष्येन्न सा मानुषे।
तस्मान्निष्कलुषां विधाय भवतीमाधारमन्यादृशं
पूज्याद्य त्रिपुरा मया शुभदिने कः प्रत्यवायोऽत्र नौ॥

शारदा—किमत्र मया वक्तव्यम्? यथा भवते रोचते तथा कुरु।

(पुष्पचन्दनैः पूजनं भोगदानं धूपदीपादिदानं पञ्चप्रदीपशिखाभिः आरात्रिकं च। एवं षोडशोपचारैः रामकृष्णः शारदामणिं पूजयित्वा प्रार्थयते)

शक्तिस्वरूपे त्रिपुरेश्वरीड्ये
द्वारं समुद्घाटय देवि सिद्धेः।
अस्याः समुद्भूय तनौ पुनीहि
तनुं मनश्चातनु मङ्गलञ्च॥

शारदा—(स्वगतम्) हन्त!

स्वेदः स्रवति देहान्मे शिरो घूर्णति सन्ततम्।
क्रमादपैति चैतन्यं विषप्रसरणाद् यथा॥

(श्रीरामकृष्णः शारदामणिश्च समाधिस्थौ)

(चिरात् उत्थाय)

रामकृष्णः—"यद्दत्तं भक्तिभावेन पत्रं पुष्पं फलं जलम् ।
आवेदितञ्च नैवेद्यं तद्गृहाणानुकम्पया ॥"

देवि ! गृहाण, गृहाण मां मम साधनफलं मम जपमालाञ्च ।

(इति मालां देव्यै निवेद्य)

"सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्रियम्बके गौरि नारायणि नमोऽस्तु ते ॥"

(इति साष्टाङ्गं प्रणमति)

॥ इति समाप्तं द्वितीयं दृश्यम् ॥

॥ समाप्तश्च द्वितीयोऽङ्कः ॥

# गोदागाथाः[1]

टि. एस्. श्रीनिवासाचार्यः

कोदै - नाच्चियार्तिरुमोळि -

(१-१० : स्वप्नदर्शनम् )

६-१. वारणमायिरम् -

स्वप्नेऽद्राक्षं सखि ! कलभमारुह्य मित्रप्रकाण्डैः
हस्त्यारूढैः परिवृत इहायाति शौरिर्हि देवः ।
इत्यौत्सुक्यात् पुरवरमिदं मण्डितं तोरणाद्यैः
मोचापूगीविटपिततिभिः पूर्णकुम्भैश्च सान्द्रम् ॥ १ ॥

६-२. नाळै वदुवै -

स्वप्नेऽद्राक्षं सखि ! सुवदने ! भाविनि श्वो विवाहे,
पूगीरम्भातरुभिरभितश्चित्रमाल्यैश्च जुष्टम् ।
रम्यैर्नानामणिभिरमलैर्मण्डपे द्योतमाने
देवं शौरिं वृषभमतुलं सानुगं तं विशन्तम् ॥ २ ॥

६-३. इन्दिरन् -

स्वप्नेऽद्राक्षं सह मुनिगणैर्ब्रह्मरुद्रेन्द्रमुख्यैः
देवैश्शौरेः समुचितवधूं मां विनिश्चित्य पश्चात् ।
सम्मन्त्र्यास्मत्परिणयविधौ शोभनैः क्षौममाल्यैः
भूषाभिर्मामधिकरुचिरां कुर्वतीं तत्र दुर्गाम् ॥ ३ ॥

६-४. नाल्तिशै -

स्वप्नेऽद्राक्षं प्रवरसरसां ह्लादिनीनां च तीर्थैः
पूतैर्मन्त्रैर्द्विजवरगणैः प्रोक्षितां स्वस्तिवाकैः ।

1. गोदा-कोदै-आण्डाळ् इति दाक्षिणात्य-श्रीवैष्णवसम्प्रदाये नायिकाभावेन भगवन्तं प्रपन्ना, यया तेनैव भावेन "तिरुप्पावै, नाच्चियार्तिरुमोळि" इति प्रथिता गाथा तमिल्भाषया गीताः ।

तत्र पश्चादुदाहृताद्गाथासङ्ग्रहादुद्धृत्यानूदिता अत्र एता गाथाः । कविनाऽनेन गोदागाथानुसारिणः श्लोकाः स्वकीये पद्मिनीपरिणय-नाम्नि काव्ये अद्याप्यमुद्रिते निबद्धाः ।

सार्कं तेन प्रवरकुसुमोद्दामदाम्ना हि भर्त्रा
मामाबद्धप्रतिसरयुतां शौरिणा पावनेन ॥ ४ ॥

६-५. कतिरोळि -

स्वप्नेऽद्राक्षं कलशनिवहान् भास्करार्चिर्विदीप्तान्
धृत्वा दीपान् मदनतरुणीतुल्यभाभिर्वधूभिः ।
प्रत्युद्यातं कनकरुचिरे पादुके न्यस्य कोणे
देवं शौरिं कलकलरवैर्मण्डपं तं विशन्तम् ॥ ५ ॥

६-६. मद्दलम्

स्वप्नेऽद्राक्षं पणवनिनदैः शङ्खभेरीनिनादैः
वंशीघोषैर्मुरजकलशीनिस्वनैश्चापि घुष्टे ।
तस्मिन् वेद्यां सवलयमिमं मामकीनं तु हस्तं
गृह्णन्तं तं मधुरिपुमहं स्विन्नहस्ता विमुग्धा ॥ ६ ॥

६-७. वायूनल्लार् -

स्वप्ने दृष्टः श्रवणमधुरैर्मन्त्रघोषैर्द्विजेन्द्रैः
दीप्ते वह्नौ परिविलसिते विष्वगास्तीर्णदर्भे ।
तस्मिन् शौरिः कलभसदृशो हव्यवाहं समन्तात्
गृह्णन् हस्तं मम सुवदने दक्षिणेन प्रसर्पन् ॥ ७ ॥

६-८. इम्मैक्कुं -

स्वप्ने दृष्टः स हि जनिमतां संसृतौ मज्जतां नः
त्वस्मिन् जन्मन्यखिलजनने यः शरण्योऽखिलात्मा ।
सोऽयं शौरिः कमलमृदुना पाणिना मामकीनं
पादं धृत्वा दृषदि विदधत्सप्तपद्यां प्रियो मे ॥ ८ ॥

६-९. वरिशिलै -

स्वप्ने दृष्टः स किल सुभगः पद्मको मामकीनो
भ्राता, वह्नेः परिसरगतां मां नयंस्तत्र शौरेः ।
हस्तस्याग्रे मम करतलं न्यस्य होमार्थलाजा-
नादायास्मत्करतलपुटे प्रक्षिपन् संप्रहृष्टः ॥ ९ ॥

६-१०. कुङ्कुमम् -

स्वप्नेऽद्राक्षमहं मतङ्गजगतावावां प्रतोल्यां पुरः
साकं शीतसुगन्धिवारिकलशैर्यान्तौ पुरं दक्षिणम् ।
लिप्तौ कुङ्कुमकर्दमेन सदनं संप्राप्य संस्नापितौ
माङ्गल्येन सुगन्धिचन्दनरसोन्मिश्रेण शीताम्बुना ॥ १० ॥

२-१. तैयोरु तिङ्गलुम् - (मदनप्रार्थना ११ - १७)

पौषे नित्यं मदन! सदनं मण्डलं कल्पयन्ती
रथ्याश्चाहं विशदमृदुलैः सैकतैर्मण्डयन्ती ।
मासं त्वेकं परिकरयुता सानुजं त्वां नमस्या-
म्येनां दीनां पविवरभृते शौरये कल्पयेथाः ॥ ११ ॥

२-२. वेळ्ळैनुण् -

स्नात्वा कल्ये तव हि विशिखां वालुकाभिर्विभूष्य
श्रेष्ठास्त्वग्नौ समिध इह ते मन्त्रपूर्वं निधाय ।
अर्चिष्यन्तीं मदन! कुसुमैः सायकैर्मां तु लक्ष्ये
शौरौ क्षिप्येस्त्वमिह बकविध्वंसने देवदेवे ॥ १२ ॥

२. ३. मत्तनन्नरुमलर्-

शिग्रून्मत्तप्रभृतिकुसुमैरर्चयन्ती त्रिसन्ध्यं
निन्द्यां नाहं कथमपि यथा त्वां, तथा चित्तभित्याम् ।
शौरेर्न्यस्यञ्जलधररुचेर्नाम गुच्छैः सुमानां
मां विध्येस्त्वं मदन! यदहं तं विशेयं प्रदीपम् ॥ १३ ॥

२. ५. वानिडै

देवेभ्यो यद्धविरिह कृतं मन्त्रपूतं द्विजेन्द्रैः
गोमायुस्तद्धविरभिलषन् मङ्क्षु धावेद्यथा हि ।
स्फीतं ह्यद्य स्तनयुगमिदं चक्रिणे शौरये मे
मर्त्यार्हं चेत् कथयति जनस्तत्क्षणे स्यां विनष्टा ॥ १४ ॥

१. ७. कायुडै

त्वत्संप्रीत्यै कलमकणिशानिक्षुदण्डान् गुडांश्च
श्लाघ्यान् रस्यान् पृथुकनिकरांस्तण्डुलांश्चोपकल्प्य ।
विप्रैः पूजां मदन ! रचये शौरिणा स्यां यथाहं
स्पृष्टा मध्ये निबिडकुचयोस्त्वं तथा मां दयेथाः ॥ १५ ॥

१. ८. माशुडै

केशैः कीर्णैः समलवपुषा पाण्डरेणाधरेणो-
पेता जग्ध्वा सकृदिह चरुं, कुर्वतीत्थं व्रतं ते ।
साहं दृश्या स्मर! करुणया, संविधत्स्वाद्य भक्तां
शौरेर्दिव्यं चरणयुगलं मर्दयन्तीं कृतार्थाम् ॥ १६ ॥

१. ९. तोळुदु

नित्यं पुष्पैस्तव पदयुगं पूजयन्ती त्रिसन्ध्यं
नाहं लप्स्ये यदि करुणया शौरिराजस्य दास्यम् ।
उच्छूनाक्षीं मदन ! रुदतीं वीक्ष्य मां तप्स्यसि त्वं
कर्षन्तं क्ष्मामनशनमिवाऽऽताडितं गां युगेन ॥ १७ ॥

५. १ मन्नुपेरुम्पुकळ् (पिकसन्देशः १८ - २५)

शौरिं श्यामं प्रथितयशसं माधवं प्राप्तुकामा
जाता साहं गलितवलया युक्तमेतत् किमु स्यात् ।
उद्यानेऽस्मिन् विहरसि वधूसङ्गतो मामकीने,
बिम्बोष्ठं तं पिक! निनद स त्वागतः स्याद्यथाशु ॥ १८ ॥

५. २. वेळ्ळैविळिशङ्गु

वामे शङ्खं धरति हि करे यः स शौरिस्स्वकीयं
दिव्यं रूपं नयनविषयं नो विधत्तेऽद्य चित्ते ।
स्थित्वा मां तु प्रशिथिलतनुं जीवयन्नर्तयित्वा
क्रीडत्येवं पिक ! निनद तत्सन्निधिं प्राप्य तूर्णम् ॥ १९ ॥

५. ३. मातलि तेर्

सीताप्रीत्यै रघुकुलपतिर्योऽवधीदस्त्रजालैः
रक्षोधीशं, स तु सकरुणोऽप्यद्य (त्र) नायाति शौरिः ।
शृण्वन् गीतिं मधुकरकृतां वृक्षषण्डे शयानः
कान्तायुक्तः पिक! विहरसे शौरिमद्याह्वयेस्त्वम् ॥ २० ॥

५. ४. एन्बुरुकि

अक्ष्णोर्युग्मं मम न लभते पक्ष्मणा संप्रयोगं
तस्मान्यस्थीन्यहमशरणा दुःखसिन्धौ निमग्ना ।
शौरिं पोतं न समुपलभे, वेत्सि विश्लेषदुःखं
त्वं दीप्ताङ्गं खगपतिरथं [1]पुण्यमद्याह्वयेस्तम् ॥ ॥ २१ ॥

५. ५. मेन्नडै

हंसी लीलाविहृतिविलसत्कृष्णपुर्यास्तु नेतुः
शौरेर्द्रष्टुं पदकिसलये चक्षुषी मे विनिद्रे ।
साहं कीरं मम तु पयसा पायसान्नेन पुष्टं
कुर्यां मित्रं तव पिक ! पदाक्रान्तलोकं ह्वयेस्त्वम् ॥ २२ ॥

५. ६. एत्तिशैयुम्

देवैः सर्वैर्दिशि दिशि सदाऽभिष्टुतेनार्थमाना
ह्रीये दीप्त्या वदनकुचयोर्दिव्यया शौरिणाहम् ।
शेषे वृक्षे स्तबकशयने त्वं कृती, तं हि तत्त्वं[2]
यद्याह्वास्यस्तव पदयुगं मूर्ध्नि भूषाऽभविष्यत् ॥ २३ ॥

५. ७. पोङ्गिय

क्षीराम्भोधावहिपतिशयं शौरिमाश्लेष्टुकामौ
स्फीतावेतौ पिक ! मम कुचौ कौतुकात् पीडयन्तौ ।
कुर्वाते मां क्षुभितहृदयां, त्वं तु कुत्रापि लीनः
शब्दायेथा यदि पविकरं भूरि धर्मं भजेथाः ॥ २४ ॥

---

(1) पुण्यं "पुण्णियनै" इति गाथायाम् । धर्मस्वरूपिणम् इति यावत् ।
(2) तत्त्वं "तत्तुवनै" इति गाथायाम् । परतत्त्वभूतं इति यावत् ।

५. १०. अनुरुलकम्

प्रीत्या शौरेः पदकमलयोः क्रान्तलोकस्य भर्तुः
कैङ्कर्येप्सुं सहविधुरिमां बाधते मन्दवातः ।
क्लिष्टामेवं पिक ! तव रुतैः क्लेशयेश्चेत् पुनर्मां
रम्यादस्मादुपवनतटाद्द्रावयेयं भवन्तम् ॥ २५ ॥

८. १ विण्णील - (मेघदूतप्रेषणम् २६ - ३२)

स्थिताः सुरपथे स्वयं विततमेचकोल्लोचवद्
घनाः ! किमु समागतः स किल कृष्णपुर्याः पतिः ।
कुचौ स्नपयतोऽश्रुणा विरहवह्निना ताम्यतो
जनस्य समुपेक्षणात् किमु यशो महत् प्राप्स्यति ॥ २६ ॥

८. २. मामुत्त

अमूल्यवरमौक्तिकप्रकरवर्षिणो भो घनाः !
वचः किमु विभावरीरुचिहरस्य शौरेः प्रभोः ।
जनोऽयमधुना पुनर्मदनवह्नितप्तान्तरः
कथं भवतु गोचरो मलयजस्य वायोर्निशि ॥ २७ ॥

८. ३. ओळिवण्णम्

पुरैव गळिता हि मद्वलयचित्तलज्जाप्रभाः
विचिन्त्य बलहीनतां मम किमप्यनुक्त्वा क्षणात् ।
गुणान् हि कनकापगाशिशिरकृष्णपुर्याः प्रभोः
विचिन्त्य ललितानसून् कथमहं घना ! धारये ॥ २८ ॥

८. ४. मिन्नाकत्तु

तडिद्रुचिसुभासुराः ! वरघनाः ! भुजाभ्यन्तरो-
ल्लसत्कमलवासिनीप्रियसखः स शौरिर्यथा ।
करोति परिरम्भणं कुचयुगे स्वयं मामके
तथा मम तृषां परामभिवदेत तस्मै दृढम् ॥ २९ ॥

८. ७. शङ्कमा

यदीह तव वक्षसा मम विलुप्यते चन्दनं
कुचोल्लसितमद्य मे स्थितिजुषोऽसवः स्युः प्रभो ।
इतीव विनिवेदनं कुरुत मामकीनं, पदे
प्रणम्य भुवि शौरये जलधिमन्थिने वारिदाः ॥ ३० ॥

८. ८. कार्कालत्तु

घनाः! गगनमेदुराः! जगति कृष्णपुर्याः प्रभोः
मृधे रिपुविमर्दिनो बत निगद्य नाम स्वयम् ।
[1]अलर्कदलवत्वहं तपसि शोषमेता, प्रियं
न वक्ति वचनं स किं किमपि भाव्यनेहस्सु वा ॥ ३१ ॥

८. ९. मदयानै

मतङ्गजसदृग्घनाः! रुचिरकृष्णपुर्या घनात्
वनादुपसमागताः! फणिशयस्य वार्ता किमु ।
अनन्यशरणा ह्यसौ गतिरिहास्ति नास्था इति
ह्यबुध्य ललनालताप्रमथनस्य का वा प्रथा ॥ ३२ ॥

१२. १. मर्रिरुन्दीर् (विरहव्यथानुभवः ३३ - ४१)

अद्धा! पुरा मृदुरसावबलाजनानां
मत्पाप्मनोऽद्य करुणां तनुते न शौरिः ।
मां काममार्गणहतां श्लथसर्वगात्रां
सख्यो! नयध्वमिह तत्सविधं हताशाम् ॥ ३३ ॥

१३. १. कण्णनेन्रुम्

सख्यो! व्रणे क्षारनिषेकतुल्यैः
अलं प्रलापैरिह वो विनेतुः ।
शौरेर्वधूदुःखमजानतो मां
पीताम्बरैर्वीजयताद्य तूर्णम् ॥ ३४ ॥

---

(1) अळर्कः-श्वेतार्कः

१३. २. पालालिलैयिल

वटस्य पत्रे शयितुः परस्य
शौरेस्तु दृग्वागुरिकां गतायाः ।
अलङ्कुरुध्वं मम केशपाशान्
स्रग्भिर्धृताभिस्त्वमुना तुलस्याः ॥ ३५ ॥

१३. ३. कञ्जैक्कायन्द

कंसद्विषः स्वस्य कटाक्षविद्धा-
मलं शुचेतीह न वक्ति शौरिः ।
वक्षोधृतं दास्यति चेत् स माल्यं
वक्षोजयुग्मे परिवर्तयध्वम् ॥ ३६ ॥

१३. ४. आरे उलकत्तु

पल्ल्यां घृतक्षीरमुषाद्य भर्त्रा
त्विमामवस्थां गमितामनाथाम् ।
सुधोपमं तद्वदनोद्भवं तत्
निपाय्य पीयूषमिमामवेत ॥ ३७ ॥

१३. ६. नडैयोन्रु

अतीतसंस्थेन तु नन्दजेन
क्षुण्णा विलज्जेन सुकर्कशेन ।
क्षुण्णात् पथस्तत्पदधूलिमाप्त्वा
[1]विलिम्पतेदन्त्वगतासु वर्ष्म ॥ ३८ ॥

१३. ७. वेररिक्करुळ

तार्क्ष्यध्वजाज्ञानतिवर्तिलोके
प्रसूरमुं निम्बमिव ह्यपुण्यात् ।
बध्नीत तद्वक्षसि मत्कुचाविमौ
अनन्यभोग्यत्वमहापराधौ ॥ ३९ ॥

---

1 विलिम्पत+इदं+तु+अगतासु ।

१३. ८. उळ्ळे उरुकि

अन्तर्विलीनां शिथिलां तु यो मां
"किमस्त्यसौ ने"त्यविचार्य वर्तते ।
समूलमुन्मूल्य कुचौ तु तस्मिन्
दृष्टे क्षिपन्ती विजहानि तापम् ॥ ४० ॥

१३. ९. कोम्मैमुलैकळ्

कुचव्यथां मे व्यपनुद्य सेवां
शौरेर्न कुर्यां यदि भावि किं स्यात् ।
श्लिष्येद् भुजाभ्यां यदि मां स दृष्ट्वा
गच्छेति वा वक्ष्यति, तत्सुसाधु ॥ ४१ ॥

## अरविन्दभावनाः[1]

**अनु० जगन्नाथः**

**लक्ष्यम्—**

ज्ञानचेष्टा अतीत्यैव ज्ञानं समुपलप्स्यते ।
तर्क एव सहायोऽभूत् तर्क एवास्ति बाधकः ॥

एषणानि ह्यतीत्यैव शक्तिः समुपलप्स्यते ।
यत्न एव सहायोऽभूत् यत्न एवास्ति बाधकः ॥

सर्वभोगानतीत्यैव परानन्दोऽप्यवाप्स्यते ।
कामनैव सहायोऽभूत् कामनैवास्ति बाधिका ॥

व्यष्टिभावमतीत्यैव 'पुरुषाः' स्याम तत्त्वतः ।
अहम्भावः सहायोऽभूत् अहम्भावोऽस्ति बाधकः ॥

मनुष्यत्वमतीत्यैव मनवः स्याम सत्यतः ।
पशुभावः सहायोऽभूत् पशुभावोऽस्ति बाधकः ॥

परिणम्यस्त्वया तर्कः सम्बोधौ सुव्यवस्थिते ।
सर्वात्मना भव ज्योतिर्लक्ष्यमेतद् ध्रुवं तव ॥

परिणम्यस्त्वया यत्नः स्वात्मशक्तेः परिप्लवे ।
सर्वदैकरसे शान्ते महामहिमशालिनि ।
भव चिच्छक्तिरेव त्वं लक्ष्यमेतद् ध्रुवं तव ॥

परिणम्यस्त्वया भोगः समनिर्विषयोन्मदे ।
सर्वात्मना भवाऽऽनन्दो लक्ष्यमेतद् ध्रुवं तव ॥

परिणम्या पृथग्व्यष्टिस्त्वयेयं विश्वमानवे ।
सर्वात्मना भवेर्दिव्यो लक्ष्यमेतद् ध्रुवं तव ॥

परिणम्यः 'पशु'श्चापि तथा पशुपतौ त्वया ।
सर्वात्मना भवेः कृष्णः लक्ष्यमेतद् ध्रुवं तव ॥

*　　　*　　　*

---

1. Translation of part of Sri Aurobindo's "*Thoughts and Glimpses*".

न यन्मया शक्यमिहाद्य कर्तुं
करिष्यमाणस्य हि लक्षणं तत् ।
असम्भवत्वानुभवो भवेऽस्मिन्
सम्भावनानां शुभसूत्रपातः ॥

विनश्वरं विश्वमलक्ष्यतेदं
यतो ह्यसाध्यं वदतो विरोधि ।
तस्मात् प्रभुः शाश्वतसत्स्वरूपः
सत्त्वान्निजात् सर्वमिदं ससर्ज ॥

असम्भवो नाम हि सम्भवाना-
मसाधितानां बृहतां समष्टिः ।
उच्चस्थितेरावरणं स यात्रा-
मार्गस्य चाद्यापि न लङ्घितस्य ॥

मनुष्यजातेः प्रगतिर्यदीप्सिता
स्वभावना घ्नुतुहि पूर्वकल्पिताः ।
विचारणा चेतति चैवमाहता
भवत्यपूर्वं नवसर्जनक्षमा ।
नो चेत् निजावृत्तिमसौ हि यन्त्रवत्
करोति तां वेत्ति च सत्क्रियां भ्रमात् ॥

निजाक्षभ्रमिरेवैका न गतिः मानवात्मनः ।
अक्षयज्योतिषोऽर्कस्य परितोऽप्यस्ति हि भ्रमिः ॥

आत्मानं विद्धि पश्चाच्च कुरु कर्म च चिन्तनम् ।
प्राणवच्चिन्तनं सर्वं सृज्यमानजगन्मयम् ॥

यथार्थं कर्म यद्, व्यक्तीभूता तत् संविदेन हि ।
भावः कोऽपि यतो लीलामारेभे ह्यात्मसंविदि ।

दिव्यायाम्, अत एवैतद् विद्यते प्राकृतं जगत् ॥

विचारो नास्त्युपादानं सत्ताया अनिवार्यतः ॥

नापि हेतुरसौ तस्याः, सम्भूतेः साधनं तु सः ।
तदेवाहं भवामीह यत्पश्यामि निजान्तरे ॥

तत्सर्वं कर्तुमीशे यद् विचारो मां विनिर्दिशेत् ।
प्रभुस्तद् भवितुं यच्च विचारो व्यञ्जयेन्मयि ॥

ईदृश्यविचला श्रद्धा धार्या पुंसा निजात्मनि ।
यतो हि भगवाँस्तस्मिन् अन्तर्वसति सर्वसदा ॥

नास्मत्कार्यं नृणा पूर्वकृतस्यैव पुराः कृतिः ।
सम्प्राप्तिरेव सिद्धीनां नव्यानां ननु कर्म नः ॥

स्वप्नेऽपि नैव दृष्टानामीशित्वानां तथैव च ।
कालश्चात्मेहलोकश्च क्षेत्रत्वेनाऽर्पिता हि नः ॥

दृष्टिराशा तथा स्रष्टी कल्पना प्रेरिकाश्च नः ।
संकल्पचिन्तनाऽऽयासा उपायाः सर्वसिद्धिदाः ॥

किन्तु तन्नूतनं यन्नः साध्यमद्यापि विद्यते ।
प्रेम, कस्मात् ? यतोऽस्माभिरद्य यावत्तु साधिताः ।
केवलं द्वेषविद्वेषौ स्वात्मसन्तोष एव च ॥

ज्ञानम्, कस्मात् ? यतोऽस्माभिः साधिता ह्यधुनावधि ।
भ्रान्तिरिन्द्रियसंवित्तिः कल्पनैव च केवलम् ॥

आनन्दोऽपि यतोऽस्माभिः साधितान्यधुनावधि ।
केवलं हि सुखं दुःखमौदासीन्यं तथैव च ।

शक्तिश्चापि, यतोऽस्माभिः साधितान्यधुनावधि ।
दौर्बल्यश्चैव चेष्टा च जयश्चैव पराजितः ॥

जीवनञ्च, यतोऽस्माभिः साधितान्यधुनावधि ॥

जननं वर्धनञ्चैव मरणञ्चैव केवलम् ॥
एकत्वञ्च, यतोऽद्यापि साधितौ सङ्घ-सङ्गरौ ।
देवत्वं, सारतः स्वस्मिन् देवमूर्तेर्विनिर्मितिः ॥

सद्-आनन्दमयम्—

ब्रह्म स्यान्निर्विशेषं चेत् नीरूपं चैव निर्गुणम् ।
शश्वन्नो मूर्तसत्ताया दृश्यसत्वविरोधि च ॥

तदाऽस्य सकलस्यान्तो लय एवोचितो भवेत् ।
विचार्याः किन्तु सन्त्यत्र प्रेमानन्दाऽऽत्मसंविदः ॥

विश्वमिदं नो केवलमास्ते सूत्रं हि गणितस्य ।
यत्स्यान्मानसिकानां केषाञ्चिन्निर्विशेषाणाम् ॥

सङ्ख्या तत्त्वानीति च नामद्वयकीर्तितानां हि ।
भावानां सम्बन्धं निर्धारयितुं प्रयोक्तव्यम् ॥

येन स्याम समर्थाः सम्प्राप्तुं ह्यन्ततः शून्यम् ।
किं वा रिक्तमसारं नितरां निर्वस्तुकं ह्येकम् ॥

नापि च विश्वमिदं भो व्यापारः स्थूलभौतिको ह्येव ।
यो बहुविधशक्तीनां समीकृतेर्व्यञ्जकोऽस्तु कस्याश्चित् ॥

किन्तु स्वात्मप्रेमिण आनन्दः सर्वमेवैतत् ।
अपि वा सनातनशिशोः लीला कस्यापि भातीयम् ॥

आत्मबहूकरणं वाऽनन्तं शाश्वतकवेर्हि कस्यापि ।
निजनिःसीमितसर्जनशक्तेरुन्मदभरेण मत्तस्य ॥

'पुरुषः परात्परोऽसौ गणितज्ञ इवास्ति सर्वमहान् ।
प्रश्नं समादधद्यः विश्वात्मकमस्ति बहुराशिम् ॥

यद्वा विचारकोऽसौ परीक्षणैर्यः समादधातीव ।
तत्त्वानामितरेतरसम्बन्धानां विचारणारूपाम् ।
किं वा महासमस्यां सन्तुलनस्यैव शक्तीनाम् ।'

इत्येवं व्याहर्तुं वयमर्हामो यथाकामम् ।
किन्त्विदमपि वक्तव्यं यदसौ प्रेमीव वर्तते सुमहान् ॥

वैश्वव्यक्तिगतानां स्वरसाम्यानां सुगायकश्चैव ।
अपि वाऽसौ शिशुरेकः कविरिव वाऽऽस्ते सनातनः कश्चित् ॥

नालं तु चिन्तनायाः पक्षो जात्वस्ति विषयेऽस्मिन् ।
ग्राह्यः समग्ररीत्या ह्यानन्दस्यापि पक्षोऽत्र ॥

सत्ताश्चापि विचारास्तत्त्वान्यथ शक्तयश्चापि ।
सकलान्यमूनि नूनं केवलशून्या हि सञ्चकास्तावत् ॥

यावन्न पूरितानि हि भगवत आनन्दनिश्वासैः ।
सर्वेऽप्यर्थाः प्रतिमा एते प्रतिमैव किन्तु विश्वमिदम् ॥

भावा ब्रुवन्त्यमूर्ताः शुद्धविचारं सदैशसत्यानाम् ।
प्रतिमास्तावत्तेषां वास्तवसत्तां सजीवां हि ॥

आश्लिष्यन्ती शक्तिं लोकान् यद्यर्थभावनासूत ।
तामप्युत्पादितवानानन्दः सत्स्वरूपस्य ॥

यतो ह्यनन्तो देवोऽमितविधमानन्दमात्मगर्भेऽधात् ।
तत एवाजनि जगतां ब्रह्माण्डानां च सृष्टिरखिलानाम् ॥

चिदानन्दौ सतो ह्याद्यौ जनकौ जगतां ततेः ।
एतावेवान्तिमे चापि तत्त्वे नूनं परात् परे ॥

अचैतन्यं हि मूर्च्छैव मध्यगा चेतनात्मनः ।
अथवा सुप्तिरेवैतत् तस्यास्ते तमसावृता ॥

वेदनाऽऽत्मविलोपो वा सत्त्वानन्दः स केवलम् ।
योऽपयात्यात्मनः, प्राप्तुं स्वमेवान्यत्र चान्यथा ॥

आनन्दः सत्स्वरूपस्य सीमितो नास्ति कालतः ।
नैवास्ति तस्य कोऽप्यन्तः न चादिरपि कश्चन ॥

रूपान्निर्याति वस्तूनामेकस्माद् यन्महेश्वरः ।
तत् प्रवेशार्थमन्यस्मिन् रूपे नव्ये हि केवलम् ॥

कस्तावदीश्वरो नाम ? सोऽस्त्येकः शाश्वतः शिशुः ।
कुर्वाणः शाश्वताऽऽरामे लीलां कामपि शाश्वतीम् ॥

पुरुषः—

प्रभुर्न पारयेत् त्यक्तुमानतिं प्रकृतिं प्रति ।
न च शक्तो नरो हातुं स्वामभीप्सामभुं प्रति ॥

सम्बन्धोऽयमनन्तस्य सान्तस्य च सनातनः ।
अन्योन्यस्माद्धि वैमुख्यं यान्तौ भातो यदा त्वमू ।
संयोगाय प्रगाढाय तत् परावर्तनं तयोः ॥

मनुजे प्रकृतिर्जगतः पुनरात्मसचेतना भवति ।
येन निजं भोक्तारं प्रति सा प्रभवेत् सुदूरमुत्प्लवितुम् ।
अमुमेवासौ निभृतं धत्ते ह्यज्ञानपूर्वकं स्वान्तः ॥

अमुमेवाऽस्मत्प्राणा निजान्तरे दधति चैन्द्रिया बोधाः ।
दधतोऽपि निषेधन्ति प्रतिषेधन्तोऽपि मृगयन्ते ॥

स्वं न हि वेत्तीत्येव प्रकृतिर्जगतो न वेत्ति परमेशम् ।
ज्ञात्वैवात्मानमसौ ज्ञास्यति हि सतो विशुद्धमानन्दम् ॥

रहस्यं प्राप्तिरेकत्वे नैकत्वे लुप्तिरात्मनः ।
विश्वातीतश्च विश्वं च विश्वेशो मानवस्तथा ॥

यदान्योन्यं विजानीतस्तदैकीभवतो ध्रुवम् ।
विभेदश्चानयोर्नूनमज्ञानस्यादिकारणम् ।
यथाऽविद्योत्थमज्ञानं दुःखानां मूलकारणम् ॥

आदावयं मार्गति मानवोऽन्धवत्
न वेद चासौ यदहं गवेषये ।

निजं स्वरूपं ननु दिव्यमित्यदो
यात्रां यतो ह्यारभते निजामसौ ॥

जडात्मिकायाः प्रकृतेस्तमःस्थितेः
यदा पुनः प्रक्रमतेऽवलोकितुम् ।
आन्ध्यं तदाप्यत्र चिराय नीयते
स ज्योतिषाऽन्तर्हृदये समृध्यता ॥

प्रत्युत्तरं तस्य गवेषणावलेः
अस्पष्टमेव प्रददाति चेश्वरः ।
तस्यान्धतां मृग्यति चाभिनन्दति
मातेव हस्तौ स्वशिशोः प्रसारितौ
तां मार्गयन्तौ तिमिरेऽन्धवत् प्रियौ ॥

ईश्वरप्रकृती बालौ क्रीडाप्रेमरताविव ।
दृष्टमात्रौ निलीयेते अन्योन्यस्माच्च धावतः ।
मृग्येतामनुधाव्येतां गृह्येतां पुनरित्यतः ॥

मानवोऽस्तीश्वरो यः स्वं प्रकृतेर्गोपयत्यलम् ।
येन तां सोऽधिकुर्वीत सङ्घर्षणाग्रहेण च ॥

प्रयोगेण बलस्यापि सहसाक्रमणेन च ।
ईश्वरो मानवो ह्येव विश्वातीतश्च विश्वगः ॥

गूहते व्यष्टिभावाद् यः स्वस्मात् स्वं जीववर्तिनः ।
पशुर्हि मानवो नाम च्छन्नो यो लोमशत्वचा ॥

चतुर्षु यश्च पादेषु भूमौ भवति संस्थितः ।
कीटोऽपि मानवो नाम यः प्रसर्पश्च संकुचन् ॥

स्वीयस्य मानवत्वस्य विकासं प्रति गच्छति ।
प्रकृतेरपि रूपाणि स्थूलानि च जडात्मनः ॥

मानवा एव देहस्य प्राग्विकासं समास्थिता: ।
सकलान्यपि वस्तूनि 'पुरुषा'ऽऽत्मकमानवा: ॥

को ह्ययं मानवो नाम ? सोऽस्त्यात्माऽजोऽविनश्वरः ।
स्वतत्त्वैर्निर्मिते देहे मानसे चास्थितोऽस्ति यः ॥

परिसमाप्तिः—

मानवेश्वरयोर्योगस्याभिप्रायः सदैष यत् ।
मानुष्ये दिव्यतायाः स्यात् संचारोऽथ प्रवेशनम् ।
मानवस्य च देवत्वे भवेदात्मनिमज्जनम् ।

किन्तु तन्मज्जनं नास्ति लयरूपं मनागपि ॥

सर्वस्यान्वेषणस्यास्य सर्वावेगगणस्य च ।
हर्षोद्रेकस्य दुःखस्य निर्वाणं नान्तिमं फलम् ॥

अन्तोऽभविष्यदेतस्या लीलाया अयमेव चेत् ।
तदा त्वस्याः समारम्भो न कदापि व्यधास्यत ॥

आनन्द एव विश्वस्य रहस्यं परमोत्तमम् ।
जानीहि शुद्धमानन्दं ज्ञास्यसे परमेश्वरम् ॥

कस्तावत् सकलस्यादिरस्यार्थस्याभवत् किल ।
सद् यत् स्वं बहुधा चक्रे सत्तानन्दैकलब्धये ॥

व्यधाच्च गणनातीतकोटिरूपेषु मज्जनम् ।
येनाऽसङ्ख्यविधत्वेन स्वं प्राप्तुं पारयेत तत् ॥

कश्च मध्योऽस्य सर्वस्य ? भेदोऽसौ वर्तते किल ।
यो बाहुल्यमयैकत्वलब्धये यततेतराम् ॥

तदज्ञानं च यत्कृच्छ्रचेष्टारतमनारतम् ।
यातुं वैचित्र्यपूर्णस्य ज्योतिष्पूरस्य सम्मुखम् ॥

तद्दुःखं चापि यत्कष्टकरायासं निषेवते ।
अकल्प्यपरमानन्दसंस्पर्शस्योपलब्धये ॥

यतो ह्येतानि वस्तूनि सन्ति सर्वाणि मूर्तयः ।
अन्धकारात्मिका नूनं स्पन्दना विकृतास्तथा ॥

कश्चान्तोऽस्त्यस्य सर्वस्य? मधु शक्तं भवेदिव ।
स्वादितुं स्वं स्वबिन्दूंश्च युगपत् सकलांस्तथा ॥
ईशतां स्वादितुं सर्वेऽन्योन्यं तस्य च बिन्दवः ।
तेषु चात्मतयैकैको मधुकोशं तथाऽखिलम् ॥
ईदृगेवेश्वरस्येह तथा मानवरूपिणः ।
भुवनस्यापि चैतस्य भवेत् परिणतिर्ध्रुवम् ॥

प्रेम स्वरः प्रधानोऽत्राऽऽनन्दः सङ्गीतमस्ति च ।
शक्तिस्तानस्तथा ज्ञानं गायकं वर्तते किल ॥

अनन्तो यश्च सर्वात्मा कर्ता श्रोता च सोऽत्र हि ।
विस्वरानेव संविद्मः संप्रत्यारम्भिकान् वयम् ॥

ते तथा भीषणा भव्या यथा स्यात् स्वरसङ्गतिः ।
परं भागवतानन्दराशेः प्रोच्छलमूर्छनाम् ।
प्रखरां वयमाप्स्यामो नात्र स्वल्पोऽपि संशयः ॥

बन्धनशृङ्खलम्—

स्पृहयालु जगत्सर्वं स्वातन्त्र्यावाप्तये किल ।
तथापि प्राणिनां स्वानि बन्धनानि प्रियाण्यहो ॥

विरोधाभास एवायं प्रथमः प्रकृतेर्हि नः ।
ग्रन्थिश्च यो न कस्यापि समुन्मोच्यः कथञ्चन ॥

प्रियाणि मानवस्येह बन्धनानि हि जन्मतः ।
तत्सङ्गिबन्धनेष्वस्मान् मृत्योरप्येष गृह्यते ॥

स्वसत्तामुक्तिमेतेषु सोऽभीप्सुः शृङ्खलेषु च ।
प्रभुत्वं च तथा स्वात्मपूर्णता रूपमप्यलम् ॥

मानवस्य प्रिया शक्तिरतोऽशक्तेर्वशेऽस्त्यसौ ।
संसारोऽयं यतः शक्तेस्तरङ्गाणां हि सागरः ।

येऽन्योन्यं मिलितास्तीव्रं समाघ्नन्ति निरन्तरम् ॥
आरुरुक्षेद्धि यः सानुमूर्मे रेकस्य मानवः ।
भाव्यं वीचिशताघातैस्तेनाचित्तेन निश्चितम् ॥

सुखं हि सुप्रियं पुंसो वर्तते पृथिवीतले ।
कष्टक्लेशभरस्तेनाऽवश्यवाह्यो भवत्यतः ।
मुद् विशुद्धा हि मुक्ताय विरागायैव चात्मने ॥
तत्त्वं यन् मानवान्तःस्थं समन्वेषयते सुखम् ।
तद् दुःखभोगिनी काचिच्छक्तिश्चातिप्रयासिनी ॥

मानवः क्षुधितः शान्त्यै तृषितोऽप्यनुभूतये ।
व्याकुलस्य च चित्तस्य विक्षुब्धहृदयस्य च ॥
भोगस्तन्मनसो भाति ज्वर एव हि केवलम् ।
शान्तिश्च जडताऽत्यन्ता भाति नीरसता तथा ॥

प्रियाः स्वस्थूलसत्तायाः सीमानो मनुजन्मनः ।
तथापीप्सुः स मुक्तिं स्वानन्तस्वान्ताऽमृतात्मनोः ॥

अद्भुताकर्षणं चैषु विरोधेष्वनुभूयते ।
तस्यान्तःस्थिततत्त्वेन रसकामेन केनचित् ॥
तस्य मानससत्तायै सुचित्रं जीवनस्य ते ।
न केवलं हि पीयूषं परन्तु विषमप्यहो ।

समाकर्षति तस्याभिरुचिं चापि कुतूहलम् ॥

*　　　*　　　*

अस्त्येवैषां च वस्तूनां समस्तानां प्रयोजनम् ॥

विरोधानां च सर्वेषां समाधानं हि वर्तते ।
संयोगेषु प्रकृत्याः स्यात् काममुन्मादपूर्णता ॥

किन्तु तत्र भवत्येव तस्याः काचन योजना ।
ग्रन्थीनामत्यमोच्यानां तस्याश्चास्ति समाहितिः ॥

मृत्युर्हि प्रकृतेः प्रश्नो जीवनं प्रति सन्ततम् ।
क्रियते यस्तया येन तच्च संस्मारयत्यसौ ॥

नाद्यापि तेन सम्प्राप्तं स्वरूपं निजमित्यहो ।
मृत्योश्चेन्नावरोधः स्यात् प्राणी बद्धो भवेत्सदा ॥

आकारेऽपूर्णताग्रस्तजीवनस्य सुनिश्चिते ।
मृत्युनानुसृतः पूर्णं जीवनं प्रति बुध्यते ।
तस्य मृग्यति शक्यत्वमुपायांश्चाप्यसौ ततः ॥

दौर्बल्यं कुरुते प्रश्नं शक्तीः प्रति तमेव नः ॥

ता महत्तास्तथोर्जा नो याभिः स्मो गर्विता वयम् ।
परीक्षां चापि तत्तासां कुरुते हि तथाविधाम् ॥

शक्तिर्लीलाविलासोऽस्ति जीवनस्य हि केवलम् ।
सा च दर्शयतेऽस्मभ्यं मात्रां तस्य यथायथम् ॥

तस्याभिव्यक्तिमूल्यं च सैव निर्णयति ध्रुवम् ।
दौर्बल्यं वर्तते लीला मृत्योरेवेह केवलम् ॥

जीवनस्य गतीः सर्वा योऽनुधावति सन्ततम् ।
प्रबलं निर्दिशत्यस्य प्राप्तशक्तेस्तथावधिम् ॥

दुःखं च वेदना चेति साधने प्रकृतेरुभे ।
यद्द्वारा नोऽन्तरात्मानमेतत् संस्मारयत्यसौ ॥

यत् सुखं तेन लोकेऽस्मिन् यत्किमप्युपभुज्यते ।
सत्ताया वास्तवानन्दमन्दसङ्केत एव तत् ॥

पीडायां यातनायां च प्रत्येकं जीवनस्य नः ।
अस्ति हर्षातिरेकस्य रहस्यं गुप्तमर्चिषः ॥

सुखानि नो महिष्ठानि विभान्ति यदपेक्षया ।
केवलं मन्दमन्दातिलोललोलाः शिखा इव ॥

एतदेव रहस्यं तत् येनात्माऽऽकृष्यते हि नः ।
महतीर्वेदनाश्चाग्निपरीक्षाश्चापि दारुणाः ॥

जीवनस्यानुभूतीश्च भीषणाः प्रति भूयसा ।
स्नाविरं नो मनो याभ्यो सत्रासं सम्पलायते ॥

सत्तायां सक्रियायां नस्तथा तत्करणेष्वपि ।
चाञ्चल्यं सञ्चरो यश्च सद्यःक्रान्तेर्विलोक्यते ॥

प्रकृत्या क्रियमाणोऽसौ सङ्केतो येन सूच्यते ।
शान्तिर्नो वास्तवाधारः संक्षोभश्चात्मनो रुजा ॥

केवलायाः प्रशान्तेर्या वन्ध्यता चैकरूपता ।
प्रकृतेरिङ्गिते ते स्तो याभ्यामेतत् तयेङ्ग्यते ॥

कर्मलीला तया तत्र दृढाधारेऽस्मदिष्यते ।
शश्वल्लीलां करोतीशो न जातूद्विजते तु सः ॥

अस्मद्देहस्य सीमानो विद्यन्ते सञ्चकोपमाः ।
स्वसत्ता तासु निक्षेप्या मनसा नस्तथात्मना ॥

भञ्जनीयास्ततस्ताश्च परिणम्याः पुनः पुनः ।
सीमासु सुविशालासु सुविशालतरासु च ॥

येन देहस्य सान्तस्याप्यानन्त्यस्यात्मचित्तयोः ।
सामञ्जस्यावहं सूत्रं भवेत्संप्राप्तमन्ततः ॥

स्वातन्त्र्यं नाम सत्तायास्तस्या धर्मोऽस्ति केवलम् ।
निजनिःसीमितैकत्वस्वरूपे या प्रतिष्ठिता ॥

स्वामि तत् प्रकृतेर्गुप्तं समस्तायाश्च वर्तते ।
दासत्वं नाम सत्तायाः प्रेमधर्मोऽन्तरस्थितः ॥

येनात्मनोऽन्यरूपाणां सत्तानेकत्ववर्तिनाम् ।
लीलायामर्पयत्येषा स्वं साह्यार्थं निजेच्छया ॥

स्वातन्त्र्यं कुरुते कार्यं बन्धनेषु यदा निजम् ।
दासत्वं च यदा स्वीयां विमुच्य प्रेमधर्मताम् ॥
बलात्कारस्य शक्तेश्च धर्मतामुपगच्छति ।
तदैव प्रकृतिः सत्या विकृतिं याति वस्तुनः ॥

अनृतस्याधिपत्यं च प्राबल्येन प्रवर्तते ।
व्यवहारेषु सर्वेषु जीवनेन सहात्मनः ॥

प्रकृतिर्विकृतेरस्याः कार्यमारभते निजम् ।
लीलां करोति सा पूर्वं संयोगैः सकलैश्च तैः ॥
येऽप्युद्भावयितुं शक्या विकृत्या जगतीतले ।
तदनन्तरमेवास्याः संस्कारं चानुमन्यते ॥
संयोगानां ततश्चैषां सारं संगृह्य साऽखिलम् ।
व्यनक्ति श्रीमयं नव्यं प्रेममुक्त्योः समन्वयम् ॥

एकत्वादपरिच्छेद्यात् स्वातन्त्र्यमभिजायते ।
तदेव विद्यतेऽस्माकं सत्ता वास्तविकी यतः ॥
प्रभवामो वयं प्राप्तुं सारं तस्य निजात्मनि ।
स्थापयित्वा तथैकत्वं सर्वैरन्यैः सहात्मनः ॥

तस्यानुभवितुं शक्या लीलाप्यस्मिन् महीतले ।
द्विविधानुभवस्यास्य प्राप्तिरेव प्रयोजनम् ॥
समस्तमात्मनोऽस्माकं वसतः प्रकृताविह ।

अनुभूय तदेकत्वं सीमातीतं निजान्तरे ॥
स्वार्पणं जगते मुक्तिः परा साम्राज्यमक्षयम् ।
सन्तोऽनन्ता वयं मुक्ता भवामो मृत्युपाशतः ॥
जीवनं जायते लीला तदानीं नोऽमृतात्मनः ।
प्राप्नुमश्च वयं मुक्तिं तदा दौर्बल्यबन्धनात् ॥
भवामो हि यतोऽखण्डसिन्धुरूपा वयं तदा ।
दृष्यन्तः स्वोर्मिमालानामाघातासङ्ख्यकोटिभिः ॥
भवामश्च तदा मुक्ताः शोकसन्तापसन्ततेः ।
शिक्षामहे वयं स्रष्टुं सामञ्जस्यं यतोऽखिलैः ॥
वस्तुभिः सह सत्तायाः स्वस्यास्तत्स्पर्शकारिभिः ।
द्रष्टुं चार्थेषु सर्वेषु क्रियां चापि प्रतिक्रियाम् ॥
आनन्दस्यैव सत्ताया विलसन्तीमनारतम् ।
मुच्यामहे च सीमाभ्यो देहो नो जायते यतः ॥
क्रीडाद्रव्यमनन्तस्य मानसस्य कृते तदा ।
शिक्षते चानुसर्तुं स सङ्कल्पममृतात्मनः ॥
मुक्ताः स्मश्च हृदः स्नायुमानसस्य ज्वरात् तथा ।
नैव बध्यामहे किन्तु निष्क्रियत्वेन कर्हिचित ॥

अमृतत्वं तथैकत्वं स्वातन्त्र्यं सन्ति नोऽन्तरे ।
क्रियमाणां प्रतीक्षन्ते चास्माभिः स्वगवेषणाम् ॥
किन्तु प्रेमोद्भवानन्दकृते नोऽन्तःस्थितः प्रभुः ।
नानारूपस्तदाप्यत्र स्थास्यत्येव सुनिश्चितम् ॥

## निकषोपलः

### श्रीशिवानन्दविलासः

प्रणेता एम्. रामकृष्णभट्टः, एम्. ए., हिन्दू कालेज्, देहली। प्रकाशनस्थानम् योगवेदान्ताश्रमः, पो. शिवानन्दनगरम्, हृषीकेशस्थलम्, उत्तरप्रदेशः। १९६२। मूल्यम् रू. ६ ॥

पूर्वं बङ्गलूर्-नगराद् 'अमृतवाणी'नाम्न्याः संस्कृतपत्रिकायाः प्रकाशकः अद्य देहल्यां हिन्दूमहाविद्यालये संस्कृताध्यायकः एम्. रामकृष्णभट्टः रामकृष्णपरमहंससहस्रनामादिनिबन्धव्याख्यातनिजाध्यात्मसाहित्यविरचनाभिनिवेशः, शिवानन्दविलासाभिधस्य अस्य महाकाव्यस्य प्रकाशनेन सुतरामस्माकं धन्यवादानां भाजनं भवति। महाकाव्येऽत्र एकादशसर्गात्मके प्रसिद्धानां हृषीकेशकृताश्रमाणां श्रीशिवानन्दस्वामिनां चरित्रं जन्मन आरभ्य ललितैर्नानावृत्तबद्धैर्मसृणैः पद्यैर्निबद्धम्। कविना कथामार्गागतानि ताम्रपर्णी-महोदधिप्रभृति नानाक्षेत्रतीर्थादिकं, हिमालयः इत्यादीनि च प्रसन्नमधुरैः श्लोकैः वर्णितानि ॥

पुस्तकान्ते च श्रीशिवानन्दाश्रमस्थैः पण्डितैः श्रीज्ञानानन्दाभिधैः श्रीशिवानन्दविषयकाणि स्तोत्राणि सहस्रनाम सुप्रभात-शरणागति-मङ्गलाख्यानि मुद्रितानि। श्रीशिवानन्दभक्तानां पुस्तकमिदमनर्घमनवरतध्यानोपयोगि च विभाति ॥

### स्वप्नविज्ञानम्

रचयिता रामस्वरूपशास्त्री, अलीगर्विश्वविद्यालये भूतपूर्वहिन्दीसंस्कृतविभागाध्यक्षः। प्राप्तिस्थानम् भारतप्रकाशनमन्दिरम्, अलीगर्। रू. २ ॥

ग्रन्थोऽयं लघुरपि विषयेण प्रतिपादनेन च गौरवमर्हति। पाश्चात्यदर्शनेषु स्वप्नमधिकृत्य अतिविपुला परीक्षा, तत्प्रतिपादका ग्रन्थाश्च वर्तन्ते। भारतीयदर्शनेषु च तत्र तत्र स्वप्नस्य निर्देशो लक्षणं च भवति, विशिष्य उपनिषत्सु माण्डूक्यादिषु वेदान्ते च यत्र स्वप्नान्तमधिकृत्य बहु

विचारितं दृश्यते । अस्मिन् ग्रन्थे तदेतत् सर्वमस्मदीयदर्शनेषु तत्र तत्र विप्रकीर्णतया परिशीलितं स्वप्नतत्वं क्रोडीकृत्य ग्रन्थकर्त्रा एकत्र उपन्यस्तमिति परिश्रमोऽयं प्रशंसामर्हति ॥

## त्रिपुरदाहकथा

**रचयिता रामस्वरूपशास्त्री, उपरि निर्दिष्टः । रू. १ ॥**

प्रणेतुः कादम्बरीरसास्वादचातुर्यं सम्यगवगमयति एष प्रबन्धः, तच्छैलीं प्रायशोऽनुसरन् । सर्वत्र सरलपदविन्यासेनैव निबद्धेऽपि गद्ये तत्र तत्र झटिति अर्थावबोधं प्रतिबध्नाति मुद्राप्रमादः । अतः पाठकानां कथञ्चित् समर्थ्य उपरि गन्तव्यता, अथवा पठनोपरोध एव वा भवति । अयमंशः अवश्यं परिहरणीयः द्वितीयमुद्रणावसरे । अन्ते दत्तः प्रसङ्गात् वेदान्तविषयः अवश्यं द्रष्टव्यः सर्वैरपि । सुखावबोधश्चायं वेदान्तविषयश्रवणबोधनलालसाना-मुपकारायावश्यं भवेदिति सप्रमोदं वदामः ॥

## कचदेवयानीयम्

**कर्ता सन्निधानम् सूर्यनारायणशास्त्री, संस्कृताध्यापकः, रा. ब. वे. रे. महिलामहाविद्यालयः, हैदराबाद् । १९६१. न. पै. ७५ ॥**

ग्रन्थस्यास्य प्रणेतुरन्याः कृतयः प्रतिभायां पूर्वमालोचिताः । अद्य विचार्यमाणोऽयं ग्रन्थः श्रीमहाभारतादिपर्वविद्यमानकथासङ्ग्रहः पद्यात्मना ललितनिबन्धनेन विरचितः सुष्ठु पाठकानां मन आवर्जयतीति अभिनन्दनीयमेवैतत् । यद्यपि क्वचित् क्वचित् पदविन्यासः सम्यगर्थावबोधाय न प्रभवति, यथा—'ममाङ्कानि प्रदहन्ति भूयसा' इत्यादि, तथापि कथासन्दर्भं सम्यगेवावगमयति । किञ्च, आलङ्कारिकसमयसिद्ध 'एकत्रैवानुरागश्चेत्' इत्यादिकस्य उदाहरणमप्ययं भवतीति अयमंशः आमुख एव स्पष्टं प्रतिपादितः । मुद्राप्रमादस्तत्रतत्र दृश्यते । द्वितीयमुद्रणावसरे सर्वं समीकृतं भवेदिति विश्वसिमः ॥

## श्रीशुक्लपक्षः

प्रबन्धा मुदिगोण्ड ज्वालापतिलिङ्गशास्त्री, ईमनि, आन्ध्रप्रदेशः ॥ रू. १-२५ ॥

इदम्प्रबन्धनामश्रवणेन प्रबन्धाभ्यन्तरविषयस्फूर्तिर्नोदेति । परं तु परिशीलनानन्तरं महाकवीनामाविर्भावानन्तरमेव सारस्वतलोकोद्द्योतः समजनीति अयं ग्रन्थस्य विषय इति स्फूर्तिः भवति । अत्र पद्यनिर्माणे नूतनः पन्थाः परिदृश्यते, य आन्ध्रकवितायामेव क्षुण्णः । यद्यप्याधुनिकानामेष घण्टापथ एव भवेत् तथापि संप्रतिपन्नसंस्कृतसाहित्यमार्गपरिहारः न सर्वेषामादरणीयः स्यात् । विद्यत एवात्र कालिदासादिमहाकवीनां नामस्मरणम् । परं तु मार्गदर्शिनो महर्षेर्नामापि कुतो न स्मर्यत इति न ज्ञायते । ललितैव सरणिः । मुद्राप्रमादस्त्वधिकः । द्वितीयमुद्रणे सर्वमिदं समीकृतमेव स्यादिति मन्महे ॥

## भक्तरसायनम्

प्रणेता के. अच्युतप्पोदुवाळ्, संस्कृतकलाशाला, तिरुप्पुणित्तुरा, केरलप्रदेशः । १९६१ । मूल्यमनिर्दिष्टम् ।

कोच्चिराज्ये श्रीमतां राजपण्डितानां परीक्षिदभिधानां रामवर्ममहाराजानामास्थानं तदीयकलाशालां चालङ्कुर्वाणाः सुप्रसिद्धन्यायसाहित्यविद्वांसः, लब्धपण्डितराजबिरुदा एते ग्रन्थकर्तारः । एतेषां कृतिष्वन्यतममिदं नवाधिकशतमितैः नानावृत्तैः श्लोकैः भगवति भवानीपतौ कवेः प्रपत्तिं प्रतिपादयति । श्लोकेषु न केवलं भक्तिविरक्त्यादिभावाः, भगवत आपादजटं रूपवर्णनं च, किन्तु वेदान्तशास्त्रीया भावाः, हरिहराद्वैतभावना इत्याद्यर्थजातं कवेर्भक्तिं वैदुष्यं च समं विशदयन्ति । कुत्रचिदपूर्वशब्दा यद्यपि सन्ति, तथापि प्रायः प्रौढविशदा शैली । श्लोकानामाशयः कविनैव टीकायां व्याख्यातः । महाराजानामुपोद्घातेन च तिलकितमिदं पुस्तकम् ॥

## मातृपरिदेवनम्

प्रणेता स एव उपरिनिर्दिष्टः के. अच्युतप्पोदुवाळ् ।

आर्यावृत्तनिबद्धे शतपद्यात्मके खण्डकाव्येऽत्र निर्दिष्टा माता भारतधरित्रीरूपा । तस्याश्च प्राचीनं सौभाग्यमाधुनिकं विपर्यासं चाधिकृत्य भवति परिदेवनम् । वदे धर्मे विविधे च विद्यास्थाने प्रथितान् प्रत्नकालपुत्रान् स्मृत्वा, अर्वाचीनकाले गुणह्रासं, विशिष्य विदेशीयाक्रमणसञ्जातदास्यकालसम्भूतान् प्रजादोषांश्चोदाहृत्य शोचति । अन्ते च पुनश्च भारतीयसांस्कृतिकोन्नतिप्राप्तये प्रजा बोधयति—'भजत परस्परमैत्रीं भवतान्योन्योपकारिणः सहजाः । स्मरत सुखानां सूतिं शान्तिं नः स्वं परम्पराप्राप्ताम् ॥' परमर्षिदायादभूतैर्भारतजनैरवधेयोऽयं शुभः सन्देशः ॥

## महाप्रकाशलहरीस्तोत्रम्, श्रीसुन्दरनाथस्तोत्रनक्षत्रमाला च

निबन्धा कडव शम्भुशर्मा । काद्रीमठः, मङ्गलोर्-४ । मैसूर्-प्रदेशः ॥

ग्रन्थकर्तायं प्रतिभापाठकानां परिचित एव । अत्र विमृश्यमाने पुस्तके तत्कृते द्वे स्तोत्रे मुद्रिते-श्रीदत्तात्रेयम् , अन्यं सिद्धपुरुषं सुन्दरनाथाभिधं चाधिकृत्य प्रवृत्ते । प्रथमस्तोत्रस्य विषयः पश्चिमाब्धितीरे गोराष्ट्रमण्डले कुडालस्थले कदलीमठे कृतप्रतिष्ठो गोरक्षनाथः । शिखरिणीवृत्ते द्वात्रिंशत्पद्यात्मकमिदं स्तोत्रं १७ तमे श्लोके नचिराद्विमोचितस्य गोराष्ट्रदेशस्य विदेशीयाक्रमणान्नष्टधर्मस्य शोचनीयां प्रागवस्थां कथयति ॥

## गान्धिगीता

लेखकः अ. वि. काणे । प्रकाशकः गो. वि. जोशी, जे. विनायकप्रकाशन्, मेयर् बिल्डिङ्, दादर्, मुम्बई २८ । रू. १. ॥

सरलैर्भावपूर्णैः शिखरिणीबद्धैरेकचत्वरिंशता पद्यैरत्र महात्मनो गान्धेः अहिंसा-सत्य-त्याग-देशसेवा-पतितोद्धारादिकं सर्वमुपदेशजातं सङ्गृहीतं वर्तते ।

अन्ते तमेव महापुरुषं वर्णयन्ति खण्डकाव्यानि कतिचिद्योजितानि । मनाक् वृत्तभङ्गः, बहुत्र तृतीयपादान्तलघुश्च दृश्येते । तौ दोषौ निवार्यौ ।

आत्मकलाप्रदीपः

कर्ता शृङ्गारसुब्रह्मण्यशास्त्री, डि.१५.११. क्रास्, तिल्लैनगरम्, वोरयूर् पोस्ट्, तिरुच्चिरापल्लि । १९६१ न. पै. ५८ ॥

स्तोत्ररूपाः धर्मोपदेशरूपाश्च लघुग्रन्था दशाधिकाः ग्रन्थकृता कृताः । आत्मकलाप्रदीपश्च ललितैः प्रसन्नैः गीतियोग्यैः पद्यैः भक्तिः, सत्सङ्गः, आशात्यागः, निद्रापरिहारः, मनोनिग्रहः, शिष्यसंपद्, वेदान्तसार इति विषयजातमुपदिशति ॥

संस्कृतगौरवगानम्

रचयिता वासुदेवद्विवेदी, सार्वभौमसंस्कृतप्रचारकार्यालयः, टेढीनीम्, वाराणसी । न. पै. ५० ॥

संस्कृतभाषाप्रचारदीक्षितेन रचयित्रा संपादिता बहवो लघुग्रन्थाः पूर्वमेव प्रतिभायां परिचायिताः । अत्र संस्कृतविषये यद्यद् वक्तव्यं स्यात् तत्प्रोचन-पठन-संरक्षण-संवर्धनार्थं तत्सर्वं गीतिरूपेण यथा समुत्साहः समेधेत तथा प्रतिपादितम् । गीतयः संस्कृतबहुलया शैल्या हिन्दीभाषया रचिताः । प्रथमा गीतिः संस्कृत एव पूर्णतया निबद्धा । बालबालिका एता गीतीरावर्तयिष्यन्ति नूनमिति विश्वसिमः ॥

सावित्रीचरित्रम् तथा कूपमण्डूकवृत्तिः

प्रणेता ओड्लमने आत्मारामशास्त्री । भारतीयविद्याभवनम्, मुम्बापुरी-७ । १९६१. न. पै. ७५. ॥

एकादशसर्गैः संप्रतिपन्नया महाकाव्यसरण्या वर्णितमत्र महाभारतगतं सावित्रीचरित्रम् । मध्ये मध्ये इतिहासदृष्टमेव कथान्तरमपि यथौचित्यं

कथापरिपोषाय योजितम् । स्वभावरमणीया रचना, प्रसन्नश्च पदप्रयोगः । बहूनि च वृत्तानि समादृतानि ॥

अन्ते योऽयं प्रसिद्धः 'कूपमण्डूकन्यायः' तं विवृण्वानः ३७ पद्यात्मकः प्रबन्धोऽपि ग्रन्थकृता प्रकाशितः । उभयत्रापि अयुग्मपादान्तलघुः श्लोकेषु बहुशो दृश्यमानः न समीचीनो भाति ॥

## रङ्गहृदयम्, सद्बोधशतकम्

प्रणेता पाण्डुरङ्गावधूतः । प्रकाशकः अमृतलाल नानाभाइ मोदी, मोदी साथ, नडीआद्, गूर्जरप्रदेशः ॥

सिद्धपरम्परासमागतेषु भारतधरणिं परिपावयत्सु लोकसङ्ग्रहार्थमेव जनतोद्धारसत्कर्ममात्रप्रवृत्तिषु महापुरुषेषु अन्यतमा नर्मदातीरचारिणः नारेश्वरस्थायिनः पाण्डुरङ्गाभिधा अवधूतयोगिनः । एतेषां पुण्यं जीवितचरित्रं सर्वं तत्षष्टिपूर्तिजयन्तीमहोत्सवावसरे प्रकाशिते श्रीरङ्गजयन्तीदर्शनाख्ये पुस्तके द्रष्टव्यम् ।

रङ्गहृदयाख्ये ग्रन्थे एतैः विरचिताः स्तुतयः संकलय्य मुद्रिताः । एताश्च प्रायः अवधूतमार्गप्रदर्शकं दत्तात्रेयं विषयीकुर्वन्ति, काश्चिच्च स्वगुरुं, देवतान्तराणि, नर्मदां च वर्णयन्ति । स्तुतयोऽपि तत्त्व-वैराग्य-धर्माचरणोपदेशपरा एवैताः प्रायः । विशिष्य पुस्तकान्ते दृश्यमानाः कृतयः तत्त्वचिन्तनम्, प्रश्नोत्तरमाला, अक्षरगीता, बोधमालिका इत्यादिकाः स्पष्टमेव तत्त्वप्रतिपादिकाः । 'परस्परदेवो भव' इत्येतत् एतेषामुपदेशेषु महावाक्यायितम् । भर्तृहरिकृतशतकत्रयात् संकलितं यत् काकासाहेब्-कालेल्कर्-महाशयेन 'सद्बोधशतकम्', तस्य एतैरेव रङ्गावधूतैः सरला कापि संस्कृतटीका व्यरचि । द्वितीयपुस्तके एतच्छ्लोकशतकमनया टीकया मुद्रितम् ।

श्रीरङ्गगुणगरिमा प्रा. डा. अ. न. जानीकृतः।
अवधूतप्रशस्तिः भवानीशङ्करशास्त्रिकृता ।
रङ्गप्रशस्तिः का. श. मं. अग्निहोत्रिकृता

प्रकाशकः उपरिनिर्दिष्ट एव ॥

एते च प्रबन्धा उपरि वर्णितानां पाण्डुरङ्गावधूतानां माहात्म्यप्रदर्शकाः स्तुतिरूपाः, तद्भक्तैः गुरुभ्य उपहृताः । प्रथमनिर्दिष्टे पुस्तके प्रायः गानोपयोगितया सरागाः स्तुतयो निबद्धाः ॥

## भारतहृदयारविन्दम्, महाप्रभुहरिदासम्, महिममयभारतम्

नाटकत्रयम् । निर्माता डा० यतीन्द्रविमलचौधुरी, प्राच्यवाणीसंस्कृतमाला, ३, फेडरेषन्स्ट्रीट् , कल्कत्ता-९। मूल्यं क्रमशः रू. ३. ५०; ३; १. १९६० ॥

पश्चिमवङ्गसंस्कृतशिक्षापरिषत्सचिवेन डा. जे. बि. चौधुरीमहाशयेन संस्कृतप्रचाराय संस्कृतनाटकप्रयोगेषु या प्रवृत्तिः प्रदर्शिता सा अतीव प्रशंसार्हा भवति । स्वनाटकेषु यदेष विषयाय प्रसिद्धानामाधुनिकानां प्राचीनानां च भारतीयमहापुरुषाणां चरित्रमादत्ते, तदपि अमीषां नाटकानां तद्द्वारा संस्कृतस्य च कामपि बहुजनावर्जकतामादधाति ।

अङ्कपञ्चकसंदब्धे भारतहृदयारविन्दनामके नाटके दक्षिणभारते पुदुच्चेरि-स्थले स्वीकृतनिवासस्य अरविन्दघोषयोगिनश्चरित्रं प्रदत्तम् । एतच्च प्राच्यवाणीनाटकगोष्ठ्या अरविन्दाश्रम एव अरविन्दभक्तानां सदसि प्रयुक्तम् ।

महाप्रभोः श्रीकृष्णचैतन्यस्य यो मुख्यः शिष्यो बभूव हरिदासो नाम, तन्माहात्म्यमुपदर्शयति महाप्रभुहरिदासं नाम द्वितीयं नाटकम् । सप्ताङ्कमिदं नाटकम् ।

महिममयभारतनामकं तृतीयं नाटकं विशिष्योदाहरणमर्हति, यदत्र नूतनो विषयो मार्गश्च गृहीतः । नाटकमिदं देहल्यां ग्रीष्मनाटकोत्सवे प्रदर्शितम् । अत्र प्रथमं वैदिकपौराणिककालयोः भारतदेशस्य महिमप्रतिपादकं वस्तु; ततः मुहम्मदीययुगीयं वस्तु; अन्ते च स्वतन्त्रभारतप्रयत्नानामादर्श-

भूतं वस्तु च दत्तम् । सर्वमेवैतद् वस्तुत्रयं देशस्यास्य जीवनाडीस्थानीयानां महासरितां माहात्म्यं प्रतिपादयति । अन्तिमे च आधुनिकवस्तुनि परामृष्टः सरिद्द्वयवहारः दामोदरनदजलोपयोगार्थं स्वतन्त्रभारताधिकारिभिः यो निर्माप्यते, स महान् जलाशयः ।

सर्वेष्वेव नाटकेष्वेषु उदात्ता विषयाः सरलया शैल्या सन्दृब्धाः । मुद्रणं शोभनम् । सर्वेषु च पुस्तकेषु आङ्ग्लवाण्यां च विषयसङ्ग्रहो दत्तः ॥

कुसुमलक्ष्मीः

निबन्धा आ. र. रत्नपारखी, एफ्-२६, नौरोजीनगर्, नई दिल्ली-१६ । १९६१ । रू. ४.५० ॥

निबन्धुरस्य नाम प्रतिभारसिकानां परिचितमेव स्याद् यदस्य संवादमालात एकः संवादः प्रथमसञ्चिकायामेव अस्माभिः प्रकाशितः । तत्र यथा, तथा अत्रापि अयं ग्रन्थकर्ता आधुनिकं विषयजातमुपादाय नूतनसंस्कृतशब्दैर्व्यवहृत्य कामपि विशिष्टामेव रचनापद्धतिमुन्मीलयति । नूतनकथा (नावेल्) इति या कल्पिता कथा आधुनिकसाहित्ये प्रसिद्धा तत्कोटिमनुप्रविष्टैषा कुसुमलक्ष्मीः, ग्रन्थकर्त्रैव अभिनवं प्रणयोपाख्यानमिति वर्णिता । अत्र न केवलमुत्पादिता कथा कापि साम्प्रतिककालसन्निवेशवती रचयित्रा उपात्ता, अपि तु आ बङ्गलूरुनगरमा च मुझफर्पुरं कन्नडमराठीहिन्दीलोकस्पर्शिनी निखिलमाधुनिकभारतं प्रतिबिम्बयन्ती इतिवृत्तगतिः साधु सङ्घटिता । आधुनिकवस्तुजातानां प्रान्तीयवस्तुजातानाम् आङ्ग्लभाषायां प्रान्तीयभाषासु च तत्तन्नाम्ना प्रसिद्धानां वस्तूनां बहूनां संस्कृतपर्यायशब्दा नूतनतया समुत्प्रेक्ष्य संयोजिताः, ते प्रायः प्रतिभोल्लासमुपदर्शयन्तः समीचीनाः सन्ति, तथापि केषांचन विषये सन्देहशुद्धिर्नोदेति; अदत्तटिप्पणीकानि च कानिचनैवंजातीयकानि पदानि तत्र तत्र दृश्यन्ते ॥

विशिष्य वक्तव्योऽयं विषयः यदस्य प्रणेतुः संस्कृतशैली सर्वथा प्रशंसामर्हतीति । नात्र कर्मणि प्रयोगाः, क्तान्ताश्च, दीर्घाः समासा वा; किन्तु ऋजुप्रयोगैः

साक्षात्तिङन्तबहुलैः लघुभिर्वाक्यैः विशदाशयैः संस्कृतस्यैव सम्प्रति अपेक्षितमुचितं च मार्गं प्रदर्शयत्येष रचयिता । चिन्त्याः प्रयोगा विरला एव, मुद्रणभ्रंशाश्च तथा मृग्याः । अभिनन्दामश्चास्य कथानककर्तुः समुद्यममाशास्महे चास्य समुत्साहस्य स्फीतानि साहित्यफलानि ॥

## कौमुदीकथाकल्लोलिनी

रचयिता रामशरणशास्त्री । प्रकाशनस्थानम् चौखाम्बाविद्याभवनम्, वाराणसी । १९६१. रू. ८-७५. ॥

सत्यं भट्टिकाव्यादि पद्यात्मकं प्राचीनम्, गद्यात्मकं कथामुक्तावल्यादिकमाधुनिकं यद्यपि विद्यते व्याकरणव्युत्पत्तिसंपादकम्, अथापि इयं कौमुदी विद्वत्कुमुदानन्दकत्वात् कौमुदीव सार्थयन्ती स्वनाम बाभातीति शक्यं वक्तुम् । यद्यपि सन्धिनिर्देशः कारकनिर्देश इत्यादि विभिद्य तत्र तत्र शीर्षिकन्यासः कृतः, तथापि सर्वं सर्वत्र समाकीर्णमेव विद्यते । सूत्राणि च तत्र तत्रावश्यकानि टिप्पण्यां सङ्ख्यानिर्देशपूर्वकम् अधोमुद्रितानि च । परंतु अनवगाढव्याकरणानाम् अपरिचितकोशानां च मूले टिप्पण्यां वा अर्थावबोधो नातीव सुकरो विद्यार्थिनाम् । प्रबुद्धानामपि कोशसहायोऽवश्यमपेक्ष्यत एव ।

व्याकरणोदाहरणत्वात् ग्रन्थस्यास्य तच्छास्त्रप्रवर्तकवररुच्यादिकथाप्रस्तुतिरवश्यकरणीयैव कृता । कथासरित्सागरप्रतिपादितनरवाहनदत्तकथा ग्रन्थशरीरम् । सा च सङ्ग्रहविस्तराभ्यां कथासन्दर्भानुसारिभ्यां सम्यग्विरचिता पठितॄणां कादम्बरीदशकुमारचरितादिकं ज्ञापयन्ती प्रमोदमादधाति । मुद्राप्रमादस्य शुद्ध्यशुद्धिपत्रं दिङ्मात्रदर्श्येव ।

ईदृशग्रन्थनिर्माणमद्यतने समये अत्यन्तमावश्यकमेवेति विदुषां मनः प्रबोधयामः ॥

## वैराग्यमन्दाकिनी

श्रीमङ्गलार्णव(प्रसिद्धकाशिकानन्द)यतिभिः कृता । प्रकाशकः डा. अ. न. जानी, जमखानापोळ्, सुल्तान्पूर्, बडोदा । मूल्यं न निर्दिष्टम् ॥

ग्रन्थकर्तार इमे न्यायाद्वैतवेदान्तयोः पण्डिताः गृहीताश्रमाश्च । एभिः प्रसिद्धन्यायाद्वैतग्रन्थानां गदाधरीयगौडब्रह्मानन्दीयादीनां व्याख्या विरचिता, याः प्रायो मुद्रणापेक्षिण्यो वर्तन्ते ।

प्रकृते सन्दर्भे एते यतिवराः तिसृभिर्लहरीभिः, आहत्य १८९-श्लोकैः विविधवृत्तबद्धैः वैराग्यं नाम विषयं प्रतिपादयन्ति । अनिर्वचनीयता, असारता, जन्मफलम्, भोगदुष्टता, धनम्, यशः, रागः, प्रेम, दोषः, मोहः, परोपकारः, अनुतापः, अकिञ्चनता, कालः, वैराग्यानुभवः, तदुद्भावनम्, धन्यत्वभावना, अभिज्ञता, निर्मोहता इति श्लोकाष्टकदशकमितेन विषयविभागेन अध्यात्मभावनात्र सम्यक् उपवर्णिता । उदात्ता भावाः, प्रौढा शैली, निर्दुष्टाश्च शब्दाः ।

एतादृशप्रकाशनानां कृते जानीमहाशयश्च धन्यवादमर्हति, आशास्यते च तेन यतीनामेतेषामन्या अपि कृतयो नचिरात् प्रकाशयिष्यन्त इति ।

## तिरुप्पावै-श्लोकाः

## तिरुक्कुरळ्-संस्कृतानुवादः

कर्ता. एस्. एन्. श्रीरामदेशिकः शिरोमणिः, २५ बर्किट् रोड्, मद्रास्-१७ । न. पै. ३० । रू. १. ५० ॥

द्रमिडसाहित्यादद्य बहुभिरनूदितेषु ग्रन्थेषु आण्डाळ्(गोदा)नाम्न्या कृष्णभक्तिपरवशया कृता मार्गशीर्षगेयाः पाञ्चालिकागाथाः, तिरुवळ्ळुव-(श्रीवल्लभ) नाम्ना 'सिद्धपुरुष' इति संपूजितेन सन्दृब्धः 'कुरळ्' नामकं पुरुषार्थप्रतिपादकं ग्रन्थरत्नं च मुख्यं स्थानं भजतः । अनयोरनुवादाः प्रतिभायामेव प्रकाशिताश्च ।

प्रकृतयोः पुस्तकयोः एकस्मिन् गोदागाथाः अन्यस्मिन् कुरळ्प्रबन्धस्य प्रथमो धर्मकाण्डश्च संस्कृतभाषया पद्यरूपेण अनूद्य दत्ताः । अनुवादकर्ता च प्रचारकार्यपटुः संस्कृतप्रणयिलोकसमादरार्हो भूयोऽपि संस्कृतसेवायामविच्छिन्नं प्रवृत्तः स्यादिति आशास्महे ॥

## कालिदासचरितम्

प्रणेता श्री. भि. वेलणकरः । गीर्वाणसुधाप्रकाशनम्, झावला वाडी, मुम्बई २ । १९६१. रू. ३. ॥

नाटककर्तुरस्य प्रबन्धान्तराणि प्रतिभायां पूर्वं समालोचितानि । सङ्गीतसौभद्रकरणानुपदमेव कविनानेन सर्वतोऽप्यधुना स्पन्दमानेन कालिदासानुरागानिलेन समीरितेन विरचितमिदं कालिदासचरितं नाम पञ्चाङ्कं नाटकम् । सम्प्रदायागतं विमर्शकैरभ्यूहितं वा महाकवेश्चरित्रमत्र प्रतिपादयितुं नायं ग्रन्थकारः प्रयतत इति महान् आश्वासः । किन्तु महाकवेः कृतिभ्य एव येंऽशा उन्नेतुं शक्यन्ते, तानेवादाय स्वप्रतिभया चारित्रिक-सम्भावनामनतिवर्तमानया किमपि वस्तुजातमुत्पाद्य नाटकेऽस्मिन् प्रदत्तम् । उज्जयिनी, विक्रमादित्यः, विदर्भदेशः (कुन्तलेश्वरदौत्यम) इत्यादि अभ्युपेत्य उज्जयिनीतः दौत्याधिकारेण कुन्तलागमने हेत्वङ्गतया राजसभायां पण्डितान्तरेर्ष्यामुपकल्प्य वस्तु विस्तार्यते । पात्रनामार्थं महाकविकृतिषु प्रसिद्धानि अलका, मदनिका, निपुणिकेत्यादीनि कानिचिद् गृहीतानि । ऋतुसंहारः, मेघदूतविरचनप्रस्तावः, मालविकाग्निमित्रच्छाया, अन्ते च रघुवंशारम्भस्य सन्दर्भकल्पनम् इत्यादिका अत्र कथार्था महाकविकृतिरसिकै रसनीया दृश्यन्ते । रघुवंशस्य यद् मकुटायितं स्थानमत्र दत्तं तन्नूनं सहृदय-मनस्संवादि स्यादिति मन्यामहे । भाषा परं प्रसन्ना, मनाक् महाकवि-प्रयोगवासनावासिता च । तत्र तत्र समुचितानि गीतानि च योजितानि । कालिदासविषयिकासु कल्पनासु प्रशस्योऽयं प्रयत्नः ॥

## श्रीलक्ष्मणाभ्युदयम्

## श्रीसुशीलोद्वाहमङ्गलम्, श्रीलाक्ष्मणीप्रशस्तिश्च

## श्रीमोहनाभिनन्दनम्

कर्ता गणेशरामशर्मा 'शुकुनिः', प्रधानसंस्कृतपण्डितः, महारावल्हैस्कूल्, डूङ्गरपूर्, राजस्थानम् ॥

प्रथमा कृतिः डूङ्गरपूर् – नरेशं श्रीलक्ष्मणसिंहं ११० पद्यैः स्तौति । अत्र महाराजस्य गुणाः, तद्राज्ये तेन संपादिता आभ्युदयिका विशेषाश्चात्र कविना वर्णिताः । द्वितीये पुस्तके महाराजगृहे संपन्नो विवाहो वर्ण्यते ।

मोहनाभिनन्दनो नाम ग्रन्थस्तु पुरुषान्तरं विषयीकरोति मोहनानन्दाभिधयतिरूपम् । प्रायः सरलमनोज्ञा कवेः शैली, किन्तु मनाक् छन्दोभङ्गदुष्टा, मुहुश्च यतिनियमातिक्रमविषमगतिश्च दृश्यते, यथा प्रकृत्या सरलो महानिति शार्दूलविक्रीडिते उपक्रमे (ला.प्र.५) ॥

## प्रौढरचनानुवादकौमुदी

निबन्धा डा० कपिलदेव द्विवेदी, विश्वविद्यालयप्रकाशन्, गोरखपूर्, उ. प्र. । १९६१. रू. ७-५०

संस्कृतशिक्षोपयोगी ग्रन्थोऽयमाधुनिकशिक्षाक्रममनुसृत्य हिन्द्यां विरचितः । प्रत्यभ्यासं शब्दाः, व्याकरणनियमाः अनुवादार्थं वाक्यानि च दृश्यन्ते सुप्तिङ्कारकसमासादिकं क्रमशः अभ्यासेषु उन्मील्यन्ते । पश्चाद्भागे पत्रलेखनप्रकारः, लघुनिबन्धमाला, सुभाषितानि च दत्तानि । धातुकोशः, शब्दकोशश्च योजितौ । एतादृशेषु बोधनार्थकेषु पुस्तकेषु सम्यक् संकलितोऽयं ग्रन्थः माणवकानां बहु उपकाराय भविष्यतीति विश्वसिमः ॥

## लक्ष्मीस्वयंवरः, "आषाढस्य प्रथमदिवसे", महाश्वेता

प्रणेता डा० वे राघवः, संस्कृतरङ्गः, ७ श्रीकृष्णपुरम्, रायपेट ; मद्रास् १४ । प्रत्येकं न. पै. ५० ॥

प्रेक्षणकान्येतानि प्रणेत्रा आकाशवाण्याः मद्रपुरीकेन्द्रे संस्कृतकार्यक्रमे प्रयोगार्थं रचितानि । लक्ष्मीस्वयंवरः विष्णुपुराणभागवतगतान् श्लोकानुपादाय, समुचितकल्पनाभिः स्वीयैः संवादात्मकैः गद्यवाक्यैश्चायोजितः । पौराणिकीं छायामनुसरन्नपि निबन्ध एष तत्र तत्र नवोदारभावानुन्मीलयति । द्वितीयतया निर्दिष्टं प्रेक्षणकं मेघदूतस्यामुखीभूतं कथावस्तु नाटकोपयोगितया चित्रयति ।

अत्र कविः कालिदास एव रामगिर्याश्रमे यक्षेण सह पात्रत्वेन प्रदर्शितः। महाश्वेतानामकं तृतीयं प्रेक्षणकं कादम्बरीत उद्धृतं महाश्वेताचन्द्रापीडसमागमवृत्तान्तं सङ्ग्रहेण महाश्वेताकथां च बाणवाक्यान्येव यावत्संभवमुपयुज्य प्रतिपादयति। लघूनि गानावकाशदायीनि चेमानि प्रेक्षणकानि छात्रवर्गाणामन्येषां च रसिकानां तत्तत्सन्दर्भेषु प्रयोगार्थं समुचितानि विलसन्ति।

**पुनरुन्मेषः**

रचयिता डा० वे राघवः, संस्कृतरङ्गः, मद्रास् १४। न. पै. ५०॥

नवदेहल्यां १९६०-वर्षे मे-मासे ग्रीष्मनाटकोत्सवे उपराष्ट्रपतीनां डा. राधाकृष्णमहाशयानामन्येषां च बहूनां विदुषां संस्कृतप्रणयिनां राष्ट्रप्रमुखानां च पुरतः संस्कृतरङ्गेण प्रयुक्तः। प्रेक्षणकं चेदम् एतदुत्सवार्थमेव अधिकारिणां निर्देशानुसारं रचयित्रा नूतनतया निर्मितम्। अत्र च स्वातन्त्र्यावाप्त्यनन्तरं विद्याकलाविषयेषु राष्ट्रीयोपकारप्रोत्साहनेन यः पुनरुन्मेषः समुद्भूतो विभाति, स वस्तुतया स्वीकृतः, त्रिभिर्भागैः निबद्धः। प्रथमभागे संस्कृताभिवृद्धिः, द्वितीये गीताभिवृद्धिः, तृतीये पुराणदेवालयपरिपालनं नाट्यविद्याभिवृद्धिश्च समुचिताभिनेयवस्तुसंविधानमुपकल्प्य प्रदर्शिता। अन्ते च भारतराष्ट्रमहिमोल्लासविषयकं नाट्योपयोगि गीतमपि निबन्ध्रा योजितं भाति॥

**Our Contributors:**

अस्यां सञ्चिकायां दृश्यमाना नूतना लेखकाः—

BRAHMARSHI DAIVARATA: VAIDIKA BRAHMACHARYASRMA, P. O. GOKARNA, Dt. N. KANARA. Pupil of Vasishtha Kāvyakaṇṭha Ganapati Muni and Grand-pupil of Sri Ramana Maharshi. Author of Vāksudhā (in Sanskrit verses) on the Vedic doctrine of vāk and other works.

ब्रह्मर्षिः दैवरातः, वैदिकब्रह्मचर्याश्रमः, गोकर्णम् पोस्ट्, उत्तरकन्नड जिल्ला । अरुणाचलकृतालयस्य श्रीरमणमहर्षेः प्रशिष्यः, काव्यकण्ठ वासिष्ठ गणपतिमुनेः उमासहस्रादिकर्तुः शिष्यः । वैदिकवाङ्मये विशिष्य कृतप्रतिष्ठेनानेन वेदे वाग्देवतामधिकृत्य तत्स्वरूपाध्यात्मादिनिरूपणपरः 'वाक्सुधा' नामकः पद्यग्रन्थः, अन्ये च ग्रन्थाः कृताः ।

BOMMAGANTI SRINIVASACHARYA: Telugu Encyclopaedia, University Buildings, Madras-5.

बोम्मगण्टि श्रीनिवासाचार्यः, तेलुगुभाषासमितिः, विश्वविद्यालयः, मद्रास् ५. ।

DEVIPRASAD KHANDERAO KHARAVANDIKAR: Sanskrit Lucturer, Ahmednagar College, 125, Anandy Bazar, Ahmednagar, Deccan.

देवीप्रसाद खण्डेराव खरवण्डीकरः, संस्कृताध्यापकः, अहमदनगरकलाशाला, १२५, आनन्दि बझार्, अहमद्नगर् ।

A. V. KANE: PAR NAKA, POST BASSEIM, Bombay. A blind writer of Sanskrit minor poems, some of which have been broadcast from A. I. R., Bombay.

अ. वि. काणे, पार् नाका, वसई, मुम्बई । अन्धेनानेन खण्डकाव्यानि कृतानि, येषु कानिचिद् आकाशवाण्यां मुम्बईकेन्द्रे वाचितानि ।

K. RAJANNA SASTRI: Pandit, Dharmapuri, P. O. Karimnagar, Andhra Pradesh.

पण्डित के. राजण्णशास्त्री, धर्मपुरी, पो० करीम्नगर्, आन्ध्रप्रदेशः ।

MADANASARMA 'SUDHAKARA': Rajasthan Oriental Institute, Jodhpur.

मदनशर्मा 'सुधाकरः', राजस्थानप्राच्यविद्याप्रतिष्ठानम्, योधपुरम्, राजस्थानम् ।

JAGGU SINGARA IYENGAR: Someswar Extension, Tumkur, Mysore

जग्गुशिङ्गरार्यः, सोमेश्वर एक्स्टेन्षन्, टुम्कूर्, मैसूर् ।

DR. JATINDRA BIMAL CHOUDHURI: Secretary, Vangiya Sanskrit Siksha Parishat, 1, Bankim Chattejee Street, Calcutta-12. Has recently been responsible for several Sanskrit plays and their production in different centres in India and also in Burma.

डा० यतीन्द्रविमलचतुर्धुरीणः, वङ्गीयसंस्कृतशिक्षापरिषत्साचिवः, १, बङ्किं चट्टर्जि स्ट्रीट्, कल्कत्ता - १२ । 'प्रच्यवाणी'मन्दिरस्थापकः, तद्द्वारा बहुसंस्कृतनाटकानां संपादनप्रयोगाभ्यां भारतदेशे बहिश्च संस्कृतप्रचारकार्ये निरतः ।

T. S. SRINIVASACHARYA: Retired Sanskrit Pandit, 12, T. P. Koil Lane, Triplicane, Madras-5. Author of several Sanskrit hymns and a Kāvya called Padminīpariṇaya. See *Pratibhā* II. ii. p. 296.

ति. एस्. श्रीनिवासाचार्यः, तिरुवल्लिक्केणि, मद्रास् ५ । अनेन बहवः स्तोत्रग्रन्था पद्मिनीमरिणयो नाम काव्यं च कृतम् । प्रतिभायां २. २, पृष्ठे २९६ द्रष्टव्यम् ।

SRI JAGANNATH: Sri Aurobindo Ashram, Pondicherry. Has translated some of the writings of Sri Aurobindo. See *Pratibhā* II. ii. p. 304.

श्रीजगन्नाथः, श्री अरविन्दाश्रमः, पाण्डिच्चेरि । अनेन श्रीमदरविन्दयोगिनः कानिचित् सुभाषितानि कृतयश्च काश्चन अनूदितानि । प्रतिभायाः २. २. पृ. ३०४ दृश्यताम् ।

Statement of ownership and other particulars
about SAMSKRITA PRATIBHA

FORM IV

(*As required by Rule* 8 *of Press Registrar's Act*)

| | | |
|---|---|---|
| *Place of Publication* | .. | 7, Sri Krishnapuram Street, Royapettah, Madras 14. |
| *Periodicity of Publication* | .. | Half-yearly. |
| *Printer's Name* | .. | M. L. J. Press Private Ltd. |
| *Address* | .. | 55-56, Mundakanniamman Koil Street, |
| | .. | Madras-4 |
| *Publisher's Name* | .. | Dr. V. Raghavan, |
| *Nationality* | .. | Indian, |
| *Address* | .. | 7, Sri Krishnapuram Street, Royapettah, Madras-14. |
| *Editor's Name* | .. | (Same as above) |
| *Nationality* | .. | ( ,, ) |
| *Address* | .. | ( ,, ) |
| *Owner's Name* | .. | Sahitya Akademi, |
| *Address* | .. | Rabindra Bhavan, Frozeshah Road, New Delhi 1. |

I, V. Raghavan, hereby declare that the particulars given above are true to the best of my knowledge and belief.

18-4-1962

V. RAGHAVAN,
*Publisher.*



संस्कृतप्रतिभा तृतीय उन्मेषः द्वितीयो विलासः
अक्टोबर् १९६१
साहित्य-अकादेमी नवदेहली

## विषयानुक्रमणिका



### खण्डकाव्यानि—



### गद्यबन्धाः—



### रूपकाणि—

अनुवादाः—

१६. सर्वज्ञवचनानि—कृ. त. पाण्डुरङ्गी

१७. अर्थिबाला—चि. द्वा. देशमुखः

१८. अनुवादप्रकरः—वे. राघवः

१९. आन्तरात्मिकी परिपूर्णता—जलेश्वरः

"हसत"—को. ल. व्यासराजशास्त्री

निकषोपलः (पुस्तकविमर्शः)—

पण्डितक्षमाराव्-विरचितं पुस्तकत्रयम्, उभयरूपकम् (य. महालिङ्गशास्त्री), विमलयतीन्द्रम् (डा० यतीन्द्रविमलचतुर्धुरीणः), देवीस्तोत्रमाला (इलत्तूर् रामस्वामिशास्त्री), स्तोत्ररत्नत्रयम् (गणपतिमुनिः), भारतसन्देशः (शि. प्र. भारद्वाजः), वकुलाभरणम् (म. वेङ्कटरामशास्त्री), संस्कृतरत्नाकरः-मालवीयविशेषाङ्कः, श्रद्धाञ्जलिः, बालसंस्कृतम् (रामस्वरूपशास्त्री), नरकासुरविजयव्यायोगः (धर्मसूरिः), संस्कृतकविजीवितम् (म. सूर्यनारायणशास्त्री), क्षेमेन्द्रलघुकाव्यसङ्ग्रहः, वात्सल्यरसायनम् (श्री. भा. वर्णेकरः), श्रीसुन्दररामायणम्, आचार्यस्रग्धरामालास्तुतिः, श्रीदुर्गास्तोत्रम्, श्रीमायास्तोत्रम् (एस्. सुन्देरेशशास्त्री), मूलं संस्कृतम् (श्यामकुमाराचार्यः).

लेखकपरिचयः

'संस्कृतप्रतिभा'—सम्पादकः (तुरीयावरणपृष्ठे)

## सम्पादकीयम् —

संस्कृताभिवृद्धये बहुशो बहुत्र श्रूयमाणेषु उपायेष्वयमन्यतमः, यत्संस्कृत-सरलीकरणं नाम । लिङ्ग-पद-लकार-सङ्ख्या-कारकादिनियमजटिलां दुस्साधां दुष्प्रयोगां भाषां ग्रन्थेभ्यः कथं व्यवहारमार्गमानेतुं शक्यम्? अतः वाचोऽस्याः प्रचारमभिवाञ्छद्भिरवश्यमस्याः किमपि सौलभ्यरूपः परिष्कारः करणीय इति केषाञ्चिदभिसन्धिः । न केवलं प्रत्येकप्रयत्नेन कैश्चित्, अपि तु समितिष्वपि सम्भूय विचारयद्भिरयं निर्णयः प्रकाशितः ।

बहोः कालात्पूर्वम् (१९०९) मद्रनगरे अडयार्-पुस्तकालयाध्यक्ष्येऽधिकृतः आटो श्राडर्नामा जर्मनीयसंस्कृतपण्डितः 'भविष्यद्भारतराष्ट्रभाषा' इति शीर्षकाङ्कितं कमपि लघुं प्रबन्धं प्रकाशयामास । प्राच्यविद्यापरिषदः (आल् इण्डिया ओरियण्टल् कान्फरन्स्) मुम्बापुर्यधिवेशने (१९४९) विशिष्टचर्चाविषयतया निर्दिश्य विचारितोऽयं विषयः । संस्कृतायोगेनापि भारते तत्र तत्र चरता विषयमेतमविकल्प्य कीदृश आशयः पण्डितानामितरेषां चेति परिशील्य आयोग-निवेदन-पुस्तके (२१७-९ पृष्ठेषु) स्वाशयश्च उपन्यस्तः । आयोगदुहितृभूतया केन्द्रसंस्कृतसमित्या विषयेऽत्र किमपि कर्तव्यमिति पुनश्चाभिप्रायसङ्ग्रहाय विश्वविद्यालयेभ्यो विद्वद्भ्यश्च प्रश्नः प्रेषितः । एतदन्तरे विषयेऽस्मिन् सोत्साहमभिनिविष्टैः कैश्चित् पुस्तकान्यपि कानिचित् प्रकाशितानि ।

सारल्यसंपिपादयिषया य उपायाः सूचिताः सूचयिष्यन्ते च, न तैस्तथा भाव्यं यथा संस्कृतस्य स्वरूपमेव लुप्येत, अन्यदेव भाषान्तरकल्पं किमप्यापद्येत । अनया आभासतः सारल्यमापादितया भाषया न केवलमद्यतनीया दैनन्दिन-जीवनप्रतिबद्धा वार्ता निर्वोढव्या, परन्तु यद्वेदेभ्य आरभ्य महतः कालपूगादागतं बहुशाखं कविभिः शास्त्रकारैश्च स्वस्वमनीषायाः स्वस्वप्रक्रियायाश्च विपुलं विकासमनुरुध्य निर्मितम् तत् वाङ्मयं समुद्रकल्पमपि तरितव्यम् । इतरथा वाण्या अस्या मृतत्वापवादमपाचिकीर्षुभिः विधान्तरेण महतस्तस्य साहित्यस्य प्रायो मृतत्वमेव सम्पादितं स्यात् ॥

अत्र संरम्भमाविष्कुर्वद्भिरेतानि तत्त्वान्यवधेयानि । प्रथमम्—नास्ति सा भाषा लोके या सर्वथा सुलभा । अस्ति आङ्ग्लभाषा, अस्ति च तमिल्भाषा; तत्र लिख्यमानोच्चार्यमाणयोरेवाक्षरयोर्मिथो भेदो वरीवर्ति । द्वितीयम्—यथा पण्डितो वदति, न तथा बालः, भाषायां विशिष्य अकृतश्रमोऽन्यो वा । तृतीयम्—अस्ति महति संस्कृतसाहित्ये कठिनो भागः, तथा सरलो भागश्च; सन्ति बाणादयो विदग्धावबोधास्वादयोग्याः, रामायण-पञ्चतन्त्रादयः सामान्यतो लब्धप्रवेशैरपि सुग्रहाः । चतुर्थम्—अध्ययनेऽस्ति क्रमः; शिक्षापद्धत्याः लघूकरणं सदैव शक्यम्; सन्ति च आधुनिकैर्दृष्टाः प्राचीनानामपि परिचिता लक्ष्यप्रधानाः शिक्षणोपायाः ॥

*  *  *

प्राचीनायां संस्कृतमूर्तौ प्राणानाधित्सवो बहवोऽद्य संप्रतितनान् भावान् लब्धप्रचारान् आधुनिकान् वैदेशिकभाषान्तरीयांश्च शब्दान् संस्कृत-प्रयोगमार्गे तथैवानयन्ति । आङ्ग्लपदानि तथैव उपयुज्यन्तां नाम ; तथा क्रियमाणे तेभ्यः शब्देभ्यः परं संस्कृतविभक्तिप्रत्यययोजनं न केवल-मसमीचीनम्, परन्तु रचनाया एव कामपि अशोभनतामावहति । 'गवर्णमेण्टस्य', 'हैस्कूलेषु', इत्यादयः प्रयोगाः प्राय उद्वेजका भवन्ति । एभिः पदैः प्रतिपादितस्य अर्थस्य सुभगाः संस्कृतपर्यायशब्दाः सुलभा एव । अस्ति केषांचनायमाग्रहः—यत्संस्कृतपर्यायघटनेऽपि आङ्ग्लादिशब्देन सहा-क्षरसाम्यस्य अपरित्यागो नाम । तथा हि—सर्कार् इत्ययं शब्दः 'सर्वकारः' इति संस्कृते व्युत्पन्नः, मूलशब्दच्छायासहितोऽपि च यथा स्यात् तथा घटितः; 'सर्वे' (Survey) 'सर्वेक्षणम्' इति च । महता रसेन हि एतादृशानां कल्पितानां नूतनानां शब्दानां व्युत्पत्तिरेतत्कल्पकैः, प्रायः पण्डितैः, प्रतिपाद्यते । 'मेट्रिकुलेषन्' इत्यस्य शब्दस्य तेषु तेषु प्रान्तेषु श्रूयमाणेषु पर्यायेषु 'मातृकुलेषणः', 'मातृक्ले-शनः' इत्यादयः सन्ति । संस्कृतायोगस्य यात्रासु उत्कलमागतैरस्माभिः जगन्नाथ-क्षेत्रे केचन महामहोपाध्याया दृष्टाः । 'अपि ग्रन्थाः केऽपि भवद्भिरारचिताः?'

इत्यस्माभिः पृष्टे, तेऽवदन्—अद्य मया बहूनामाङ्ग्लपदानामनधिकरूपविपरिणामं व्युत्पन्नं संस्कृतरूपं सम्पाद्यते, यथा 'मोटार्' (Motor Car) मृदं तरतीति 'मृत्तरो' भवति; एवं 'वक्कील्' (Vakil) 'वाक्कीलः' इति । इदं च न केवलं पाण्डित्यस्य, अपि तु अगाधशब्दवाराशेः अनन्तसंस्कारखनेः असङ्ख्यधातु-शैलेन्द्रस्य संस्कृतस्यैव विडम्बना भवति ।

संस्कृतरचना च यद्यप्यद्य नूतनं विषयजातं परामृशेत्, तथापि तत्सर्वं पक्वया प्रयोगसामञ्जस्यसम्पन्नया स्वसंस्कारवासनाभावितया शैल्यैव परामष्टुमर्हति । तादृशीं रीतिमवलम्ब्यैवैषा भाषा प्रत्नापि सदैव नूत्ना सती सर्वमागन्तु स्वविश्वरूपेऽन्तर्भाव्य विराजते । तमेव मार्गमवलम्ब्य तां पोषयितुं तस्या अभिनवान् विलासान् उन्मीलयितुं च 'प्रतिभा' इयं जागरूका वर्तते ॥

*　　　　*　　　　*

अथ लब्धस्वातन्त्र्याया भारतभूमेः तत्र तत्र प्रान्तीयभाषाद्यावेश-वशेन जनताया विशरारुतां वीक्ष्य व्यग्रीभूता राष्ट्रनेतारः शासननिर्वाहकाश्च 'राष्ट्रस्यास्य कथमैक्यं संरक्ष्येत ? कथं भारतीयेषु भारतीयोऽहमिति भावना दृढा भवेत् ?' इति परं व्याकुलाः तं तमुपायमुदाहरन्ति; एतदर्थं निर्दिष्टाः समितयश्च विषयमेतं सम्प्रति परिशीलयन्त्यो वर्तन्ते । यदधीयते जनाः तद्भावना भवन्ति ते । भारतीयसाहित्येषु यद्येकं साहित्यं स्यात् यत्र निखिल-मपि भारतमेकदेशभावनया वर्णितम्, यत्राकैलासादा च कुमारीभ्यः, आसिन्धु आब्रह्मपुत्रं चैतं देशं समानसंस्कारसम्पन्नतया पठामः, तत् संस्कृत-वाङ्मयमेकमेव । एतादृशं राष्ट्रैक्यं यथा कालिदासकृतिषु स्फुटं प्रतिभाति, तथा नान्यत्र । प्रान्तीयवाङ्मयानि प्रान्तीयविषयविश्रान्तानि । सति चैवं भावनात्मकमैक्यमुद्देश्यतया निधाय ये विचाराः नचिराद् देशे नेतृभिः कृताः, तत्र संस्कृतस्य प्रायः नामापि नाश्रावि, दूरे तदध्ययनप्रोत्साहनाय या काचन सार्वराष्ट्रिकी केन्द्रप्रवर्तिता प्रक्रिया । यस्याः अविच्छिन्नायाः संस्कृतेरनुग्रहेण महति कालप्रवाहेऽस्मिन्, यथा असिरियाग्रेकप्रभृतयः प्राचीनजनसमुदायाः,

तथा भारतमेतन्न मग्नम्, यस्या अनुग्रहेण भारतमेतदच्छिन्नमभिन्नमेतदवधि एकमेव राष्ट्रमभूत्, सा संस्कृतिः तत्कोशभूता संस्कृतभाषा च यदि शैशवात् प्रभृति भारतीयानां बालानां बालिकानां च विद्याविधाने प्रधानं ध्रुवं स्थानं भजेताम, तदा भावनात्मकस्यैक्यस्य सम्पादनकार्यं सुप्रस्तुतं स्यात्, सुसाधं च भवेत् ॥

* * *

भारतीयराष्ट्रसंविधाने राष्ट्रभाषात्वेन स्वीकृताया हिन्दीभाषाया अपेक्षितः शब्दराशिः संस्कृतादेव आदेय इति प्रथममूरीकृतम् । अद्य तु नचिरात् कृतायाः नूतनमन्त्रिसभाघटनायाः परम् अखिलभारत-आकाशवाणीद्वारा प्रसार्यमाणायां हिन्द्यां संस्कृतांशो लघूकर्तव्य इति कोऽपि प्रत्याम्नायक्रमः प्रस्तावितः । हिन्दी निखिले भारते यदि अवगम्येत, तदा स्वस्यां दृश्यमानैः सार्वराष्ट्रिकैः संस्कृतांशैरेव तथा अवगन्तुं शक्यते; तदंशह्रासे, तन्निष्कासने वा, तदवबोधगोचरो देशश्च हठात् संकोचं प्रापितः स्यात् । एतादृश्याश्च संस्कृतानुप्राणिताया हिन्द्या गोचरो यो देशः, स न केवलं भारतमात्रपर्याप्तः, किन्तु सकल एव 'दक्षिणपूर्व-आशिया' इति ख्यातः प्राचीन-कालादारभ्य संस्कृतवासनाव्याप्तः प्रदेशः । 'थाय्' इत्यद्य, पूर्वं 'सियाम्' इति च प्रथितो जनपदः अद्यत्वेऽपि नूतनशब्दनिर्माणे संस्कृतमेवोपजीवति । यत्कर्तुं मातृभूमिः भारतं बिभेति, तत् स्वैरं दुहितृप्राया जनपदा एते कुर्वन्ति । थाय्देशे सम्प्रति पाश्चात्यशब्दानपहाय नूतनतया संस्कृतमयाः पारिभाषिकशब्दा निर्मिताः, व्यवहारपथमारूढाश्च दृश्यन्ते; न च तेभ्यः भयं वा अरुचिर्वा जनेषु विद्यावत्सु अविद्यावत्सु वा दृश्यते । नाडीद्वारा जलं यत् प्रतिगृहं रथ्यासु च आनीय प्रविभज्यते, तत् Water Supply इत्याङ्ग्लवाण्योक्तं 'प्रपा' इति थाय्देशीयैरुच्यते । एवं 'तेर्मामीटर्'=पारोद् (पारदात्); टेलिग्राफ्=तोरलेख् (दूरलेखात्); एवं टेलिफोन्, टेलिविषन् इत्येतयोः दूरशब्ददूरदर्शनशब्दौ संस्कृतादुपात्तौ; गवेर्ण्मेण्ट्=राथ्पाल् (राज्यपालनात्);

मोटार्-कार् रोत्यान् (रथयानार्थ्); वेटर्नरि डाक्टर्=सत्त्ववैद्य (सत्त्ववैद्यात्)। थाय्-भाषायां प्रतिशतं त्रिंशत्संस्कृतशब्दाः सन्ति । अस्मिन् विषये कथामेतामुदाहरति भारतेऽधिकृतः थाय्-राज्यदूतः सुकिच्-निर्म्मन्-हेमिन्द् (सुकृत-निर्माण-इन्द्र)नामा—"भारतीयदौत्याधिकारं कमपि अधितिष्ठन् श्रीमान् बी. एन्. चक्रवर्ती कदाचित् थायूदेशे बाङ्काक्नगरं गतः, तत्रत्ये कस्मिन्नपि निवासस्थाने वासमभिलषन् तत्रस्थितं भृत्यमाङ्गलवाण्या यथाकथञ्चिद् बोधयितुं प्रायतत, चिरादपि न शशाक । अन्ते यदा स्वात्मानं 'भारत्का राजदूत्' इत्याघोषयामास, तदा सद्य एव स्मेराननस्स भृत्यः प्रह्वीभूय, सेवार्थं ससम्भ्रमस्सज्जो बभूव" इति । उदाहृत्य चेमां कथां थाय्-राज्य-दूतो लिखति (इन्दियन् फारिन् अफर्स्, सेप्टम्बर्, १९६२, २७-पृष्ठे) "एतेन विस्मापितस्स श्रीमान् चक्रवर्ती । कुतः? न केवलं संस्कृतमय्या वाचा एष भृत्यस्य बोधस्सुलभतरो बभूवेति; किन्तु थायूदेशे शिक्षाविहीनेन भृत्येन सा संस्कृतप्राया वाक् अवगता, यामखिलभारत-आकाशवाणीद्वारा शृण्वन्तो भारतीया एव भूयांसो जनाः पाण्डित्यनिबिडेयमिति सोद्वेगमाक्रोशन्ति" इति ॥

*　　　　*　　　　*

देहल्यां विश्वविद्यालयद्रव्यदानसमित्या संघटिते विश्वविद्यालयोपाध्यक्षाणां संमेलने प्रास्ताविकं भाषणं वितन्वता प्रधानमन्त्रिणा नेहरूमहाशयेनैवं संस्कृतमधिकृत्य प्रोक्तम्—

"भारते संस्कृतं प्रभूतं प्राधान्यमावहति । इच्छामि तदध्ययनं प्रोत्साहयितुम् । मन्ये सर्वस्यापि अनिवार्यतया पठनीयं तदिति न निर्बन्धुं शक्यम्; किन्तु तस्य प्रोत्साहनं विधित्सामि; महद्धि वृत्तं भारते (तद्द्वारा) । वस्तुतस्तु भारतीयसंस्कृतेः सर्वमपि मूलं सन्निवेशश्च संस्कृतभाषयावृतं वर्तते । पश्चाद् अंशान्तराणि तां भाषां प्रविविशुः, जनयामासुश्च तां संमिश्रां संस्कृतिं याधुना नो वरीवर्ति । तस्याः संस्कृतेः स्वागतमेवोदीरयामः, किन्तु तस्या अपि संस्कृतमेव मूलमासीत् । संस्कृतं नाम महाविभूतिमती उज्ज्वला भाषा ।"

## युग्मालापः

चि. द्वा. देशमुखः

निराशः—

नियतं निकटां दुरायतिं परिपश्यन् कलयामि भारते ।
विरता ननु सा स्वतन्त्रता जनिता सार्वजनीनबन्धुता ॥ १ ॥

विकसन्नवयोजनाभरो न हि दीनानवति प्रकर्षयन् ।
धनवान् धनवत्तरो भवत्यधनेऽनन्तमहार्घताहते ॥ २ ॥

दरसम्भृतकर्मकौशलाः पदमासाद्य सपक्षमन्त्रिणः ।
कलहादपहीनसंविदो भ्रमयन्त्यस्थिरमासनप्लवम् ॥ ३ ॥

साशः—

भव सखे न सखेद इवायतिर्जनिभुवो भविता भुवनोत्तरा ।
ननु कथं शतवर्षनिमीलिता भवति सा सहसा नयनोज्ज्वला ॥ ४ ॥

गणय तावदियन्ति शुभानि नः प्रथमतो धुरि राष्ट्रपतिर्विदाम् ।
पतिरतीव विदग्ध उपाधिपो वरमते रमते च जवाहरः ॥ ५ ॥

जनवशा नवशासनपद्धतिः कृषिकृतां परितः सरितां जलम् ।
अपि च विद्युदनेकहयैः समा विविधयन्त्रगृहाकुलितावनिः ॥ ६ ॥

जनपदं नगरं च नवाध्वभिः सुबहुविधं समयोज्यत योजकैः ।
अगणितो यततेऽत्र धृतव्रतः प्रगतिकार्यरतोऽधिकृतां गणः ॥ ७ ॥

निराशः—

जरया शिथिलाक्षमाङ्कैः कृतिसिद्धिर्भ्रम एव मन्त्रिभिः ।
वयसां वयसावसादिनां गरुतां किं मरुतेरितं पुरः ॥ ८ ॥

अमुना नवशासनेन वा प्रतिनिध्युद्धरणं न तोषदम् ।
जनताऽवनताप्नुयात् कथं गणतन्त्रे पटुतां निरक्षरा ॥ ९ ॥

उपरि प्रचलत्यथायुषः स्तर एति प्रभविष्णुगृध्नुता ।
मतिवञ्चितवित्तमात्रजो ननु निर्वाचननिर्णयो मुहुः ॥ १० ।

विदितं कठिना ह्युदम्भसां स्थगिताग्रे कृषिरेति कृच्छ्रगा ।
मनसां परिवर्तनाद्विना फलदा नैव च यन्त्रसाधना ॥ ११ ॥

नगरादथ दुष्टजीविका परिपाट्यानयति प्रतारणम् ।
विधिना जनतानुशास्यते नयहीनं खलु राजकारणम् ॥ १२ ॥

**साशः—**

अयि मनाक्कलये सुहृदुन्मनाः स्मरति नैव भवान् जनजागृतिम् ।
जनगणोन्नमनाध्ययनक्रमं वितनुते तनुतेजसि यः प्रभाम् ॥ १३ ॥

वसुभिरस्मदसून्नु वसुन्धराऽवति खनिः कति रत्नजनिर्हि सा ।
दिशति नः स्म नृणां च परम्परां दशदिशास्वचलस्थिति यद्यशः ॥१४॥

प्रतियुगं महतां भविता जनुः समयपूतमनाविलवर्तनम् ।
सततवर्षझराहतिपङ्किलं शरदि किं न सरो विशदाम्बुवत् ॥ १५ ॥

**निराशः—**

निपुणा अपि नायका वृथा यदि तेषामनुगा न सज्जिताः ।
जगति प्रसभं प्रगच्छति स्थविराः स्युर्युवरेचितासनाः ॥ १६ ॥

विवशा ह्यवरा च नेतृता परिवारोन्नयने न चेदलम् ।
गुणवान् कथमीश्वरो न यः स्वपदे तुल्यगुणं नियोजयेत् ॥ १७ ॥

तरुणा अधुना तु किंविधा न हि शीलं न च तेषु सभ्यता ।
न हितं विहितं प्रशिक्षणादनुशिष्टा यदवासदुष्टता ॥ १८ ॥

**साशः—**

युवसु चेद् गुरवो धृतसंशयाः किमिव लब्धमहो भुवि भौतिकात् ।
वरमतः परमात्मसमाहिता ह्यवधीरितजीवनकामना ॥ १९ ॥

मम दृढा मतिरायतिरेधिता नवयुवस्थिरतोद्गम एव नः ।
तदुदये विरता भविताखिला विघटना नवभारतभेदजा ॥ २० ॥

निराशः—

सकलं कलये दरिद्रताफलमेतद्द्विपदोऽहि विग्रहान् ।
जनयन्त्यथ सम्पदागमो मनुजे स्यान्मनुजस्य बन्धुता ॥ २१ ॥

साशो निराशश्च सार्धम्

देशस्याशा निराशा युगपदधिवसन्त्येकमेवास्पदं य-
ल्लोका जानन्ति नाम्ना बहुविधवचसो यौवनव्यञ्जकेन ।
तद्विक्थं भूतकालः सुलभपरिणतिर्वर्तमानश्च काल-
स्तेषामेवायतिर्यां रचयितुमनसामातता नः प्रयत्नाः ॥ २२ ॥

निष्ठा क्षान्तिः प्रयासो विधिवदधिगतं पाटवं कर्मजाते
मानुष्ये प्रेमभावो विकसितमतिता शक्तिराढ्या समाजे ।
सभ्या न्याय्या च वृत्तिः सरसकृतिरुचिर्नित्यमास्था समाजे
यस्मिन् देशे च यूनां नियतपरिणतिस्तत्र भूः स्वर्गरूपा ॥ २३ ॥

## कावेरीलहरी

### नारायणकविः

महीभृत्तुङ्गस्ते जगति विदितो भाति जनको
महीयान् हि प्रेयान् भवति भुवि रत्नाकर इति ।
अपि स्वर्णस्थानान्यतिशतमुदञ्चन्ति तटयोः
श्रियं ते कावेरि प्रथयितुमलं कः कविरपि ॥ १ ॥

अयि त्वां तुष्टूषोर्जितसुरसरित्पूरविभवे
तनूजे सह्याद्रेः सततमपि गीतां बुधवरैः ।
सुधाढ्यां भूभृत्कुलवरशिरोलालितरसां
विधेहि त्वत्तुल्यां जननि मम वाचं कविनुताम् ॥ २ ॥

त्वमङ्के सह्याद्रेर्भवसि ननु बालेव विमले
क्रमाद् वृद्धिं भूयो भजसि भुवनस्यास्य भृतये ।
परं चोलान् बालानिव जननि संवर्ध्य पयसा
तनूभूता वार्धिं प्रविशसि विनीतेव वनिता ॥ ३ ॥

भवानी संसक्ता विलसति भवत्या गिरिसुता
तव श्रीरङ्गेऽसौ वसति विमले श्रीपतिरपि ।
भजन्ते वेणीं ते स्फुटतरमशेषाः सुमनसो
विशुद्धिस्ते वाचामपि सरणिमाचामतितराम् ॥ ४ ॥

पतिं पारावारं परमभिसरन्त्या गिरिवरात्
सुमस्फायद्वेण्याः स्फुटकमलमुख्या मृदुगतेः ।
वहन् गङ्गां तुङ्गामपि हि सुषमां द्रष्टुमसमां
गिरीनुच्चैरेष श्रयति गिरिशस्ते तटगतान् ॥ ५ ॥

सुता शैलस्य त्वं भजसि भुवि सारस्यमसमं
प्रपन्ना देवि त्वं लवणजलधिं चासि मधुरा ।
वहन्ती निम्ने स्वान्नमयसि च लोकानुपरिगान्
महीयान् मातस्ते मनसि न हि मे माति महिमा ॥ ६ ॥

महत्तन्मायूरं महितमपि मध्यार्जुनपुरं
महीशूरं मातर्मिलितघनसारं भुवि परम् ।
तटं ते संप्राप्तं वरमपि परं तत्त्रिशिरसः
सुतुङ्गं श्रीरङ्गं गजवनमभूत् पावनमपि ॥ ७ ॥

श्रुतिः सा वक्ति त्वां सह जननि गङ्गादिभिरपि
प्रशंसन्ति त्वां च प्रतनवचनान्येव बहुधा ।
भवत्वेतन्नूनं क्वचिदपि निलीनं सुविदिता
न ते किं नुत्यर्हा बहुजनपदानामुपकृतिः ॥ ८ ॥

खनन् कश्चित् कूपं कटुसलिलमल्पं यदि मरौ
कियत्तं श्लाघन्ते भुवि स च कियन्माद्यति हृदि ।
विशालान् यद्देशानमृततुलितैरम्ब सलिलैः
चिरात् पुष्णासि त्वं कथयितुमिदं कः कमलजः ॥ ९ ॥

कियन्तः प्रासादा जलधरपथश्रान्तशिखरा
विचित्रास्ते कूले विदधति नरान् विस्मिततरान् ।
कियत्यो देवार्चास्तव सलिलसङ्गातिशुचयो
न भूमा ते सीमां भजति मनसो मे न च गिराम् ॥ १० ॥

स्वतः स्वच्छच्छायातटतरुसुमस्तोमसुभगा
क्वचिन्नीलाम्भोजच्युतदलसमाश्लिष्टसलिला ।
क्वचिद्दिव्यस्त्रैणातुलघुसृणपङ्कारुणजला
नदीनां तासां त्वं भजसि तिसृणामम्ब सुषमाम् ॥ ११ ॥

प्रहृष्यत्पाथोजं मधुरतरगुञ्जन्मधुकरं
परं पूतं शीतं जननि तव पीयूषतुलितम् ।
अपामेतं पूरं कलिमलहरं ते कलयतः
प्रहृष्यन्त्यक्षाणि प्रसभमपि तत्तस्य सपदि ॥ १२ ॥

तरङ्गाश्लेषार्द्रस्तटतरुसुमामोदसुभगो
मरुत्पोतः पूतस्तव पथिकलोकस्य तटयोः ।
पुरः स्वेदं स्वेदं हृदि जननि सादं च वपुषः
समग्रं संतापं प्रतनमथ पापं च हरति ॥ १३ ॥

स्रवन्तीरल्पाल्पा अनतिविदिता याः कलुषिताः
अशक्ता गन्तुं ता निजपदमिताः काननभवाः ।
समृद्धस्वर्णश्रीकलितनिजसाम्या विमलिताः
विधायादायैता गमयसि च रत्नाकरमहो ॥ १४ ॥

अमी चूताः पूता मृदुपवनधूतास्तव तटे
विराजन्ते शाखाविधृतफलभारा नततराः ।
श्रिताग्रा वाचालैः पिककुलवरैर्ये कलरवैः
समर्चन्तो भक्त्या शरणगमिवाम्ब्राध्वगकुलम् ॥ १५ ॥

चिराद्गण्येरन् वा कुशलमतिना तेऽम्ब सिकताः
परं नैताः कूले तव सुकृतशालाः सुविपुलाः ।
वसन्तो यत्रैते पथिकयतिवर्णिप्रभृतयो
भजन्तीष्टानर्थानविदितबुभुक्षापरिभवाः ॥ १६ ॥

शतं नद्यः सन्ति त्रिचतुरदिनोद्वेलसलिलाः
विशुष्यन्त्योऽनीशाः सपदि चटकस्यापि हि मुदे ।
न ताः स्वादुस्फीतस्वसलिलभरप्रीतभुवनाः
सदा नाव्या भाव्या सकलविबुधैः सह्यगिरिजा ॥ १७ ॥

परं यन्माधुर्यं जगति पयसस्तेऽतिविदितं
फलानां भूयस्तद्विलसति तरूणां तटभुवाम् ।
अनीदृग्वाचां तद्भवति च कवीनां मधुमुचां
महन्मन्ये मौग्ध्यं जननि महिलानां च सुदृशाम् ॥ १८ ॥

सुदूरादायातं सपदि मनुजं प्रागविदितं
त्रिनिश्चिन्वन् कान्त्या वदनगतया ते तटभुवम् ।
वसन् देशेऽन्यस्मिन्नपि मितमतीनामचरमो
जनः स्तौति क्षिप्रं यदिदमपि ते किं न महिमा ॥ १९ ॥

श्रुतं मा भूत्तेन श्रुतमपि न वेदोऽपि विदितो
न चानीचा वाचा विलसतु न चाचारसरणिः ।
विदेशे विद्वद्भिर्विहितविनयैर्वल्गुवचनैः
परं विप्रः पूज्यो भवति तव तीरागत इति ॥ २० ॥

शरत्ताराकारस्फुटमणिमहाहाररुचिराः
प्रतीरे ते बालाः कनकमयचेला यदमलाः ।
वलन्ते बाष्पानःप्रवरमधिरूढा मदकला-
स्तदम्ब त्वद्वारिप्रसृतिभवभाग्यैककणिका ॥ २१ ॥

पितुः प्राप्तैरर्थैः पथि पथि सखीभ्योऽप्यधिगतै-
रशेषैः पुष्यन्ती भुवनमविशेषेण जननि ।
प्रसन्नैवाजस्रं यदि कमितुरग्रेऽप्यमुखरा
न वैरस्यं यासि क भवति सुदत्ते ननु समा ॥ २२ ॥

अभूदेवग्रामं भवति न हि तीरं क्वचन ते
न च ग्रामो विद्वद्वरविरहितो देवविकलः ।
न दीना विद्वांसो जननि विबुधा नाल्पशरणा
नदीनामन्यासां भवति किमु भाग्यं तव समम् ॥ २३ ॥

पतन्तः सह्याग्रात् पटुतरशिलाघातमुखराः
शरज्ज्योत्स्नाशुभ्रास्तुलितपृथुमुक्तामणिसराः ।
रयानीतस्फीतातुलरुचिमिलद्रत्ननिकरा
भवन्ति त्वत्पूरा विदलितमहापातकिनराः ॥ २४ ॥

महीध्राः सन्त्यन्ये फणिबहुलवल्मीकवलिताः
फलं किं तैः स्फीतैरपि कपिशिवामात्रशरणैः ।
चिरं जीयात् सह्यः सलिलभृतसर्वावनितलः
शरण्यारण्याप्तामलमुनिवराधीतिमुखरः ॥ २५ ॥

वहन् गङ्गां मौलौ दधदथ सुधांशुं पुरहर-
स्तुषाराद्रेर्बालामपि वपुषि नेत्राग्निजनितम् ।
स हर्तुं संतापं निजमभिनवैर्नूनममृतैः
भजन् बह्वीर्मूर्तीस्तव जननि तीरे निवसति ॥ २६ ॥

गतास्तुङ्गं शृङ्गं तव जननि तातस्य विबुधाः
पिबन्तस्तत्पुण्यं जनिमृतिहरं नव्यममृतम् ।
परं सेवायातामरवरवधूकेलिमुदिता
भजन्ते सख्यं ते सपदि ननु सौम्यं दिविषदाम् ॥ २७ ॥

वरं भृङ्गास्तुङ्गास्तव वितततीरद्रुमगताः
पिकाः काका घूका अपि शकुनयोऽमी सुजनयः ।
अनासाद्याम्ब त्वाममृततुलितामल्पसुकृता
वरं प्रासादाग्रे जननि निवसन्तोऽपि न नृपाः ॥ २८ ॥

अनल्पावर्तं ते सलिलमपि वीक्ष्यामलतरं
नरा नावर्तन्ते जननि भुवि भूयो भववने ।
निबध्नन्तः सेवाञ्जलिमपि हि ते साधुमहिते
न तिष्ठन्ते दीना धरणिपतये दूनवदनाः ॥ २९ ॥

पिबन् पानीयं ते पुलिनतलशायी पथि गतः
समाजिघ्रन् मातः स्फुटजलजजातं परिमलम् ।
कलं कुर्वन् कर्णे पिकवरवधूटीकलकलं
रसालद्रोर्मूले रसयति रसं कंचन जनः ॥ ३० ॥

वसन्तः सन्तो ये महति किल दूरेऽपि विषये
स्मरन्तस्त्वां स्नात्वा द्रुतमुषसि कुत्रापि पयसि ।
पठन्त्येते भक्त्या चरितमविगीतं तव परं
धुनीनां धन्यानां भवति हि धुरीणाम्ब भवती ॥ ३१ ॥

त्वया संसक्तानामपि तटगताः स्वल्पसरितां
मुदा संस्तुत्यर्हा महितचरितानामपि सताम् ।
निरीक्ष्यन्ते नैके नृपवदपि लोके यदि धनैः
कथंकारं गच्छेत्तव महिमपारं मम मतिः ॥ ३२ ॥

तनोश्चेदुद्भूतैस्तनुभिरपि जात्वेव जननीं
पयोभिः पुष्यन्तीं स्वसुतमपि शंसन्ति निगमाः ।
पयोभूयाजस्रं प्रचुरतरदेशावनपरा
न जाने केषां वा जननि वचसां त्वं नुतिपदम् ॥ ३३ ॥

नगो नागो वाहं तटभुवि भवेयं तव परं
मृगो वाप्यन्यस्मिन् जनुषि जडधीरम्ब विहगः ।
भवेयं भिक्षुर्वा परमकृपणो भूमिवलये
न दूरे ते देशे धनदतुलितो भूपतिरपि ॥ ३४ ॥

समभ्येति त्वां सा सुरसरिदपि स्वाघधुतये
स्वयंभूसंदिष्टा प्रतिसममिति स्कान्दविनुतिम् ।
अजानद्भिर्मन्ये मुनिकुलभवैस्त्वां कतिपयैः
परं पञ्चस्वेकां जननि भुवि गङ्गासु गणिताम् ॥ ३५ ॥

बहुस्रोतःख्याते चुलुकितमहाब्धेरपि मुनेः
परं मान्येऽम्ब श्रीधरशुचिशिरस्तः समुदिते ।
श्रुता त्रिस्रोता या भयमधिगता जह्नुमुनितोऽ-
प्यलं गङ्गा किं श्रीधरपदभवा त्वां तुलयितुम् ॥ ३६ ॥

विशालास्त्वत्तोऽपि प्रचुरतमनाम्न्याम्बुविदिता
विशन्त्यब्धिं नद्यः परिमुरुतरग्राहमकराः ।
गिरीन्द्रादा वार्धेरुभयतटकेदारमिलना-
दमोघाशेषाम्बुस्त्वमिव ननु नालोकि तटिनी ॥ ३७ ॥

गिरीशोत्तंसार्हा परमहिमशैलाद् भुवमिता
तटीदीव्यद्रम्भामिषदनिमिषाह्लादिसलिला ।
समा मन्दाकिन्या सुरभिकुमुदाक्षा विजयसे
परं न त्वं मातस्तपनतनयासङ्गकलुषा ॥ ३८ ॥

परं कुम्भादन्ते विलसति तटे कोणनगरं
स कुम्भेशो यस्मिन् जयति च शिवा मङ्गलपदा ।
सुखं शेते शार्ङ्गी जहदपि परं क्षीरजलधिं
विहातुं स्वीयं द्रागिव दशजनिक्लेशमवशः ॥ ३९ ॥

गताः पारं श्रुत्याः पदजलधिपारीणधिषणा
विनीता न्याये वा मतिमथितमीमांसकमताः ।
नरं शिष्टा वैद्यागमगतिविदो वाङ्मुखकृतो
यतीशा यज्वानो जगति विदिता यत्पुरगताः ॥ ४०

कृतं वाराणस्यामपि चिरमघं हर्तुममितं
निवासं यत्राहुः समुचितमुपायं स्मृतिविदः ।
नरं कन्यातीर्थं विलसति च धन्याम्बुवेदितं
त्वयासीत् पूतं तत्पुरमुभयपार्श्वप्रसृतया ॥ ४१ ॥

जनिं भूयो यायां यदि भुवि भवेयं तव जले
कुलीरः कूर्मो वा तिमिरपि बकोऽश्च करटः ।
तृणं मन्वे देवि त्रिदिवमपि पद्मासनगृहं
मतां मुक्तिं शुक्तिं तनुमिव न मे सक्तिरयते ॥ ४२ ॥

प्रकृत्यैवाल्पीयो यदपि विरसं भाति कलुषं
वचो मेऽनास्वाद्यं ननु भुवि कवीनां रसविदाम् ।
इदं ते संस्तुत्या तदपि विमलीभूय महतां
सतां वन्यस्रोत:पय इव भजेतैव हृदयम् ॥ ४३ ॥

पयोभिः पुष्टानां कनकतटिनि त्वं तटभुवां
बहूनां बालानामिह समधिकैरम्ब कनकैः ।
सदा पूर्णान् कोशानपि विदधती वत्सलतरा
महीं कर्तुं रत्नैर्भजसि किमु रत्नाकरमपि ॥ ४४ ॥

पदा प्राप्तं पङ्कं प्रतनमपि पङ्कं हरति ते
भ्रमोऽयं चेद्भूयान् भ्रममपि हरत्यम्ब स परम् ।
अयं जाड्यं नृणां जरयति जलस्यापि जडिमा
स्वयं चैते भङ्गा बत कलुषभङ्गं विदधति ॥ ४५ ॥

गिरीशस्याभूस्त्वं जननि शिरसः सा हरिपदात्
युवां नाम्ना गङ्गे ननु विबुधलोकैकविदिते ।
न मुञ्चत्युत्सङ्गं तव यदि परं श्रीपतिरसौ
ततस्ते दाक्षिण्यं प्रथितमिह हेतुत्वमयते ॥ ४६ ॥

तवोत्सङ्गे रङ्गे विलसति किल श्रीपतिरसौ
वहन्निद्रामुद्रां शिशुरिव जनन्याः प्रथमजः ।
भजन् वातं शीतं तटयुगतरूणामविरतं
कलं गीतं शृण्वन्नपि पिकवधूनां श्रुतिहितम् ॥ ४७ ॥

प्रशस्यान् स्वावासानविरतनदीमातृकतया
समीकृत्याहुर्यैरपि सपदि देशान्तरभुवः ।
भजन्ते चोलास्तेऽखिलधरणिपालादरधृताः
त्वदीयैः स्रोतोभिः श्रियमनुपमां भारततले ॥ ४८ ॥

मता मायामेया विबुधनिवहैस्त्वं मुररिपोः
पुरा सा राजर्षेरपि भुवि कवेरस्य दुहिता ।
अदीनां कुर्वाणा भुवमथ नदीनामपि वरा
पयोधिं संप्राप्ता परमतिपवित्रा विजयसे ॥ ४९ ॥

परं लोपामुद्रा ननु परमभद्राकृतिरभूत्
समासाद्यासीद्यां कलशजनिरल्पोऽपि स मुनिः ।
क्षितौ दक्षो भक्षीकृतमनुजरक्षोनिगरणे
समुद्राचामे वा शिखरिवरमुद्रावितरणे ॥ ५० ॥

प्रकुप्यद्भिः स्तोत्रे स्वरविकृतितो द्रागपि शठैः
विनिघ्नद्भिः स्वार्थानपि भुवि मखात् किं मम बुधैः ।
अभक्तानां नृणामपि तटभुवां दूषणकृतां
गतिर्मे कावेरि त्वमिह दधती वित्तमतुलम् ॥ ५१ ॥

न मन्ये मान्यानां गुणलवविहीनं मम वचः
चमत्कारं चित्ते रचयितुमलं स्यादिदमिति ।
मतं मे पूताया निरुपधिदयानिघ्नमनसो
जनन्या बालस्याविलमिव परं ते मुदमिति ॥ ५२ ॥

लसत्स्वर्णाभिख्यां रमणमथ रत्नाकरमितां
वहन्तीमुत्सङ्गे शयितमपि पुंसां प्रथमजम् ।
सुदूरे द्रष्टुं त्वामचलकुलवृद्धस्तनुभवां
शिरः श्रीमानुच्चैर्वहति भृतबाष्पः किमु मुदा ॥ ५३ ॥

नृणामन्यत्राहुर्भुवि निवसतां यत्तटयुगाद्
विशुद्धिं कृच्छ्राद्यः स्मृतिसमुदितां ये बहुविदः ।
प्रथां याः पञ्चाशा जगति महतीनां च सरितां
श्रुता तास्वेका त्वं ननु जननि गङ्गासु जयसि ॥ ५४ ॥

स्मृतिपथादवरोहमहो गते
समुदिताखिलकाव्यकलान्विते ।
अयि कवे त्वयि भारतवैभवे
जनिमतां कतमो न तमो व्रजेत् ॥ ७ ॥

अमृतमये समयेऽपि वाङ्मये
मधुरतमे न रमेत चेन्मनः ।
सति विभवेऽपि भवे भवेज्जनो
विधिहतकेन हि तेन वञ्चितः ॥ ८ ॥

विद्युद्दामप्रतिमललितां मेघदूतोपनीतां
मन्दाक्रान्ताकुसुमरचितां शाश्वतीं हारयष्टिम् ।
कण्ठेकृत्वा रसजलनिधौ सज्जितो मज्जितो वा
योऽसौ कालं नयति न जनः कोऽपि धन्यस्तदन्यः ॥ ९ ॥

## वसन्तः

### गोस्वामी हरिकृष्णशास्त्री

प्रमुदितहृदयो रसालशाखास्वपि विहरन् मधुमञ्जरीरसज्ञः ।
पिक इह कलकाकलीं वितन्वन् दिशति जनान् सुत्रमागतो वसन्तः ॥ १ ॥

उपवनवनराजिवल्लरीणां कुसुमभरैरनुलालितोऽनुरागात् ।
मदननृपकुमार एष भूयो विलसति मञ्जुनिकुञ्जगो वसन्तः ॥ २ ॥

[1]सरसितनिजपाटलानुरागः सरसि विकासितपङ्कजावलीढः ।
विलसति मकरन्दमत्तभृङ्गः स्मरसचिवः सुमविग्रहो[2] वसन्तः ॥ ३ ॥

करधृततरुणी[3]करप्रवालः स्वतनुविराजितपुष्पजालमालः ।
प्रसरति हरतीव मानमन्तः[4] सरसजनेषु शनैः शनैर्वसन्तः ॥ ४ ॥

विट इव विटपान्तरेषु लीनो नवनवनर्तननर्तितान्तरोऽयम् ।
[5]सुरभिरसभरं निपीय गुञ्जन् विलसति गायक एष चञ्चरीकः ॥ ५ ॥

चलदलदलताललाल्यमानो विपिनवरे विविधद्रुमावलीषु ।
पुनरपि कलकाकलीरसज्ञो दिशि दिशि कूजति कोकिलः कुलीनः ॥ ६ ॥

गणयति गणकोऽपि मासभक्तौ[6] [7]शरदि सदा मधुमाधवौ वसन्तः ।
अहमिह मनवै विलोक्य लीलां चषति सदा मधु[8] [9]माधवो वसन्ते ॥ ७ ॥

---

1. सरसित=रसमयीकृत ।
2. सुमविग्रहः=पुष्पमयशरीरः ।
3. तरुणी=कामिनी, पुष्पविशेषश्च । गुलाब=सेवतीति हिन्दीभाषाया प्रसिद्धम् ।
4. मानमन्तः=हृदयसन्तापम्
5. सुरभिः=सुगन्धमयः वसन्तश्च ।
6. मासभक्तौ=मासानां विभाजने ।
7. शरदि=संवत्सरे ।
8. मधु=चैत्रमासः=मद्यम् माक्षिकम् पुष्परसश्चेति ।
9. माधवः विष्णुः घनान्धश्च ।

सुभगसमीरसहायः सरसिजकुसुमावलीशरव्रातः ।
स्मर इह सजितसारः क्रीडति कुञ्जेषु कामिनीजगति ॥ ८ ॥

क्षेत्रेषु सार्षपाणामिह कुसुमानां विराजते राजिः ।
सुस्वागताय सुरभेः पीतपटानामिवास्तरणम् ॥ ९ ॥

अभिनवसुमनःसम्पदा शोभितभुवनसमाज ।
विहर मानसे धीमतां मदनसदन ऋतुराज ॥ १० ॥

उपवन वनमञ्जुल सघन तरुवरलतिकाकुञ्ज
एष लसति सुमनोभिरिह जहि मौनं द्विजपुञ्ज !
जहि मौनं द्विजपुञ्ज ! मञ्जु गुञ्जति मधुपाली
[1]विरसति विमलविचारसार सरसीषु मराली
अभिनवमृदुदलधरण ! गर्वभर ! पथिकविहिंसन !
सपदि न विस्मर तपनतापघनवेलामुपवन ![2]

---

1. विरसति=रसरहिता नीरसा इव भवति ।
2. अन्योक्तिः, कुण्डलियाच्छन्दः ।

## प्रकीर्णकश्लोकाः

### विजयशङ्कर कानजी

ऋतानि सत्यानि हितावहानि
स्पष्टानि सम्यग् हृदयंगमानि ।
पुण्यानि दिव्यानि वचांसि येषां
नमोऽस्तु तेभ्यो जगतां गुरुभ्यः ॥ १ ॥

शान्तं दान्तं पवित्रं परहितनिरतं निर्मलं सत्यकामं
केनाप्येवं हि लोके कलिमलमलिने जीवनं जीव्यते यत् ।
यः कोऽप्येतन्न पश्येद् यदि भुवि विततं पावनं कस्य हानिः
सूर्यं पश्येदुलूको यदि न समुदितं कोऽयमर्कस्य दोषः ॥ २ ॥

विचारशीलः परिणामदर्शी
विविच्य कर्माणि हिताहितानि ।
हितानि कुर्वन्नहितानि वर्जयन्
अनात्मघाती भव संयमेन ॥ ३ ॥

परधर्मविचारणे रतो
निजधर्मान्न निरीक्षितुं क्षमः ।
स्खलितो निजधर्ममार्गतो
मतिदर्पादशिवं समेति सः ॥ ४ ॥

अननुभूतपदार्थनिरूपणे
विशतु मा मदमोहसमुद्भवा ।
मनसि मे जनरञ्जनलालसा
वचसि वा परवञ्चनचातुरी ॥ ५ ॥

आप्तव्यं शान्तिकामैरुपशमजनितं भर्जनं वासनानां
त्याज्यं सद्भिः समर्थैर्मदबलजनितं तर्जनं निर्बलानाम् ।

सभ्यानां संस्कृतानां परिषदि वदतां न्यायधर्मानुरूपं
वक्तॄणां वादकाले वचसि समुचितं वर्जनं गर्जनानाम् ॥ ६ ॥

उपशमधिया वैराग्याप्त्यै यतेऽपि तु दुर्बलः
स्वनुभवगतान् रम्यान् भव्यान् सुधारसनिर्झरान् ।
प्रणयमधुरांस्तांस्तान् भावान् मृदून् हृदयंगमान्
स्मरणपथतो दूरीकर्तुं हठात् कथमुत्सहे ॥ ७ ॥

सुविशालमिदं विश्वमनन्तं सर्वतोमुखम् ।
न पश्यत्यण्डगः पक्षी स्वाण्डभेदं विना क्वचित् ॥ ८ ॥

पूर्वं जातोऽण्डरूपेण रुद्धदृष्टिर्न पश्यति ।
स्वाण्डावरणभेदेऽसौ द्विजातः पश्यति द्विजः ॥ ९ ॥

स्वाण्डं भित्त्वा बहिर्यातः शावको द्विज उच्यते ।
कोषान् भित्त्वा बहिर्यातः मुक्ताहंतो द्विजो भवेत् ॥ १० ॥

# उर्वश्याः प्रणयलेखः

वसन्तपाटील्

नाहं जाने किमिति हृदयं जायते कातरं मे
नाहं जाने मुहुरपि करात् स्रंसते लेखनी किम् ।
जाने चित्तं त्वयि मम सखे! बद्धगाढानुरागं
किञ्चिद् वक्तुं कथमपि बलादुत्सहेऽद्य क्षमस्व ॥ १ ॥

भाग्येन त्वं नयनसरणिं हेमकूटे हि यातो
मत्तीभूतं मम च हृदयं त्वत्सकृद्दर्शनेन ।
तस्मात् कालात् त्वदनुसरणं केवलं काङ्क्षितं मे
स्वर्लोकेऽहं, त्वमसि धरणौ हन्त! दुर्भाग्यमेतत् ॥ २ ॥

दिव्यानन्दे रमण रभसाज्जातमन्दादराहं
नैवेष्टा मे वसतिरधुना देवराजस्य हर्म्ये ।
गन्धाढ्यं मे मधुरसयुतं नाथ! सौन्दर्यपुष्पं
भक्त्या नम्रा चरणकमले तेऽहमद्यार्पयामि ॥ ३ ॥

कामोन्मत्ता मधुरपवने नन्दनेऽहं चरन्ती
त्वन्नामालिं धवलकुसुमैः शाद्वलेऽहं लिखामि ।
भग्नां वेगादनिललहरी पुष्पभक्तिं विधत्ते
तेनोद्विग्नं भवति हृदयं तत्कथं सान्त्वयामि ॥ ४ ॥

व्योमाभोगे विलसति पुरस्ते विशालं हि वक्षः
मेघध्वाने रसति च तव स्निग्धगम्भीरघोषम् ।
उत्पश्यामि प्रखरकिरणे प्रत्यहं धाम तेऽहं
मन्नेत्रे मन्मनसि गहने स्वप्नविश्वे त्वमेव ॥ ५ ॥

गृह्णासि त्वं मधुप! कुसुमं यन्मया दीयमानं
मन्ये नूनं सुभग! भविता जीवितं मे कृतार्थम् ।
स्वर्गारामे दयित! भुवि वा नास्म्यहं वस्तुकामा
तत्रैवावां कनकरुचिरे हेमकूटे वसेव ॥ ६ ॥

# पीतपर्णपतनम्

अ. वि. काणे

एकदा श्रमनिवारणहेतोर्निर्गतो निजगृहाद्बहिरेव ।
यातवान् स्थलमहं रमणीयं ग्रामतो निकटवर्ति यथोक्तम् ॥ १ ॥

यष्टिकां करधृतामवलम्ब्य प्राप्तवानिह शनैश्चर एकः ।
प्रायशोऽपि बहुवृद्धजनानां सा सखी प्रभवतीव सुयष्टिः ॥ २ ॥

अस्तगामिसवितुः कररागैर्भूतलं कनकभासुररम्यम् ।
चारुतामुपगता क्षितिजश्रीः सत्समागमफलश्रुतिरेषा ॥ ३ ॥

मन्दमन्दमधुरः पवमानः चित्तपावनकरो नुदतीव ।
शोभनाम्बरधृता शशिवक्त्रा शोभते नववधूरिव सन्ध्या ॥ ४ ॥

उद्गते दिनकरे दिनराजं ये स्तुवन्ति विहगा मधुगीतैः ।
पश्चिमे वयसि सत्यथ सूर्ये तेऽपि नीडकमुपाश्रितवन्तः ॥ ५ ॥

मन्दवातपरिचालितमेकं पीतपर्णमपतन्मम देहे ।
आपतन्नियतितः खलु कार्यं भीतिमेतदकरोन्मम बुद्धेः ॥ ६ ॥

पादपच्युतफलस्य निपातो न्यूटनं[1] क्षिपति चिन्तनचक्रे ।
अत्र चैकतरुपत्रनिपातश्चोदयत्यथ धियं सहजां मे ॥ ७ ॥

श्वेतवर्णकचभारवहा या प्राणसत्त्वहरणक्षमसेना ।
प्रेषिता गलितगात्रजरा सा किं यमेन करुणाविमुखेन ॥ ८ ॥

अन्तवन्त इति देहभृतां वै नश्वरा निगदिता ननु देहाः ।
अद्य वापि शतवर्षसमन्ते मानवः पतति चान्तकतुण्डे ॥ ९ ॥

कालचक्रगतिसंयुतविश्वे का कथाऽत्र बत दुर्बलजन्तोः ।
हृद्विदारकजरागतभीतिः सत्वरं ननु मया निहता सा ॥ १० ॥

यो मुकुन्दपदचिन्तनसक्तः कालतस्करकरात् स हि मुक्तः ।
आत्मबोधरसपानसुतुष्टः स्वागतं स कुरुते मरणस्य ॥ ११ ॥

---

1. Newton

## दैवगतिः

### य० महालिङ्गशास्त्री

वनभुवि विचरन्नामिषहेतोः
सज्यशरासः कोऽपि निषादः ।
किमपि शरव्यं नाप समन्तात्
दूरारूढेऽप्युष्णमयूखे ॥ १ ॥

अथ स निराशो निन्दन् दैवं
श्रमगलिताङ्गः क्षुत्तृष्णार्तः ।
परिगतगुल्मं विततच्छदभर-
माश्रयदारात्तरुतलमेकम् ॥ २ ॥

सोऽक्षिपदार्तो धिगिति शरासं
वन्ध्यनियोगमिषुं च बभञ्ज ।
शरधिमवाकिरदस्रंसयदथ
चर्मोपानद्गोधादीनि ॥ ३ ॥

घोरं जज्वलतुस्तन्नयने
प्रास्फुरदधिकं तस्य श्मश्रु ।
दन्तैरदशद् दृढमधरोष्ठं
रोषादपिषत् पाणिद्वन्द्वम् ॥ ४ ॥

हतवीर्यत्वादश्वसदधिकं
प्रावेपत गात्रैरपि निखिलैः ।
भिन्दन्निव दुर्दैवनिरोधं
भूताविष्ट इवाचेष्टत सः ॥ ५ ॥

एवं क्षुभ्यन्नप्रतिकार्ये
दैवबलेऽसावीर्ष्याविलुषः ।
श्रान्तं स्वं पुनरेवाक्लेशय-
दथवा पुरुषः प्रभविष्यति किम् ॥ ६ ॥

पतितः स तदा पलाशराशि-
व्यायासपरिश्लथनिखिलाङ्गः ।
हित्वा निद्रां हित्वा मोहं
करणविरामं कमपि जगाहे ॥ ७ ॥

अथ खगमिथुनं क्रीडासक्तं
सविधपलाशद्रुममुपयातम् ।
विटपनिषण्णं व्यपगतशङ्कं
मदकलकूजितमुखरं तस्थौ ॥ ८ ॥

उदियाय तदा जलधरपटलं
विद्युदनूत्थितनिर्घोषपटु ।
तस्य पपात प्रथमोदकणो
भिल्लस्याक्षिणि विमार्जन्नश्रु ॥ ९ ॥

जलदसमीरैः प्रत्याश्वस्तः
शकुनविरावैरपि चाहूतः ।
नापास्थत् संविमोहं केवल-
मोजस्सहजं तत् प्रतिपेदे ॥ १० ॥

गर्जति मेघे पतति पृषत्के
नृत्यति कस्मिंश्चिदपि मयूरे ।
सलिलनिषेकक्षुभ्यद्भुजगो-
द्गारिणि चोपान्तिकवल्मीके ॥ ११ ॥

अर्धोत्थित एवादत्त धनुः
कुञ्चितजानुरुदैक्षत लक्ष्यम् ।
मत्परिवादैश्चकितं दैवं
मामनुवर्तत इत्यभिनन्दन् ॥ १२ ॥

तस्य क्रूरव्यवसायवतो
दृष्ट्वा संभ्रममपि खगयुग्मम् ।
नाशकदुत्पतितुं वियदारात्
श्येनेनोद्भ्रमता प्रतिरुद्धम् ॥ १३ ॥

भूमौ वैरी कृष्टशरासो
व्योम्नि रिपुः खरनखरक्रूरः ।
शिव शिव कृपणं विहगद्वन्द्वं
कथमुत्तरतु द्विमुखं मृत्युम् ॥ १४ ॥

कूजितमवसन्नमभूच्चटुलं
पस्पन्दे न च पक्षचतुष्कम् ।
इतरेतरगात्रमिव प्रविशत्
तद् द्वन्द्वमवर्तत निस्तरलम् ॥ १५ ॥

अथ दृढमेकश्चकर्ष मौर्वी-
मन्यो ग्रीवां वितितान नतः ।
एकत्र शरो मर्मविदारी
नखरोऽन्यत्र च पातकठोरः ॥ १६ ॥

तत्क्षणमब्दो जगर्ज घोरं
बिभिदे येनान्तिकवल्मीकः ।
रुष्टस्तस्मान्निष्पतितोऽहिः
कृष्टशरासस्य ददंश भुजम् ॥ १७ ॥

दंशेन विकम्पितगात्रस्य
श्लथमुष्टेरुत्पतितो विशिखः ।
तस्य तु लक्ष्यमतीत्याविध्यत्
श्येनं प्रत्यासन्नं व्योम्नि ॥ १८ ॥

घननिर्घोषो ज्याटङ्कारः
   सर्पक्षोभः श्येननिपातः ।
प्रथमक्षण एवैतत् सर्वं
   पश्चाद्वनचरविषवेगार्तिः ॥ १९ ॥

अण्डजमिथुनं तदथ चिरेण
   स्पन्दितुमङ्गीचकार धैर्यम् ।
नाविश्वसदपि दैवं सहसा
   निजहेतोरनुकूलोद्योगम् ॥ २० ॥

पश्यत दैवस्य गतिं चित्रां
   व्याधमहन्नुपकर्तुमिवोत्थम् ।
खगमिथुनं तु निपात्यात्युग्रे
   जीवितविशये ररक्ष सद्यः ॥ २१ ॥

मेघविरावः क्षुब्धाशीविष-
   दंशो ज्याकर्षिणि भुजदण्डे ।
श्येने शरनिर्मोक्षः क्षण इति
   केन ग्रथितः सन्दर्भोऽयम् ॥ २२ ॥

अनुकूले सति दैवे नृणां
   विषमप्यमृतं रिपवः सुहृदः ।
शक्ष्यति मृत्युर्न च परिरब्धुं
   यत्नोपायादिकमस्तु न वा ॥ २३ ॥

यदि न तथा तत्कथमतिवाह्य-
   स्तस्य रयो नः पौरुषविधया ।
मशकगरुत्किं दावं शमयेत्
   किं प्रतिसर्पेत्तृणमभिपूरम् ॥ २४ ॥

वाञ्छति दैवं यदि ते दातुं
   दोग्धुस्तिष्ठति धेनुरिवाग्रे ।
नो चेद् वृष इव रुरुत्सतस्ते
   खुरपुटघातैः पिनष्टि दन्तान् ॥ २५ ॥

क्वचिदारम्भसुखं क्वचिदर्धे
   प्रियमुपदर्शयतीव विदूरात् ।
खलजनमैत्रीवान्ते दैवं
   प्रहरति मूले यदि विपरीतम् ॥ २६ ॥

उपहितकर्मविपाकानुभुवं
   दैवं नालं कोऽपि निरोद्धुम् ।
शुभमशुभं वा दैवायत्तं
   भणति महालिङ्गकविर्भवताम् ॥ २७ ॥

## कविर्बुभूषामि

रामकरणशर्मा

कविर्बुभूषामि न किन्तु भावाः
स्पृशन्ति भव्या हृदयं मदीयम् ।
न चेद् घनो वर्षति, किं करोतु
दीर्घोहदग्धस्तृषितस्तटाकः ॥ १ ॥

जयत्यहो सर्गकृतो विकारः
स्थूलोऽसमः, क्व प्रचलेन्निसर्गः ।
नो चेत् क्वचित् स्यादवकाशभावः
कथं चलेत् पुष्पमयं विमानम् ॥ २ ॥

महासमुद्रस्य तटे निषण्णा
पुनः पुना रोदिति काश्यपीयम् ।
पृथक्कृताहं प्रधनप्रियत्वात्
कठोरकाया मृदुजीवनेभ्यः ॥ ३ ॥

सहैव बुद्धिर्व्यथिता मदीया
बद्धा पुनः पार्थिवतन्तुजालैः ।
भावं परित्यज्य पदान्यभाव-
स्थलेषु धत्ते विचिकित्सितानि ॥ ४ ॥

ब्रवीतु किं वाग् यदि नास्ति भावो
गीतं कथं गायतु यन्न हर्षः ।
नो चेन्मषी नापि च तालपत्रं
कथं लिखेत् किञ्चन लेखनीयम् ॥ ५ ॥

न वेद्मि शेते क्व तु जीवनं मे
तथापि जीवामि विचित्रमेतत् ।
वृषौ गतौ क्वाप्यथवा शयाते
नयेन्नरः किं शकटं सभारम् ॥ ६ ॥

स्यां वा न वाहं कविभाववाही
तथापि जीयाच्चिरमेष भावः ।
नो चेत् पृथिव्यां, गगनावकाशे
पुष्यन्तु तत्रैव फलन्तु भावाः ॥ ७ ॥

## सङ्क्रान्तिमहः[1]

**वे. राघवः**

मेघान्धकारसलिलप्रलयप्रवात-
पङ्कोरुशीतहिममग्नजगद् दयातः ।
उद्धर्तुमुद्यतसहस्रकरैरुदेति
यः सूर्य 'उत्' सममुलूलुभि[2]रर्चितैनम् ॥ १ ॥

ऋतुषट्कमयारनेमि-काल-
त्रयनाभित्रितयैकचक्रचित्रः ।
अयनद्वयवेदिकासनाढ्यो
दधदेवं परिविर्शिवर्षरूपम् ॥

पुरुषार्थमये हि योक्तृदण्ड-
त्रितये योजितवेदवाजिराजी ।
रथ एष रवेः समेधमान-
च्छविरावर्तत उत्तरायणम् ॥ २-३ ॥ (युग्मकम्)

विलिख्य रथमण्डले रविममुं त्रिवेदीमयं
प्रचोदितधियो 'वरेणिय'तदीयभर्गोऽर्चकाः ।
अमुष्य विनिवेदिताग्रयणसस्यशाकोच्चयाः
द्विजातय उपासते मकरसङ्क्रमे भास्करम् ॥ ४ ॥

पूजावसानं प्रतिपालयन्तः
तत्तत्समृद्धान्नरसेऽप्यनुत्काः ।
परापतन्तीह गृहेषु बालाः
स्वस्वेक्षुखण्डप्रविभागहेतोः ॥ ५ ॥

---

1. मकरसङ्क्रमणोत्सवमधिकृत्य प्रवृत्ते आकाशवाणीसंस्कृतकार्यक्रमे मद्रकेन्द्रात् वाचिता एते श्लोकाः—वे. रा. ।

2. 'उत्' इति तस्यादित्यस्य नाम, तमुद्यन्तमनु उलूलुशब्दा उत्तिष्ठन्ति च इति छान्दोग्ये ।

कूष्माण्डपटोलशृङ्ग-
बेरहरिद्रेक्षुभारमाढ्यस्य ।
ग्रामे कर्षकजनता
बहुमानं प्रभुतोऽधिगच्छति प्रीत्या ॥ ६ ॥

अवकरमखिलं दग्ध्वा
जीर्णान्यपहाय तानि तानीह ।
स्रष्टुं नवमिव लोकं
जननी प्रतिगेहमुद्युङ्क्ते ॥ ७ ॥

चुल्ल्यां हरिद्रापरिवेष्टितेषु
नूत्नेषु भाण्डेषु निजौदनस्य ।
दृष्ट्वा परीवाह[1]मिमा गृहिण्यः
हृष्यन्ति लक्ष्मीर्भविताधिकेति ॥ ८ ॥

कृताप्लवानामभिपूजितानां
शृङ्गेषु कण्ठेषु च भूषितानाम् ।
प्रचारितानामिह गोधनानां
प्रवर्तते संप्रति चारुयात्रा[2] ॥ ९ ॥

लोकस्य यात्राऽऽयतते च येषु
ये कामधेनोरवतारभूताः ।
तेषां गवां पावनचित्रहुम्भा-
घण्टारवः स्त्यायत एष दिक्षु ॥ १० ॥

---

1. यमनुसृत्य द्राविड्यां पुण्यदिवसस्यास्य 'पोङ्गल्' इति नाम, 'पोङ्गलो पोङ्गल्' इत्युत्सवोचितः हर्षघोषश्च भवतः ।

2. एषा गवां पूजा यात्रा च सङ्क्रमणसमनन्तरदिने भवति ।

वारितीर इह दारिकाः स्त्रियः
पत्रखण्डकृतचित्रभक्ष्यकैः ।
वायसानुपचरन्ति यद् व्रतं
सोदरानुरतिसिद्धये मतम् [1] ॥ ११ ॥

प्रतायमानैर्दिवसैः समृद्धिः
प्रतायतां वो मकरायणेन ।
इनो य आत्मा जगतश्च तस्थुषः
स वो नवां जीवकलामुदीरयेत् ॥ १२ ॥[2]

---

1. 'कन्नु(न्नि)प्पुडि' इति समनन्तरदिनभावी अनुष्ठानविशेषः ।

2. द्वादशमासात्मकसंवत्सररूपित्वाद् द्वादशात्मनो भगवतः सूर्यस्य श्लोकाश्चेमे द्वादशसङ्ख्याकाः सन्दब्धाः ।

## ततो जयमुदीरयेत्

### अशोकः अकलूजकरः

गतं प्राध्यापकप्रवचन[1]वत् स्वदीर्घत्वेन विद्यार्थिनः पीडयद् एफ्-वाय्-बी-ए[2]परीक्षाया अन्तिमं दिनम् । अवसितं कथं कथमपि विद्यार्थिवसतिगृहस्य[3] भोजनालये लभ्यमानान्नवद् द्वितीयं महाविद्यालयीनं वर्षम् । विनिर्मुक्तं प्राप्तयशस्क-कविवन्मया गुरु लेखनकर्म । क्षिप्तं लब्ध-एम्-ए-पदवीकवद् गृहकोणे पुस्तकम् । समापितं विधानसभा[4]कार्ये समाप्ते मन्त्रिणेव निद्रापरिहार-व्रतम् । त्यक्तं सेवानिवृत्त-शासनाधिकारि[5]वद् अतिकषायपेय[6]पानम् । परिहृतं शासकैः संमानितेतिहासपण्डितवद् अधीतिशाला[7]प्रेम । आरब्धं च खादी-ग्रामोद्योग-व्यवस्थापक[8]वत् स्वच्छन्दचरणम् ॥

अथैकस्मिन् दिने सायं राजमार्गे स्वच्छन्दं चरद्भिरस्माभिः छात्रैर्दृष्टं मित्रमेकमस्माकम् । आस्म वयं सुविस्मृताध्ययनविचाराः, स्वमित्रैः सह विनोदैकभाषणाः, उच्चैर्विहस्य दत्तान्योन्यकरतालाः, हर्षोत्फुल्लनेत्राः, स्ववस्त्रैर्ल-ज्जितकुबेराश्च । स महाभागस्तावद् अस्फुटवचनो, मूर्धानं धुनानस्तिरस्कृत-केशसंस्कारः, पृथुललाटतटघटितभ्रुकुटिश्चिन्ताजागरितप्रताम्रनयनोऽर्धविवृतमुखो यत् सत्यं नवकविरिव व्यराजत । हिन्दीचित्रपटेषु नायिकायाः पिताप्येवं-विधायामवस्थायां न दृश्येत । विरहमनुभवन् संस्कृतनाटकस्य नायकोऽप्येवं कारुण्यपूर्णं दृश्यं न कुर्यात् । किन्तु, न युक्तं बन्धुव्यसनं विस्तरेणावेदयितुम् । दृष्ट एव तस्मिन् प्रचलितस्योपहासस्योपादानकारणं प्राध्यापकं पुरत आगच्छन्तं दृष्ट्वा संलपन्तो विद्यार्थिन इव गाम्भीर्यावृताः सञ्जाता वयम् । 'नन्वाकृति-

---

1. Lecture
2. F.Y.B.A—First year of the Three Year Integrated B.A. Degree course.
3. Hostel.
4. Assembly.
5. Government officer.
6. Tea.
7. Study room.
8. Manager.

विशेषेष्वादरः पदं करोति' इति 'अहो सर्वास्ववस्थासु कविता शोभान्तरं पुष्यति' इति, 'नासीत् परीक्षा निर्विघ्नाऽस्य कृते' इति, कदाचित् तेन परीक्षासमये 'प्रातिवेशिकसाहाय्यान्मा प्रमदः[1] इत्ययमुपदेशो व्यवहारं प्रापितः स्यात्' इति, जातुचित् तेन परीक्षालेखने 'महा[2]जनो येन गतः स पन्थाः' अनुसृतः स्यात् इति चावहन्नस्माकं तर्काः। अन्यथा कथमिव युक्ता भवेद् 'आकारैरेव चतुरास्तर्कयन्ति परेङ्गितम्' इत्याकारा जयदेवोक्तिः। समीपे च प्राप्तेऽस्माकं तत्तादृशे मित्रे युगपदेव पतिताऽस्माकं सर्वेषां पृच्छा—'अयि शरच्चन्द्र, सञ्जाता किं कापि दुर्घटना परीक्षायां येनैतां स्थितिं गतोऽसि?' इति ॥

दुर्दैवमस्माकम्। शीघ्रकविरासीत् शरच्चन्द्रः। स नवकविः सत्वरमभाषत—

समयेऽस्मिन्नास्मान् समये यदा
 चीनदेशीयेनाच्छादितो वस्त्रेण भारतीयः,
पारिसनगरे कलहं कृतवन्तश्चत्वारः खल्वाटाः,
 काङ्गोमध्ये लुमुम्बा-लुलुम्बा-लुलुम्बाः,

तदा
तदा
अरे त्यज नामापि परीक्षादुर्घटनायाः।
अरे त्यज नामापि दुर्घटनायाः।

अथ वा—

अथवा-अस्मिन् देशे
नावशिष्टैकाऽपि दुर्घटना मत्कृते।
निष्कारणवधकारिणामत्र वैपुल्यम्
सम्पज्जनितवैराणामत्र बाहुल्यम्।

---

1. Love thy neighbour.
2. Scholar.

मद्यपानपराणामत्र बाहुमर्त्यम्[1] ।

अथ वा—

अथवा - कथं सम्भवेदत्र दुर्घटना ।
भार्याद्वयं नानुमन्यते ।
मद्यमपि न पीयते ।
[2]सुदायोऽपि प्रतिबध्यते ।

पुनश्च—

पुनश्च- कस्य सम्भवेद्दुर्घटना ?
मम ?
अरे हट् । अरे छट् ।[3]
उत्पाटयामि नाम चन्द्रस्थितहरिणकर्णम् ।
कपोले सन्ताडयामि खलु गर्वोन्नतं सूर्यम् ।
कम्पयामि ननु निखिल-विश्व-कोषम्[4] ।
अरे.... ... ...

अस्मदन्तभयेन तस्य काव्यस्यान्तमपेक्षमाणा वयं कथं कथमपि तं मूकीकृतवन्तः । अनन्तरमहं धाष्टर्यमकरवम्—"हे पण्डितराजराजितिलक! यद्येवं लोकोत्तरं कर्तुं पारयसि तर्हि किमित्यप्रकटितनिर्णयश्छात्र इव विषण्णो दृश्यसे । प्रसीद । 'गद्यं कवीनां निकषं वदन्ति' । गद्यमेवाश्रित्य कुरु पामरान् इमान् ज्ञातवृत्तान्तान् । नवकवयो यूयम् । आर्तत्राणाय वः पद्यम् न प्रहर्तुमनागसि । प्रसीद ।"

मम स्कन्धे स्नेहजडं हस्तं निवेश्य पीतमद्यस्य स्वरेण कविराजः प्राह—"सखे अशोक! मन्दबुद्धिरसि । मृत्पिण्डबुद्धिरसि । विफलं ते कालिदास-

---

1. Majority.
2. Dowry.
3. मराठीभाषागतौ निषेधपरौ निपातावेतौ ।
4. Cosmos.

सदृशानामनवानां (अत एव) क्षुद्रकवीनां प्रणयनम् । निष्फलं ते मीमांसाया ज्ञानम् । अफलं ते तर्कस्याध्ययनम् । एतावदपि नैव जानासि यत् कन्दुकीकृतविश्वकोषस्याप्यस्ति ममैकं मर्मस्थानम् । नाहं समर्थो ज्ञातुं शासकैः परिचायितानां शैक्षणिकप्रयोगाणां लाभम् । नैव योग्यः समाकलयितुं विद्यापीठस्य शिक्षानियमावलिम्[1] । अथ वा—

शिक्षाक्षेत्रे प्रयोगा ये नियमास्तत्र ये कृताः ।
फलन्ति काकतालीयं तेभ्यः सर्वेऽपि बिभ्यति ॥

विद्यापीठनियुक्तस्य ग्रन्थस्य नियमस्य वा ।
कर्तारः[2] सुलभा लोके विज्ञातारस्तु दुर्लभाः ॥

परं गच्छन्तु दहनं शैक्षणिकाः प्रयोगाः । ज्ञातव्या एव भवन्ति एफ्-वाय्-बी-ए-परीक्षाया अनन्तरं प्रधानविषया[3]दीनां निर्णये समुपकारका नियमाः । किन्तु अप्रमत्तसञ्चरणीयानि श्रूयन्ते शिक्षानियमपुस्तकानि । कथं ज्ञातुं कल्पे तान् नियमान् । कथङ्कारं निर्णेष्यामि स्वान् अध्येयान् । व्याकुलीभूतं मे चित्तम् । चिन्ताजडं दर्शनम् । निराशाजडं मे हृदयम् । अन्धकारितं मे स्वान्तम् । दुःखकलुषं मानसम् । आत्मन्यप्रत्ययं चेतः ।”

‘अधुना गद्यमयः कल्पनाविलासोऽत्र माऽवतरतु’ इति कृत्वा मया झटिति शरच्चन्द्रस्य हस्तात् शिक्षानियमपुस्तकमाकृष्य स्वकीयं कृतम् । महता ज्ञानकौशलेन च विद्यापीठकृता नियमाः सहाध्यायिनां बुद्धिं नीताः । इदानीं नासीन्नियमगतः संशयलेशोऽपि तेषां मनसि । पाकिस्थान-क्रिकेट[4]-

1. Syllabus.

2. विद्यापीठनियुक्तस्य ग्रन्थस्य कर्तारः—those who edit Samkrit plays prescribed by the University as texts.

3. Principal subject.

4. लोकप्रियः क्रीडाविशेषः ।

सङ्घीयाः कन्दुकताडनकाले,[1] हनीफे क्रीडकागारं[2] प्रतिनिवृत्ते, यथा त्वरया तमनुसरन्ति तथैव त्वरया तैर्नियमज्ञानविषये ममानुसरणं कृतम् । निर्वाचने[3] प्राप्तपराभवा मन्त्रिणो येनोत्साहेन जयप्रकाश-नारायणं पुरस्कृत्य भूदानकार्यं प्रतिपद्यन्ते तेनैवोत्साहेन तैर्मत्कार्यजातं नियमार्थं प्रति साधितम् । 'विद्यालयसुन्दरी[4] ह्यो मामभाषत' इति कथयन् महाविद्यालयीनो विद्यार्थी येनानन्देन पूर्यते तेनैवानन्देन सर्वे पूर्णा अदृश्यन्त ते । को हि नाम भगवता सन्दिष्टं विकल्पयति ।

स आसीन्नववादनावसरः । प्रथमत एव विश्रान्तिगृहं[5] प्रविशतेव मया सभयं समाक्रान्ता गृहदेहली । सत्वरं दूरीकृतमुत्तरीयम् । प्रक्षालितं हस्तपादम् । आर्द्रीकृतं नयनयुगलम् । साधितं च सायंवन्दनार्थं देवगृहं प्रति । नीराजनाविधिनिरता (इव) अदृश्यन्त पितृचरणाः । श्रीरामपञ्चायतने दत्तदृष्टिभिरेव मां पञ्चत्वं प्रापयितुमुद्यतैरिव तैर्विद्युन्निनादायितम्—"कुत्र घ्रातं कच्चरमायुष्मताऽद्य । बहिर्गमनं यथासमयं भवति । प्रत्यागमनं तु मृतप्राये पितरि ।" वेपथुश्च शरीरे मे समजायत । रसना शुष्कतां गता । फालप्रदेशश्च स्वेदबिन्दुभिरङ्कुरितोऽभूत् । 'इदं हि पितृवचनं मां प्रति, न तु प्राणनाद्यनेकक्रिया-कुशलमायुष्मन्तं परमेश्वरं प्रति' इति कथं कथमपि समाहितं मया मनः । 'यदि तातचरणा विलम्बदोषं स्वीकृत्य मया कियन्महत् कार्यमनुष्ठितमिति जानीयुस्तर्हि नैवं, यथा ज्ञात-स्व-यातु[6]रहस्य ऐन्द्रजालिकः कुप्यति तथा कुप्येयुः' इति शतशश्चिन्तितम् । 'देशान्तरगमन-प्रत्यागमन-विषये भवतु नाम स्वातन्त्र्यं भारतीयस्य वित्तस्य, न मया तदनुकरणीयम्' इति च लक्षवारं चेतसि जल्पितम् । अवनामितं शिरः । आश्रितश्च तूष्णीम्भावः । अनेन मम

---

1. While batting.
2. Pavilion.
3. Election.
4. College Queen.
5. Hotel.
6. Magic; trick.

मर्यादापुरुषोत्तमानुकरणं न तस्यैव नीराजनामनुतिष्ठतामपि प्राज्वलत् कोपस्तातपादानाम्—"किं रे कुलदीपक! किं श्मशानमुपगतं ते प्रतिवचनसामर्थ्यम्। कुत्र गता सम्प्रति सा ते चुरचुरायमाणा जिह्वा। पुरुषोऽसि। नो नारी। न दिवं गतः कोऽप्यद्यास्माकं गृहे।" एतावता साप्तपदीनेनैव सङ्गतेन मृतप्राय आसम्। परं नालीकं कर्तव्यं स्वेन दिवङ्गतत्वेन पितुर्वचनमिति नाहं गतो मृतप्रायत्वं विहाय मृतत्वम्। सधैर्यं च कङ्कवदनेनेव मुखमुद्घाटितवान्—"तात! आगामिनि संवत्सरेऽध्येतव्या विषयाः कथं निर्णेया इति विमर्शे व्यापृत आसं मित्रैः साकम्। तेन.... ...."

"अरे किं लज्जा विद्यते वा न वा ते? न लज्जसे स्वल्पमपि गुरुवचनं प्रतिवचनेन दमयन्। वर्णमपि मोद्गिरेदानीम्। अपि विनष्टं ते चक्षुर्यन्न पश्यसि मां नीराजनानिरतम्"।

पुनरपि मया धारितं निःशब्दत्वम्।

अथ समारब्धाऽस्माकं गृहे मया को विषयः सविशेषमध्येय इति विषयस्य चर्चा।

"स्वीकुरुष्व त्वं गणितशास्त्रं बी-ए-पदवी-प्रापणार्थम्" इति पितृचरणाः परदेशादागत इत्यनुत्तीर्णप्रशालान्त[1]परीक्षोऽपि यथा गर्जति तथा समगर्जयन्।

'किन्तु तात, गते वर्षद्वये न तन्मेऽध्ययनस्य विषयः। प्रशालान्तपरीक्षायामपि केवलं गुणानां विंशतिद्वयमेव प्राप्तं मया तस्मिन्।"

"तेन किम्। अस्माकं वरिष्ठकायस्थ[2]स्य पुत्र एवात्रोदाहरणम्। स तावद् द्विवारं प्रशालान्तपरीक्षायां गणितशास्त्रेऽनुत्तीर्णः। बी-ए-

1. Metriculation Examination; Secondary School Certificate Examination.

2. Head clerk.

परीक्षायामपि वारं वारं लोकमान्या[1]नुकरणं कृतवान् । लोकेऽपि, 'जातु-चिद्रूसदेशे कारायां निक्षिप्तो जनस्ततो विमुक्तिं लभेत, परं नायं गणितपरीक्षायाः' इति किंवदन्ती वहति स्म । परं तत्पिता संस्कृत-नाटक-नायकापेक्षयापि धीरोदात्त आसीत् । स यत्नानां खनिमुद्घाटि-तवान् । तेन [2]मुखपिण्डार्थं व्ययीकृतेन वित्तेन प्रथमा पञ्चवार्षिकी योजनापि सफलतां प्राप्नुयात् । परीक्षक[3]-निवासं मृगयितुं तेन कृतेन भ्रमणेन यस्याः कस्या अप्येकेन नेत्रेण तिरस्कृतान्यनेत्राया[4] अपि कन्याया विवाहः सम्पद्येत । तस्य हृदये याऽऽशा स्फुरति स्म तया विरहिणीसहस्राणा-मपि हृदयानि वर्षशतपर्यन्तमपि सद्यःपातीनि न भवेयुः । अन्ते तावत् पक्वं तस्य पौरुषस्य फलम् । कस्यापि परीक्षकस्य कृपापात्रं भूत्वा सञ्जातो मननतरितीर्णविद्यार्णवस्तत्पुत्रः । पितापि कृतकृत्यमात्मानं मन्यमानः सेवातो निवृत्तिं स्वीकृतवान् । वर्षद्वय एवास्माकमेव कार्यविभागे[5] निजं पुत्रमात्मीयमेव स्थानमलङ्कुर्वाणं दृष्टवान् । क्लेशः फलेन हि पुनर्नवतां विधत्ते । अधुना द्वितीयस्यापि पुत्रस्य गणित एवोत्तीर्णतां सम्पादयितुं बद्धपरिकरोऽस्माकं वरिष्ठकायस्थः । कच्चिदेतच्छ्रुतं पुत्र त्वयैकाग्रेण चेतसा । कच्चिदज्ञानसंमोहः प्रनष्टस्ते महाधनः । वत्साशोक, यावदयं संसारस्तावत् प्रसिद्धैवेयं लोकयात्रा यत् पुत्रैः पितरः क्षेत्रद्वयेऽप्यनुवर्तनीयाः, विषये च व्यवसाये[6] च । गणितं नाम मुकुटमणिर्व्यवसायदायिनीनां विद्यानाम् । अलङ्करणं लिपिकारस्य[7] । प्रतिष्ठितिस्तम्भोऽस्मत्कुलयशःपताकानाम् । लीलालयः सङ्ख्यादेव्याः । निष्पत्तिस्थानमशेषशास्त्राणाम् । निलयोऽङ्कजालस्य । संस्थानधरणिः सङ्ख्या-

---

1. शरीर-बलवत्ता-सम्पादनार्थं लोकमान्येन तिलकमहोदयेन वर्षं यावत् सर्वथा पुस्तकत्यागः कृत इति तच्चरित्रकर्तारः ।
2. As bribery.
3. Examiner.
4. एकेन नेत्रेण तिरस्कृतान्यनेत्रा=cross-eyed.
5. Department.
6. Vocation; job; service.
7. Clerk.

शास्त्रस्य[1] । प्रभवो मित-व्ययीकरण-कौशलस्य । अवलम्बनं कुटुम्बस्य । आकरोऽवकडादीनाम् । विहारभूमिश्च श्रेष्ठकायस्थानाम्" ॥

"परं तात, न रोचते मह्यं गणितशास्त्रम् ।"

"किमर्थं न रोचते ? यत्ने कृते सर्वमपि रोचते । बाल्ये न कदाचिदपि स्पृष्टा मयाऽपूपाः । तैले स्नातेषु तेषु नित्यमेव धृता घृणा मया । परमेकस्मिन् दिने मात्रा बलात्कारेणापूपैर्मम मुखं पूरितम् । साम्प्रतम् एकैकस्मिन् रविवासरे तानेव सरसास्वादमास्वादयामि ।"

"नार्हति तातो महोक्षधारितायां धुरि दम्यं नियोजयितुम् । एतेषु दिवसेषु एकैकोऽपि पिता पुत्रसंमत्यैव तेन यं कमपि विषयं ग्राहयति । यद्धि पुत्राय रोचते तद्धि क्रियते । न किमप्ययोग्यमुक्तमशोकेन ।"—ज्येष्ठो भ्राता ॥

"मा मामुपदिश । सम्यग् जानामि किं योग्यम्, किं चायोग्यम्, किं साम्प्रतम् किं चासाम्प्रतम् । नास्ति मम बुद्धिर्गता शाद्वलान् प्रति तृणभक्षणार्थम् । नाद्यापि प्राप्तो मम भाग्येन त्वत्तो विवेकग्रहणस्य समयः । अन्यच्च, नाहं गतानुगतिकः । यदपरे मृत्पिण्डबुद्धयोऽनुतिष्ठन्ति तत् त एवानुतिष्ठन्तु । अहं कथयामि—गणितमेवानेन स्वीकार्यम् ।"

मासं यावत् सञ्जाता महती चर्चा । गणितशास्त्रं प्रधानविषयत्वेन ग्राह्यमिति पितृचरणाः । अर्थशास्त्र[2]मिति ज्येष्ठायाः स्वसुः पतिराजस्य चिरकालदृष्टं मित्रम् । आङ्ग्लभाषेति ज्यायस्याः स्वसुर्देवरस्य पितृव्यस्य पुत्रः । मराठीति मातुलस्य द्वितीयः श्वशुरः । मानसशास्त्र[3]मिति

1. Statistics.
2. Economics.
3. Psychology.

प्रातिवेशिकस्य कन्यां द्रष्टुमागतो वरः। मम विषयं विहायान्यो यः कोऽपीति प्राध्यापकाः। तत्त्वज्ञान[1]मिति च मार्गगतो दैवज्ञः॥

मया माहाराष्ट्री सविशेषमध्येतव्येति प्रथममाह मे माता। परं नैवेदानीं तादृशाश्चक्रवाकाः। पित्रा तामुद्दिश्य 'अहो मुग्धत्वमबलानां नाम' इति प्रस्तूय बहु बहु कडकडायितम्। तेन तस्या जिह्वा विरतव्यापाराऽभवत्। भर्तृस्नेहात् सा हि दग्धा। मां च 'गणितमेव त्वमधीष्व' इति विज्ञापितवती। अहह! प्रतिपक्षेणापि पतिं सेवन्ते भर्तृवत्सलाः साध्व्यः।

अत्रान्तरे मह्यं को विषयो रोचत इत्येव मया विस्मृतम्। अशोककुमारेण सह यावत्यो नट्योऽद्ययावच्चित्रपटे जनैरदृश्यन्त तावत्य एव भाषा मयाऽशोकेन प्रधानविषयत्वेन स्वीकृताः। सुनिश्चितमासीन्मे विश्वनाथवदष्टादश-भाषा-वार-विलासिनी-भुजङ्गत्वम्। परं हा! हन्त! विधिरुच्छृङ्खलः। अस्माकं विद्यापीठे द्वादशानामेव भाषाणामध्यापनं प्रचलति॥

त्रस्तं विना हि विषयादुरुविक्रमस्य चेतो विवेकपरिमन्थरतां प्रयाति। प्रधानविषयनिर्णयाभावान्ममापि मनः सङ्कल्पविकल्पात्मकमभवत्। "यदि गणित-शास्त्र आत्मानं पातयिष्यामि तर्हि हिन्दीचित्रपटनिर्मातारो[2] दिलीपकुमारस्येव सर्वे लिपिकरा मम चरणकमलयोर्यष्टिपातं पतिष्यन्ति। किन्तु, यद्यर्थशास्त्रं नाङ्गीकरिष्यामि तर्हि कस्यापि सपुष्पनयनैव (प्राचीन-महाकवि-मते तु कमल-नयनैव) कन्या मम गृहिणीपदं भूषयेत्। परं नास्त्यर्थशास्त्रस्य राज्यशास्त्र[3]-च्छायामप्यवस्कन्दितुं शक्तिः। अथ वा तिष्ठतु राज्यशास्त्रमाहात्म्यम्। आङ्ग्लभाषास्वीकरणेन यत्र कुत्रापि नगरकोणे स्वविद्यालयं[4] प्रचालयन्

1. Philosophy.
2. Film producers.
3. Politics.
4. Classes.

न्यूनातिन्यूनं प्रतिमासं रूप्यकसहस्रमधिगमिष्यामि ।—" इति चिन्तयित्वा, अगण्यान्याप्तवाक्यानि श्रुत्वा, तैः कथितान् गणितादि-विषय-स्वीकार-लाभान् स्मृत्वा च मम मानसं हालिवुड्-नगरं पश्यतः सनातनधर्मीयस्य मानसस्य तुलामध्यारूढम् ॥

एकदा भोजनसमये 'सूपं मे परिवेषय' इति वक्तुकामोऽहं 'मातः! गणितं मे परिवेषय' इत्यवदम् । स्नानकाले च गङ्गाष्टकं पठतो मे शोकः श्लोकत्वमागतः "गाङ्गं वारि मनोहारि मुरारिचरणच्युतम् । त्रिपुरारि-शिरश्चारि पापहारि पुनातु माम् ॥" इति पठितुकामश्च "अर्थशास्त्रं मनोहारि माल्थसस्य पदाच्च्युतम् । मोरारजीशिरश्चारि वित्तदायि पुनातु माम् ॥" इत्यपठम् । कमपि वृत्तपत्रसम्पादकं च 'किमिति भवता मे लेखनं न पठ्यते' इति प्रष्टुकामः 'किमिति भवता राज्यशास्त्रं न पठ्यते' इत्यपृच्छम् । तत्सेवकेन च कार्यालयान्निःसारितो विषण्णः सन् 'उन्मत्ता एवैते सम्पादकाः' इति ध्यायन् गृहं प्राप्तः ॥

एकस्मिन् दिने मराठी मराठीत्युच्चैर्जपन्नहं स्वप्नादवबोधमवाप्तवान् । मात्रा च दुर्बोधातिदुर्बोधेन पाठ्यपुस्तकेन वीजितः पुनरपि निद्रां गतः । अन्यस्मिन् दिवसे हिन्दी हिन्दीति गर्जन् मम समीपे सुप्तस्य भ्रातुरुरःस्थलमधिष्ठितवान् । परं स्वल्पकाल एव भित्तिगतं राजगोपालाचार्याणां छायाचित्रं पश्यन् सुगाढां सुषुप्तिं प्राप्तः । परस्मिन्नहनि रसायन[1]शास्त्रं रसायनशास्त्रमित्युच्चैर्भाषमाणो निद्रित एव महानसं प्रस्थितः । किन्तु विज्ञान[2]मध्यापयता प्राध्यापकप्राघूर्णिकेन 'त्वं वाङ्मयशाखा[3]यामधीषे । तस्मान्नार्हसि रसायनशास्त्रं प्राधान्येनाध्येतुम्' इति प्रकृतिं प्रापितः ।

एवं स्थिते कनीयोभ्यामपि भ्रातृभ्यामारब्ध उपदेशः । मया [4]भूगोले प्रावीण्यं सम्पादनीयमिति बुद्धिदानं माधवः कृतवान् । 'त्वमितिहासपाण्डि-

1. Chemistry.
2. Physics.
3. Arts Side.
4. Geography.

स्वार्थमेव यतस्व' इति शङ्करः स्वीयं विवेकित्वं प्रदर्शितवान् । तेन च मम भ्रान्ते मनसि कलहसमये नारद इव क्रोधः समुद्भूतः । स चावयवव्यायामे परिणतः । साक्षिमान् न्यासो निर्यातयितव्य इति च कृत्वा मया शङ्करे पश्यति माधव आचूलमूलं ताडितः, माधवे च पश्यति शङ्करस्य कपोलो दत्तपञ्चाङ्गुलीको विहितः । प्रस्थानं च कृतं सायं मनोविनोदनार्थं गृहाद् बहिः । आहिण्डमानस्य चक्षुः प्रथममाकृष्टं सहाध्यायिना मधुकरेण । द्रुतं गत्वा स मयोपरुद्धः । विनाऽन्यसम्भाषणं पृष्टश्च—

"को विषयस्त्वया प्रधानत्वेन निर्णीतः ।"

"हिन्दी ।"

"वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती । जनकजनन्यादीनां मध्ये कस्य मतमनुकरोमीति नैव प्रतिभाति मे । कदाचिद् 'यू. एन्. ओ'-मध्ये रूस-अमेरिकादेशयोरैकमत्यं दृष्टिपथं प्राप्नुयात्, जातुचित् संस्कृतपण्डितः सभायां नियतकालमेव संलपेत्, दैवेच्छया कश्चन संस्कृत-व्याख्या-प्रणेता महाकवि-काव्य-व्याख्याने कवेरयं दोष एवेति विना तत्समर्थनं लिखेत्, परं नैव प्राप्नुयान्मे मतिर्विशिष्टविषयनिर्णयम् । यदि ब्रह्मा मत्पुरत आविर्भविष्यति तर्हि वदामि—'हे ब्रह्मन्, महाराष्ट्रे मद्यनिर्बन्धप्रयोगः सर्वथा सिद्धिं गत इति सडिण्डिमनिनादं ख्यापयिष्यामि । वक्तारं यथाकथमपि भाषितवन्तमुद्दिश्य सभाया यदलीकं कार्तज्ञं तदपि मधुरतमां वाणीमाश्रित्य वर्णयिष्यामि । संस्कृतकविकालनिर्णयप्रवचने प्रचलिते जाग्रदवस्थां स्थिरां रचयिष्यामि । परं कृपां कुरुष्व । मा पुनर्ममोपरि पातयैवंविधं प्रसङ्गम् । मा क्षिपेमं ते भक्तजनमेतादृशे व्यसनव्यामोहे ॥'"

"सखे अशोक ! कृतं मनःसन्तापेन । आपतितं कार्यमेवास्माभिः । निर्णेय एव कोऽपि विषयः । पाषाणादपि पीयूषं स्यन्दते यस्य लीलया, स शरच्चन्द्रोऽपि नैवालं भवेद् विद्यापीठनियामकानां हृदयपरिवर्तनाय । किं निर्वाचने पराभूतो जनानामसंमत इति भूतपूर्वो मन्त्री राज्यपाल[1]पदे न

1. Governor.

स्थाप्यते । किं नागरिकाणां[1] वित्तं व्यर्थं व्ययीभविष्यतीति महापौरस्य[2] कृते नूतनस्तैलरथो[3] नैव क्रीयते । किं वा धनलुब्ध आभियान्त्रिकः[4] प्रजाभिर्गर्ह्यत इति तटबन्धन[5]-कार्याद् दूरीक्रियते । व्यर्थमस्माकं शोकाश्रयणम् । अनर्थकमस्माकं विद्यापीठाय दूषणदानम् । अपार्थकमस्माकं शिक्षानियम-सुबोधीकरणकल्पनम् । यदि केशधवलत्वं न वाञ्छ्यते, यदि च चिन्ता-जागरित-प्रताम्र-नयनत्वं न काम्यते, यदि वा कनक-वलय-भ्रंश-रिक्तप्रकोष्ठत्वं न काङ्क्ष्यते, तर्हि नास्माभिरवधारणीयं प्रधानविषयेण सहोपविषयः[6] सङ्गच्छते न वेति, न वाऽस्माभिर्मनसि कर्तव्यं तस्य विषयस्य व्यावहारिकं मूल्यम्[7] । शब्दैकप्रामाण्यवादिभिरेते शिक्षानियमा दुर्बोधा अपि श्रोतव्या मन्तव्या निदिध्यासितव्याः । तद्वर्जं सर्वे विचाराः परित्याज्याः । आप्तोपदेशाद्धेतव्यम् । उपविषयविमर्शनं वर्जितव्यम् । कियन्तो विद्यार्थिन एतद्विषयानुसारिण इति न प्रष्टव्यम् । प्रथमतो नेत्रनिमीलनम् । अनन्तरं क्षणेनैव नेत्रोन्मीलनम् । अत्रान्तरे येन विषयेण चित्ते पदं कृतं तस्यैव विनान्यविचारं प्रधानविषयत्वेन स्वीकरणम् । तदनन्तरं च शिक्षानियमावलौ स्वस्य प्रधानविषयस्य पुरतो यः कोऽपि विषयः प्रथमस्थाने स्यात् तस्यैवोपविषयत्वेनाङ्गीकरणम्—इत्येव परोपनिषद् द्वितीयवर्षपरीक्षायाः पश्चात् । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । मित्रोत्तम ! गच्छ । शिक्षानियमावलिस्थ-शब्दप्रधानानि महापुरुषहृदयानि भवन्ति । गच्छ । अयमनुभूत-समानदुःखस्तव सहाध्यायी त्वां समाज्ञापयति । गच्छ । सत्वरं गृहं प्रति साधय । प्रविष्टमात्र एवोपनिषदः साहाय्येन निश्चितं स्वीयं प्रधानविषयं संदेशपत्रे[8] लिख । भारमापनयन्त्र[9]मुखमिव शिक्षानियमावलिं

1. Citizen.
2. Mayor.
3. Motor car.
4. Engineer
5. Dam-construction.
6. Subsidiary subject.
7. Its value as a means to livelihood.
8. Post-card.
9. Weighing machine.

प्रेक्ष्य स्व-भार-परिमाणमिवात्मीयमुपविषयमवाप्नुहि । संदेशपत्रे तस्यापि नाम स्थापय । प्रहिणु च तत्पत्रं महाविद्यालयम् । अपसर । मित्रवर्य ! आशु दूरमपसर । त्वं ब्रह्मचर्याश्रमवासीति श्रूयते । न परुषमाश्रमवासिषु प्रयोज्यम् । किन्तु, स इदानीं स्निग्धो जनो यः पृष्टः परुषमपि हितं भणति । तूर्णं गृहमार्गं स्वीकुरु । मा ते वचनं पुनः पुनर्जनयतु मे शिरोवेदनाम् । मा ते वदनं सुधाकरमनोहरं गर्दभतु श्रुतिपरुषं व्यक्तं निनदन्मादृशानां पुरतः ॥"

अचिरेणैव पिण्डीकृतधैर्येण मया गृहं प्रविष्टम् । विकट-कीनाश-तोरण-त्रिशूलायमान-भीषण-भ्रुकुटिना यद्यद् वस्तु हस्तगतं सञ्जातं तत्तद् दूरदूरमुत्क्षिप्तम् । ताण्डवचण्ड-खण्डपरशुनेव पादाघातेन धरणी विदारिता । अस्फुटवर्णान् समुद्गिरता नागदन्तेऽवलम्बितं सकलं वस्त्रजातं सपद्याकृष्य भूमौ व्याकीर्णम् । विस्मयवशान् भयग्रस्तान् संमिलितान् आप्तजनान् उद्दिश्य सावहेलनं हस्तं क्षिपता काष्ठासनं[1] दूरमुत्क्षिप्य सकर्णकटुनिनादं पातितम् । भ्रष्टकेशरचनेन बृहद् द्वारं सकर्कशस्वनं पिहितमपावृतम् । क्रोधारुणनेत्रेणानुजयोर्मुखं पृष्ठं च सामर्षप्रकर्षं यथेष्टं सापशब्दं ताडितम् । उच्चैरुच्चैस्तरं सकण्ठीरव-कण्ठरवं जगतीतलं श्रावितं च—

"संस्कृतं संस्कृतमेवाधीये । संस्कृतमेवाधीये ।"

अत उत्तरमपशब्दप्रवीणानामपि मे पितृचरणानां मुखादेकमप्यक्षरं न निःसृतम् ॥

1. Wooden chair.

## समासोक्तिचमत्कृतिः (लोककथा)

गणपति शुक्लः

निवसति स्म एकस्मिन् ग्रामे कश्चित् गोपालसिंहो नाम जल्पाकः। आसीत् स निष्क्रियः अलसः निर्धनश्च । पत्न्येवास्य श्रमवृत्त्या स्वपुत्रस्य स्वामिनश्च उदरपोषणमकरोत् ॥

परिवारस्य कल्याणमिच्छन्ती तत्पत्नी एकदा गोपालसिंहमब्रवीत् "इदं युगम् अर्थस्य युगं भवति; अस्माकं चार्थिकी स्थितिः अतीव क्षीणा; अनेन सामाजिकी प्रतिष्ठापि नोपलभ्यते ॥

मम पत्नी मामेवोपदिशति इति रोषात् तथा चार्थिककलह-कारणात् गोपालः गृहान्निर्गत्य अन्यदेशसेनाविभागे सैनिकोऽभवत् । तत्र स्वसेवाकार्यं सुष्ठु सम्पादयितुमारेभे । किन्तु

पत्नीपुत्रगृहग्रामान् स सुखं शीघ्रमत्यजत् ।<br>
तथापि जल्पनत्यागं गोपालः कृतवान् न हि ॥

इत्थमेकदा स्वमित्रभूतान् सैनिकान् गोपाल उवाच—"अहमस्मि राजा, मद्राज्ये राज्ञी मन्त्रिणः प्रजाश्च वर्तन्ते" ॥

एवं ब्रुवन्तं गोपालं सैनिकाः वाचालं ज्ञात्वा अल्पज्ञमेव प्रथमम् अमन्यन्त। वार्तालापप्रसङ्गे कैश्चित्सैनिकैः पृष्टम् "यदि भवान् राजा तर्हि कुतः दासवृत्तिः स्वीक्रियते।" अस्योत्तरत्वेन गोपालसिंहः शान्तमुद्रया आत्मकथां श्रावयामास ॥

"अहमेकदा स्वगौरवं प्रदर्शयन् स्वल्पकृतापराधं सैनिकमताडयम्, तस्मिन्नेव क्षणे जातदया मम पत्नी मां निवारयन्ती अब्रवीत्—

'निर्दयतया कथं ताड्यते? सर्वे मानवाः समानाः । गुणदोषात्मिका सृष्टिः। भवन्तोऽपि यदि सैनिका भवेयुः तर्हि किं स्यात्?'।

मयोक्तम् —

'सैनिककार्यं योग्यरीत्या सम्पादयिष्यामि; किमहं नास्मि योग्यः?'

नः पत्नी उवाच—

'तर्हि किं न सम्पाद्यते? वाक्कथनेन किं लगति?' एवं रोषमयं पत्नीवचनं श्रुत्वा मच्छरीरे रक्तधावनमारब्धम् । अतो मया कथितम्—'अहं तु गमिष्यामि, किन्तु पिष्टसूपयोर्मूल्यं त्वं ज्ञास्यसीति न विस्मरणीयम्' ॥

पत्नी अपि सद्य एव उवाच—'नाहं न्यूना । सुयोग्यशासनं संचालयिष्यामि । एवं महाविवादानन्तरं प्रादुर्भूतरोषतया गृहं परित्यज्य समागतोऽहं भवन्मध्ये' ॥

इत्थम् गोपालसिंहस्य आत्मकथाश्रवणप्रभाविताः सैनिकाः गोपालसिंहम् आदरदृष्टया अपश्यन् । अयमपि स्वप्रतिष्ठावृद्धये असत्यवार्तागोपनाय च अर्जितं वेतनमपि मित्राणां स्वल्पाहारादिकार्येषु व्ययीकरोति स्म । गृहं कुशलपत्रमेव प्रेषयामास । इत्थं व्यतीतं वर्षमेकम् । पतिं गृहमानेतुं विचिन्तयन्ती प्रबुद्धा तत्पत्नी एकं काव्यात्मकं प्रभावशालिपत्रं प्रेषितवती ॥

सैनिका अपि समागतं पत्रं पठित्वा दुःखितहृदयाः सन्तः गोपालसिंहं प्रति स्वसहृदयतां प्रदर्शितवन्तः । तथा च पत्रसहितं तं प्रधानसेनापति-समक्षम् अनयन् । तेनापि पत्रं पठितम्—

" प्रियमहाराजगोपालसिंहाः! सेवायां विलसन्तु प्रणिपातपरम्पराः । खेदावहेयं वार्ता यत् गृहयुद्धमत्र प्रारब्धम् । रक्षाधिकारी दण्डो विनष्टः, जलाधिकारिणः कलशस्य ग्रीवा भग्ना, स्वच्छनाधिकारिणी मार्जनी समाप्त-प्राया । दुष्टनिष्कासनाधिकारिणः शूर्पस्य कर्णौ कृत्तौ । मेलकारिणी दासी दर्वी सञ्जाता गलितचरणा । चौराणाम् उपद्रवः समारब्धः । शासकीयनिधिरपि रिक्तः । कुमारस्य जीवनमापद्ग्रस्तम् । राज्ये अव्यवस्था अशान्तिश्च । भवन्तोऽपि दुःखिताः स्युः इति मे प्रत्ययः । भवत्क्रोध एव सर्वापदां मूलम् ॥

अतः क्रोधं विहाय शीघ्रमेवागन्तव्यम् । अतः परं किमधिकं लेख्यम् । सर्वमनेन भवन्तो ज्ञास्यन्ति एव । प्रतीक्षमाणा - भवन्महाराज्ञी ॥"

पत्रपठनानन्तरं साश्चर्यं सेनापतिः उवाच—"भवान् तु महाराजः, वयम् अनभिज्ञा एव भवद्वास्तविकस्वरूपस्य" ॥

अस्मिन् समये गोपालसिंहस्तु तूष्णीमेव अतिष्ठत् । किन्तु अन्येन सैनिकेन गोपालसिंहस्य सर्वो वृत्तान्तः सेनापतये निवेदितः । प्रसन्नेन सेनापतिना द्रव्यपुरस्कारादिभिः सत्कृताय गोपालसिंहाय गृहं गन्तुम् अनुमितिः प्रदत्ता ॥

गोपालसिंहः सानन्दः अश्वारूढः सन् सत्वरमेव गृहं गतः । द्रव्यराशिं पुरतो निधाय पत्नीम् उवाच—"यत् त्वम् अतीव बुद्धिमती । त्वत्पत्रप्रतापेनैव एष लाभो जातः । किन्तु अधुनाऽपि पत्रस्याशयो मया न ज्ञातः" ॥

"भवान् जल्पाकः पत्रमपि भवादृशमेव" इत्युक्त्वा पत्नी भग्नमुखं कलशम्, गलितदण्डां दर्वीम्, छिन्नभिन्नां मार्जनीम्, सच्छिद्रं शूर्पम्, विनष्टं दण्डं च स्वामिसमक्षं स्थापितवती ॥

अवलोक्यैतत् सहास्यमुवाच गोपालसिंहः—"आम् ज्ञातम्, एते एव तव राज्याधिकारिणः ! तथा च चौराः के?' ॥

"मूषकाः" इति मन्दमब्रवीत् तत्पत्नी ।

गोपालसिंहः सहर्षमब्रवीत्—"एष धनराशिः तव समासोक्तिचमत्कृतेरेव परिणामः । अतः त्वं धन्यवादार्हा" इति ॥

# शक्तिशारदम्[1]

## श्रीयतीन्द्रविमलचतुर्धुरीणः

॥ तृतीयः अङ्कः ॥

॥ विष्कम्भकः ॥

जयरामवाटिकास्थः कश्चन धर्मप्राणो नाम कृषिजीवी कामारपुकुरस्थश्च कश्चन केवलकृष्णो नाम मत्स्यजीवी प्रविशतः ॥

धर्मप्राणः—अहो! आश्चर्यं तु घटनापरम्परा । अस्मिन् एव १२८०-तमे वङ्गाब्दे अग्रहायणतश्चैत्रमासस्य मध्ये पञ्चमासाभ्यन्तर एव मृत्योः शान्तिक्रोडम् आश्रितवन्तौ सारदामणेरार्यपुत्राग्रजो रामेश्वरः, पिता च रामचन्द्रमुखोपाध्यायः ॥

केवलकृष्णः—आश्चर्यं खलु सम्मेलनम् एतयोः परिवारयोः ।

धर्मप्राणः—तन्नु कथम् ?

केवलकृष्णः—किं न पश्यति भवान्, भक्तिमाहात्म्ये वर्णनातीतं सामञ्जस्यमेतयोः परिवारयोः । मृत्युसमये रामकृष्णाग्रजो रामेश्वरः प्राह—पथि पार्श्वे दाहक्रिया मे करणीया, चिताभस्मानि च पथो धूलीभिः संमिश्रणीयानि यथा साधूनां गमनसमये तेषां पदरजोभिः मिलितदेहभस्मनो मे सद्गतिर्भवेत् ॥

धर्मप्राणः—परमशोभनं खल्वेतद्वचः ।

केवलकृष्णः—भूयोऽपि शृणु—अस्माकं सारुः सारदामणिर्वा आमाशयरोगेण सातिशयम् आक्रान्ता न केनापि उपायेन आरोग्यं भजते स्म । किन्तु रामकृष्णेन यस्मिन् दिवसे एव उक्तम्—"भो हृदय! सा (सारदा) इत्थमेव जगति आगमिष्यति पुनर्गमिष्यति च । तस्या मनुष्यजन्मनः किमपि सार्थक्यं न भविष्यति" इति । ततः प्रभृति सा सारदा आरोग्यं लभते स्म ॥

---

1. पूर्वसञ्चिकातोऽनुवृत्तम् ।

धर्मप्राणः—अहो! चमत्प्रदा घटना इयम्। भूयोऽपि एतयोः परिवारयोर्वार्ता ब्रूहि। एतद्वार्ताश्रवणार्थमहं नितरामुत्सुको वर्ते। पश्य—

संसारदावानलतापितानाम्
　अन्विष्यतां शान्तिसुशीतलाम्भः।
सत्सङ्गमाः सच्चरितानुचर्चाः
　पीयूषकल्पाः किल मानवानाम्॥

केवलकृष्णः—केचन एनमेव गदाधरमुखोपाध्यायं रामकमलरामेश्वरानुजं सर्वदा जागतव्यापारेषु परोपेक्षाप्रदर्शनाद् भावोन्मत्तत्वाच्च उन्मत्त इति विशेषयन्ति। सारदाया माता श्यामासुन्दरी तु कन्याया निष्पुत्रकत्वात् करुणं विलपति। किन्तु श्रूयते रामकृष्णेनेत्थं भाषितम्—

कन्याया गर्भजातांस्त्रिचतुरतनयान् द्रष्टुमुत्कण्ठमाना
　हा किं श्वश्रूर्मदीया विलपति करुणं वत्सहीनेव धेनुः।
तादृक् कालो न दूरः स्वतनयरहिताप्यात्मजा यत्र तस्या
　माशब्दोद्भूतविष्वक्कलकलबधिरीभूतकर्णा भवित्री॥

धर्मप्राणः—एतद्भाषणं सामयिकविजल्पितमिव श्रूयते। किन्तु दुःखस्य विषय एष एव यत् श्यामासुन्दरी सारदया सह दक्षिणेश्वरे गत्वा न दिनमेकमपि तत्र स्थातुं प्राभवत्। रामकृष्णस्य भागिनेयो हृदयोऽतीव कर्कशभाषी। स खलु "कथमागता? कस्य हेतोः? किमत्र संघटितम्?" इत्यादिभिः सुमिष्टभाषितैः श्यामासुन्दरीं सन्तोष्य तां तस्याः कन्यां सारदां च व्यसर्जयत्। ते श्यामासुन्दरी सारदा च निरुपाये रामलालेन नौकां संग्राहयामासतुः। तस्मिन् दिने श्रीरामकृष्णो मौनमवालम्बे। मन्ये एतद्दुष्कृतफलेनैव हृदयस्य सौभाग्यसूर्योऽपि तस्मिन् क्षण एव अस्तमगमत्। अचिरादेव कारणान्तरमुद्भाव्य मन्दिराधिकर्ता हृदयं चिराय दक्षिणेश्वरान्निष्कासयामास। न चैतदाकस्मिकम्, नियमः खल्वेषः। कथमिति?

जनयति यदि दुःखं पामरस्यापि कश्चिद्
ध्रुवमनुभवितव्यं तत्फलं तेन सद्यः ।
प्रणिहितहृदयानामीश्वरे सर्वकालं
गुरुजनरमणीनां का कथा दुःखदातुः ॥

इदानीं पूजकस्य हृदयस्य स्थलेऽभिषिक्तोऽभवत् रामकृष्ण-भ्रातुष्पुत्रो रामलालः ।

केवलकृष्णः—अत एवेदानीं सारदामणिर्लक्ष्मीशिवरामाभ्यां सहिता दक्षिणेश्वरं गमिष्यतीति श्रूयते ।

निर्विघ्नं गच्छतादेषा साध्वी पतिनिकेतनम् ।
चिरान्मिलितयोर्भूयाद् दम्पत्योः सुखमक्षयम् ॥

तदेहि, आवां गच्छावः । (निष्क्रान्तौ धर्मप्राण-केवलकृष्णौ)

(विष्कम्भकः समाप्तः ।)

स्थानम्—तेलो-भेलोवनस्थ-वटवृक्षस्याधस्तात् कालीमन्दिरम् ।

कालः—रात्रिः ।

[प्रविशति श्रीरामकृष्ण-दत्त-कङ्कणादि-समलङ्कृता सारदामणिः ।]

श्रीसारदा—अहो! दूरं गताः खलु मे सङ्गिनः । क्व गता लक्ष्मीः? शिवरामोऽपि? घोरे काननेऽस्मिन् एकाकिनी अहं वर्ते । देव! सर्वेषां मङ्गलं कुरु ।

[दूरात् दृश्यते अलातालोकः]

कस्मात् अकस्मात् विच्छुरति आलोकरश्मिः । देवो मां प्राह—“आपत्पाते इष्टनाम एव स्मरणीयमिति ।” तत् तथा करोमि ।

(इति निमीलितनेत्रा तिष्ठति)

[ततः प्रविशति घोरकृष्ण-निबिड़-कुञ्चित-केशपाश-दीर्घयष्टिरौप्यवलय-हस्तः दस्युः “कालुवाग्दी”]

श्रीसारदा—(किञ्चिद् भयं नाटयन्ती स्वगतम्)

जानूर्ध्वगामि मलिनं वसनं वसानः
कृष्णाकृतिर्निबिडकुञ्चितकेशपाशः ।
यष्टिं करे वलयिनि प्रतिगृह्य दीर्घां
कोऽयं समेति जनयन् हृदयस्य कम्पम् ॥

दस्युः—

न जानामि बालान्न यूनो न वृद्धान्
धनानां निमित्तं निहन्मीह सर्वान् ।
भृशार्तश्च कार्तस्वरक्षोदलोभा-
न्निहन्तुं भवेन्मे न कारुण्यलेशः ॥

(सारदां दृष्ट्वा सोल्लासं) हन्त !

दैवादत्र समायाता कामिनीयं सकाञ्चना । (सविषादम्)
कष्टं निष्किञ्चनप्राया प्रतियास्यति बान्धवान् ॥

(प्रकाशम्) का त्वम्? (सोपालम्भम्) कथमस्मिन् 'शुभे' स्थाने दण्डायमानाऽसि? कुत्र वा यास्यसि? अपि न जानासि अस्मात् स्थानात् स्वर्गलाभः सुलभ एव ।

श्रीसारदा—पूर्वस्यां दिशि गन्तुमिच्छामि ।

दस्युः—नायं पन्थास्तेऽयनाय । अहं त्वां शोभनेन पथा नेष्यामि । मामनुसर । हाः हाः हाः! (उच्चैः हसति ।)

श्रीसारदा—(सारल्यमभिनीय) यदाज्ञापयति भवान् । कृतज्ञास्मि ।

दस्युः—हाः हाः हाः! अतिसाहसिनी त्वम् । सत्यं वद, का त्वमसि?

श्रीसारदा—पितः! अहं तव कन्या सारदा ।

दस्युः—मम कन्या सारदा? रे मृषाभाषिणि, न जानासि कस्य करे पतितासि?

वाञ्छसि यदि कपटेन स्वां मुक्तिं मम कराद् दस्योः ।
तदयं महाभ्रमस्ते नाहं शक्यः प्रवञ्चयितुम् ॥

तत् सत्यं वद, का त्वम्?

श्रीसारदा—पितः! सत्यं वदामि, अहं तव कन्या सारदा ।

दस्युः—[स्वगतम्] मम कन्या सारदा? आश्चर्यमाश्चर्यम्! अकस्मात् मनसि मे कथं सन्तानस्नेह उद्वेलो भवति?

यत् सुप्तं शैलसारे मम हृदि सुचिराद् गूढवात्सल्यबीजं
सन्तानस्नेहयोगात् किमिति तदधुना कल्पते ह्यङ्कुराय ।
नो चेदन्यस्य गृह्णन्नदयमनुदिनं प्राणवित्तादि सर्वं
किं वैक्लव्यं भजामि ह्यपरिचितचरीं वीक्ष्य बालां वनान्ते ॥

कथम् एतादृशम् अघटनघटनम्! अथवा, न हि कन्यका, सा मम स्नेहमयी ममता-मधुरा जननी एव। नहि नहि, न एतादृशं चित्तदौर्बल्यं मयि शोभते। (सारदामुद्दिश्य) सत्यं वद का त्वम्।

श्रीसारदा—परमश्रद्धेय पितृदेव! कृपया शृणु तव कन्याया दुरवस्था-विषयम्। सङ्गिनो मेऽग्रवर्तिनः कुत्रापि भवेयुः? अहमपि पथिभ्रष्टा वर्ते। भवतां कृपामधुरिम्णाऽहं तैः सह सम्मेलितुं वाञ्छामि। भवतः परमादरभाजनं जामाता दक्षिणेश्वरधाम्नि राज्ञ्या रासमणेः श्रीकालिका-मन्दिरे वसति। तत्पादोपान्तप्रापणाय मम इयं शुभयात्रा। आकालीमन्दिरं मया सह भवान् आगच्छेत् चेत् जामाता ते श्वशुरं परं समादरिष्यते।

दस्युः—[स्वगतम्] आश्चर्यमाश्चर्यम्!

रोमाञ्चितं भवति मे सकलं शरीरं
नेत्रद्वयं विगलदश्रुतयाऽप्रसन्नम्।
कम्पः परोऽङ्घ्रियुगले स्थित ईश्वरीयो
भावश्च कोऽपि हृदये किमहं करोमि ॥

दस्युपत्नी—परमादरिणि[6] दुहितः! परमसौभाग्यं मम यत् एकेनैव मातृसम्बोधनेन त्वं मादृशीं दीनहीनां दस्युललनामपि पवित्रीकरोषि । पथिश्रमक्लेशो भृशं त्वां दुनोति । किन्तु, अहो! पश्य! कमलकोमलं पल्लव-पेलवमलक्तकरागरञ्जितं तव पादयुगलं धूलिधोरणिपरिचुम्बितं स्वेदाक्तं सत् शिशिरसिक्तम् अलिकुलनिषेवितं विकचपङ्कजद्वयमिव परिशोभते । किं च—

तेलोभेलोनामके काननेऽस्मिन्
रुद्धश्वासे बद्धभीमान्धकारे ।
त्वय्यायान्त्यां मन्दवायुः प्रवाति
ज्योत्स्ना सान्द्रा मन्दयत्यन्धकारम् ॥

किन्तु, सत्यं सारदे! का त्वम्?

श्रीसारदा—जननि! अहं जयरामवाटिकानिवासिपरमसत्यनिष्ठ-श्रीरामचन्द्रमुखोपाध्यायमहाभागस्य आदरिणी कन्या सारदा, "सारु:" इति आदरात् स्नेहसिक्तनामधेया । जननी मे श्यामसुन्दरी जगन्माता श्यामेवाऽवतीर्णा इति मन्ये । किन्तु मातः!

युवां मयि कृपापरौ त्वमथ भद्र एषोऽपि च
प्रसादममतादरान् व्यतनुतं हि नित्यं यतः ।
ततोऽहमपि सारदा विपुलसम्भ्रमश्रद्धया
स्वकीयपितराविवास्तमितभेदमीक्षे युवाम् ॥

युवयोः स्नेहमधुविप्लावनेन मधुरं मम जीवनम् । केवलं प्रार्थये यथा जामाता युवयोः सम्माननसौभाग्यसुखं लभते, तथा विधीयताम् ।

दस्युः—जामातरं द्रष्टुम् अचिरादेव आवां ध्रुवं गच्छावः । प्राणप्रिय-कन्यके! गभीरा रात्रिः, त्वमपि परिश्रान्ता, अधुना अदूरस्थितम् आवासस्थानं मे शुभागमनेन धन्यं कुरु ।

श्रीसारदा—कृतार्थास्मि । [विश्रमागारं प्राप्य] परमरमणीयं स्नेहसुशीतलम् इदं स्थानम् ।

दस्युः—स्नेहपुत्तलिके! नयनमणि-सारदामणे! तव पादारविन्द-स्पर्शेन स्वर्गसौधमिव राजते इदं क्षुद्रगृहम्। किन्तु मातः!

गलति किमिति मातस्त्वद्वचोभिर्ममेदं
हृदयमचलसारं दस्युवृत्तिप्रसङ्गात्।
भुवि पुनरवतीर्णा राधिका जानकी वा
त्वमसि न तु तदन्या कापि सामान्यनारी॥

श्रीसारदा—महीयन् पितः! कन्या एव जननी, विश्वकन्या एव विश्वजननी। तत्र को भेदः? तस्मादस्माकं वैदिककुलेषु प्राथम्येन मातृका-पूजा, अन्ते च कुमारीपूजनम्। तस्मात् यतो भवान् मां कन्यकां मन्यते, तत एव मां जननीरूपेणापि परिगणयति।

अत्याश्चर्यं भारतं वर्षमेतद्
यत्रोत्पन्ना मानवा देवभावाः।
नारीदर्शं मातृबुद्ध्या नमन्तो
मातर्मातर्व्याहरन्तीति चोच्चैः॥

दस्युपत्नी—किन्तु नाथ! कथम् एतत् यद् भवान् मम अनाहार-क्लिष्टायाः कन्यायाः इत्थं भाषणक्लेशं जनयति। विश्रामं लभतां नाम प्राणप्रियतरा दुहिता सारुः।

[दस्युपत्नी स्ववस्त्राञ्चलेन सारदायाः शय्यां रचयति।]

नाथ! अचिराद् विपणेरानय भृष्टतण्डुलम्। आदरिणी कन्यका मे प्रथमं येन केन प्रकारेण क्षुन्निवृत्तिं करोतु नाम। आवयोः अन्नाभावहेतोः महाकष्टं मे दुहितुः स्यात्। किन्तु किं करोमि। (दस्युर्बहिर्गतः।)

श्रीसारदा—न हि न हि मातः! यदेव स्नेहस्पृष्टं तदेव अमृतम्। पश्य मातः,

पीयूषजोषणपरा त्रिदिवं शिवदं विहाय विबुधगणाः।
निवसन्ति यज्ञवेद्यां श्रद्धाहुतहव्यमात्ररसिकतया॥

दस्युपत्नी—सारो! मातः! सुखं विश्रामं कुरु । नात्र आस्ते किञ्चिदपि भीतेः दुःखस्य च कारणम् । जामातरं द्रष्टुं गच्छसि । सर्वं सुखं हृदयं ते विप्लावयतु नाम ।

(दस्युः भृष्टतण्डुलेन सह प्रत्यावृत्तः)

दस्युः—मातः सारदे! भृष्टतण्डुलं कृपया गृहाण ।

श्रीसारदा—परमतृप्तास्मि ।

दस्युः—अद्यत्वे मम नारकजीवनमपि परमदेव्यै चिराय समर्पयामि । त्वयाद्य दत्तं मह्यं दिव्यं चक्षुः । भक्तानुग्रहविग्रहो भगवान् रत्नाकरदस्युं वाल्मीकिरूपेण परिणमयन् समुद्दधार । भगवतो बुद्धस्य करुणया दस्युप्रवरः अङ्गुलिमालोऽपि जातो निर्वाणभाजनम् । भगवतो महाप्रभोर्नित्यानन्दस्य च करुणया "जगाइ–माधाइ"–समाख्यौ कलुषाचारौ कुसुमपवित्रौ बभूवतुः । तद्वत्, स एव भगवान् अद्य मां समुद्धर्तुं मातुराकारेण समागतो नु किम्? पूर्वोक्तेभ्योऽपि अहं पाषण्डतम इति हेतोः पुरुषरूपं विहाय कोमलमधुर-नारीरूपं भगवता धृतं किम्?

श्रीसारदा—पुण्यश्लोक पितः! स्नेहान्धतया भवान् इत्थं कथयति । अहं सहजाबला सारदा। भगवत इष्टदेवस्य करुणया एव भवान् मुक्तिं लप्स्यते ।

दस्युः—मातः! शृणु मे प्रतिज्ञावचनम् ।

आस्तां नारकजीवनं मम चिरान्न्यस्तं जनन्याः पदे
कालीसेयमतः परं हृदि परं मे राजतां पूजिता ।
पूज्या चेत् प्रतिमा तपोधनविधिस्तत्रावलम्ब्यो मया
कामक्रोधमुखा भवन्तु बलयो न च्छागमेषादयः ॥

दस्युपत्नी—(अश्रु विसृज्य) श्वः प्रभाते तमसा परिवृतं स्थानमिदम् अधिकतरं तमसा छन्नं कृत्वा त्वम् पतिगृहं यास्यसि । भोजनाय तुभ्यं किं दास्यामि? जामात्रे वा किम् उपायनं प्रेषयिष्यामि? भवतु, एतत् क्षुद्रक्षेत्रो-त्पन्नां कलायप्रसवमञ्जरीं तवाञ्चले निधास्ये यथासुखं भृष्टतण्डुलेन भुङ्क्ष्व ।

इदानीं शयनसुखं लभस्व । यामिनी गभीरा भवति । सारो ! रक्षिरूपेण स्थास्यति ते पिता स्वयमेव ।

**दस्युः**—अयि मुग्धे ! अस्थाने ते उद्वेगः । अथवा युक्तमेवैतत्—

सर्वजगत्पालिन्या यद्यपि नहि सारदामणेर्भयं भवति ।
लोकप्रथया तथापि सुतकृत्यमनेन पालितं भवति ॥
सारदे वरदाकारे जगदम्ब परात्परे ।
कालुवाग्दीजनन्यै ते सनातनि नमो नमः ॥

॥ तृतीयोऽङ्कः समाप्तः ॥

## ॥ चतुर्थोऽङ्कः ॥

### प्रथम - दृश्यम्

स्थानं स्नानागारम् । कालः प्रभातम् ।
प्रविशति अवगुण्ठनावृता सारदा हृदयश्च ॥

**हृदयः**—(सक्रोधम्) मातुलानि ! त्वद्गृहार्थं संगृहीतानां वृक्षप्रकाण्डानामेकं रात्रौ गङ्गया कुत्रापि अपसारितम् । तव पितुर्भूमिः "जयरामवाटिका" । किन्तु तव विषये "जयस्य" किमपि न प्रेक्षे, "राम" नामकस्ते पितेति सत्यं, "वाटिका" किन्तु नास्ति । पक्षान्तरे, मम मातुलः, भवतु वा "कामारपुकुर" निवासी, किन्तु सर्वत्र तस्य नाम्नि महासमुद्रः स्वयमेव सर्वं संगृह्णाति ।

लोके मान्यो महीयानतुलगुणयुतो मातुलो मे प्रसिद्धः
संसाराब्धेर्दुरन्तात् कति कति न जनानुद्दधार स्वशक्त्या ।
विश्वानन्दप्रदाता प्रणमति जनता यं समालोक्य दूरात्
तस्यालक्ष्मीस्वरूपा किमिति गुणमरुस्त्वं स्थिताऽर्धाङ्गिनीत्वे ॥

अपि च, या जाह्नवी सर्वजने दयालु-
र्यच्चिन्तया हन्त जनास्तरन्ति ।
सा केवलं भाग्यगुणात्तवैव
वैरायमाणेव हि वर्तते नः ॥

धिक् धिक् त्वाम्, अलक्ष्मीमूर्ते मातुलानि !

श्रीसारदा—वत्स । कथं क्रोधपरवशोऽसि ? प्रकृतिम् आपद्यस्व ।

जानाम्यहं हृदय काममधन्यतां मे
दुर्भाग्यमप्यतिमहद् गुणराशिनाशि ।
श्रीठाकुरः पुनरयं महतो महीयां-
स्तौल्यं कुतो जलधिपल्वलयोर्विधत्से ॥

हृदयः—(उच्चैः) किमहं तव परिहासभाजनं यदित्थं मामुपहससि ? नाहं केवलं जानामि, परन्तु निखिलमपि विश्वं जानाति ।

अङ्कः शशाङ्क इव कीट इव प्रसूने
वह्निः समुद्र इव कण्टकवत् पयोजे ।
विश्वादृते मम तु मातुलरामकृष्णे
त्वं निर्गुणा विधिहता परमोऽभिशापः ॥

श्रीसारदा—वत्स ! शान्तो भव । न उपहासोऽयम्, इयं मम हृदयोत्था सत्यतमा वाणी ।

चन्द्रमणिः—(झटिति प्रविश्य) हृदय ! किमुन्मत्तोऽसि, यत् परमपूजनीयां मातुलानीं प्रतीदृशं कटु भाषसे ? किं ब्रवीषि त्वम् ? वधूमाता मे "जयरामवाटिकायाः" शाश्वतो जयः, कामारपुकुरस्य च चिरशान्तिनिर्झरी ।

यदि भवति सुतो मे रामकृष्णात्ममूर्ति-
स्तदियमपि हि सीताराधिकायुग्मरूपा ।
भवति च भवसिन्धौ मातुलस्ते तरिश्चेद्
विगणय तनयां मे सारदां कर्णधारीम् ॥

पुण्यतोया जाह्नवी अपि सारदाया हस्तधारं नृत्यति, जगन्मङ्गलाय समुद्राभिमुखं प्रवहति च ।

हृदयः—

त्वमेव मातामहि मातुलान्याः
स्पर्धाभिमानौ विदधासि तुङ्गौ ।
जानीहि वृद्धे न हि रामकृष्ण-
मप्येष शर्मा हृदयः स्तवीति ॥

कथं त्वम् अकारणमस्या हेतोर्मां तिरस्करोषि ?

चन्द्रमणिः—वृद्धाहं, तत एव त्वत्तो जगत् पूर्णतरं जानामि । इयं मे कन्यका अनलसा अतन्द्रिता दिवसयामिन्यौ सायंप्रातरात्मानं धूपयष्टिमिव ज्वालयित्वा अस्माकं सर्वेषां जीवनं सौरभमयं करोति । तवापि, मा विस्मर, तवापि ।

हृदयः—(उच्चैः) हुं । एष शर्मा न कमपि कामपि वा समपेक्षते । "जयरामवाटिका" विशुष्का, तव प्राणसमा इयं सारदामणिस्तस्याः शुष्कातिशुष्कं पुष्पमपि न, किन्तु केवलं भूतलपतितं छिन्नपत्रमेकम् ।

रामकृष्णः—(कोलाहलं श्रुत्वा व्याकुलः प्रविशति) हृदय ! किं नु संघटितम् ; कथं प्रभातेऽपि कोलाहलतत्परोऽसि ?

हृदयः—मातुल ! गङ्गानदी मातुलान्या गृहनिर्माणार्थमानीतं वृक्षप्रकाण्डमेकं स्रोतसा वाहितवती । तत्र दोषः सर्वस्तस्या इति मयोक्ते वृद्धेयं तडिद्वेगेनागत्य मातुलानीम् अकारणं प्रशंसन्ती मां निन्दति । मया तु सा प्रशंसार्हा न मन्यते ।

चन्द्रमणिः—सा न प्रशंसार्हा ; तदा का जगति प्रशंसामर्हेत् ?

रात्रेः पश्चिमयामतः परनिशायामद्वयाभ्यन्तरे
विश्रामं भजते कदापि न हि या तत्तत्क्रियाव्यापृता ।
वर्तिर्धूपवतीव तृप्यति परान् हा दह्यमाना स्वयं
सा सांसारिकसर्वभोगविमुखी किं न प्रशस्या भवेत् ॥

रामकृष्णः—सत्यम् । विश्वसेवार्थं दत्तप्राणा सा, मूर्तिमती करुणा क्षमा सहिष्णुता च ।

चन्द्रमणिः—पश्य ; क्षुद्रातिक्षुद्रोऽयं नहवतप्रकोष्ठः पारावतनिवास-योग्य-गर्तवत् । तत्रापि बहुजन-संसेवनाय वस्तु-सामग्र्या आनन्त्यम् । यस्मिन् तस्मिन् क्षणे, यस्मिन्नप्यागच्छति नवनवव्यञ्जनादिरन्धनमनया कर्तव्यम् । मनसापि इयं न वदनं मलिनीकरोति ।

अस्येदं प्रियमेतदस्य न तथा तस्मा इदं रोचते
पथ्यं ह्येतदमुष्य नेति कुरुते प्रत्येकतो रन्धनम् ।
यच्चैषां परिवेशनं प्रतिजनं यच्चानुषङ्गागतम्
अन्यत् कर्मशतं करोतु तदिदं का वा विना सारदाम् ॥

रजन्यामपि स्थानदोषादुपजातैः कारणैः निद्रालेशोऽपि न भवति । नास्तेऽत्र शौचागारम्, अन्यच्च सुविधास्थानम् । बालिकेयं केनोपायेन प्राणान् बिभर्तीति नाहं जाने । तथापि त्वं ब्रवीषि दोषोऽस्या एव !

हृदयः—मातुलानी स्वयम् एव स्वकष्टं जनयति—यतोऽस्याः स्वभाग्येन सह विवादो वर्तते ।

रामकृष्णः—(सरोषम्) हृदय ! शृणु सावधानम् ।
मां तुच्छीकृत्य यत्किञ्चिद्भाषसे तत् सहे वरम् ।
एनामुद्दिश्य परुषं सहिष्ये भाषितं न ते ॥

अपि च रे ! शृणु तत्त्वम् ।

य इह वसति देवः शाश्वतो मे हृदन्तः
स यदि भवति रुष्टः स्यादपि प्राणरक्षा ।
अधिहृदयममुष्या राजमानेऽथ रुष्टे
न हरिहरविरिञ्चास्ते विधास्यन्ति रक्षाम् ॥

तस्मात् सावधानो भव, परं सावधानो भव ।

[हृदयः सभयं मौनमवलम्बते]

**चन्द्रमणिः**—पुत्र ! अहर्निशं कठोरश्रमकातरा इयं ममादरिणी पुत्री कथं शरीरधारणे समर्था भविष्यति ? अहो स्वल्पपरिसरे अस्मिन् कक्षे पादसंप्रसारणस्यापि स्थलविहीने इयं युगपत् गार्हस्थ्यधर्मं सन्न्यासधर्मञ्च कथं पालयतु ? वत्स ! अस्या हेतोः किमपि कुरु ।

**रामकृष्णः**—(सस्मितं स्वगतम्) कः कस्य हेतोः किं करिष्यति ? कः कां रक्षति ? (मातरमुद्दिश्य)—स्नेहमयि जननि ! निश्चितमेवास्मिन् विषये किमपि करणीयम् । साधनपथो हि कण्टकाकीर्ण एव ।

**हृदयः**—(स्वगतम्)

विलोक्य चन्द्राननमेतदीयं
 कामं युवा मुह्यतु मातुलो मे ।
मातामहीयं जरती किमस्यां
 स्नेहानुबन्धं प्रगुणीकरोति ॥

तत् सर्वमेतेषाम् आत्ममुखि ।

(निष्क्रान्तः)

**श्रीसारदा**—मातः ! सत्यं वदामि, का कथा दुःखस्य, परम् अनेन गृहकर्मणा निरन्तरं व्यापृताहं सुखमेवातुलमनुभवामि ।

यतः,

ददत्या दीनेभ्यो बहु-शतजनेभ्योऽन्ननिचयं
 जनन्याः कुर्वत्याश्वरणपरिचर्यामनुदिनम् ।
चरन्त्याः साहाय्यं पतिचरितधर्मे च भवति
 श्रमो यो यो मातः स स खलु तपस्या मम परा ॥

**रामकृष्णः**—सत्यमाह सारदा । किञ्च, स्थितायां मे मातरि अरण्यमपि नन्दनकाननायिष्यते । न तत्र किमपि कष्टं दुःखं वा, सर्वं सुखं सुखपरं च ।

जननि ! पुत्रवधूस्तव श्वश्रूदेवीं शुश्रूषमाणा जगदिदं स्वर्गादपि गरीयो मन्यते । फलतः मातुः का गरीयसी ? मातृचरणमेव सर्वतीर्थ-

स्थानेभ्यो गरिष्ठम्, मातृचरणमेव श्रेष्ठः साधनविषयः । जननि, तव सेवा एव जगज्जनन्या आराधना, त्वमेव आवयोः परमा गतिः । [मातरं साष्टाङ्गं प्रणम्य] तवैवाशीर्वादान् आवां प्रार्थयावहे । [सारदादेवी अपि साष्टाङ्गं मातृचरणयोः पतति]

(सर्वे निष्क्रान्ताः)

॥ चतुर्थोऽङ्कः समाप्तः ॥

॥ पञ्चमोऽङ्कः ॥

पुत्रिकानृत्यकृच्छद्मवेषधारि-ह्यारि-मेरी-
कृत-सङ्गीतम् ।

स्थानम् —विपणिकेन्द्रम् । समयः—अपराह्णः

ह्यारिः—पश्य प्रिये मेरि ! नवयुगघटनम् ।
अहो रम्या नवीनरीतिर्मधुर-हास-कास-पद्धतिः
प्रायः पतद्धूम्रवर्ति-कृष्ण-वदनम् ॥

वस्त्रकोषदत्तहस्त-सदाग्रीवाबन्धतुष्ट-
कृष्णवक्र-पादलोपि-चुङ्गिधारणम् ।
वाक्यमध्ये शतं प्रति ह्याट्म्याट् नवनवति-
शब्दव्यवहरणं मनोहरणम् ॥
'बाल्'नृत्यं कुरु मेरि विश्वभूषणम् ॥

मेरी—दार्लिङ् [Darling] पथि मध्ये घटतां बाहुग्रहणम् ।
गृहमध्ये भवतु नाम कटुवाक्यसङ्गरणम् ॥
यौथपरिवारस्य ध्रुवं धराලुण्ठनम् ।
नवयुगसभ्यता हार्दिक-वाञ्छनम् ॥

ह्यारिः—
दार्लिङ् पथि पथि नारी-विघूर्णनम् ।
ऊनविंशशताब्द्या विशेषघटनम् ॥

[ततः प्रविशतः प्रधानकरणिकः ("बड़बाबु") आमओयेलः (अमूल्यः), तस्य चाटुकारः दोयारकिनसनश्च (द्वारकानाथसेनः)]

आमओयेलः—(सक्रोधम्) अहो को नु अस्मादृशाङ्गलशिक्षितोपहासमूलकं सङ्गीतं गायति? भोः पुत्रिकानर्तनकृत् महामूर्ख अशेषस्पर्धाशील! केन रचितं सङ्गीतमिदं कुतो वा त्वया प्राप्तम्?

दोयारकिन्सनः—सत्यं महासत्यम्! सारात्सार (Sir of Sirs)।

(पुत्तलिकानर्तनकृतौ उद्दिश्य)

त्वरितं ब्रूहि को दण्डविधिविगर्हितम् इदं सङ्गीतं रचितवान्? न जानासि कौ युवयोः पुरोभागे वर्तेते? एष एव महामहिमान्वितः शत-शत-जनानां दण्डमुण्डनकर्ता "टम्सन् एण्ड् सन्स्" नाम्न्या महत्या आंलो-कोम्पन्याः प्रधानकरणिकः श्रीलश्रीयुक्तः अमूल्यविश्वासः, मिष्टार् 'आम-ओयेल फेत्फुल' इत्यपरनामा। अहमस्मि तस्य प्रियभक्तः श्रीलश्रीयुक्त-द्वारकानाथसेनः यस्य मिष्टार् 'डोयारकिन्सन्' इति नामान्तरम्। ततः त्वरितं ब्रूहि, क्षणमात्रं विलम्बनं मा कुरु, सत्यं वद।

ह्यारिः—सारात्सार! कथं भवान् रुष्ट इव अवलोकयति? भवान् राजयोग-राजभोगपुष्टः, अहं भवतो दासानुदासो दीनदरिद्रः पल्लीकविः अवस्था-वैगुण्यात् राजधानीमार्गेषु छद्मवेषं परिधाय पुत्तलिकानर्तनेन जीविकानिर्वाहं करोमि। सङ्गीतमिदं मयैव रचितम्।

आमओयेलः—(सक्रोधम् उच्चैः) अरे अकालकूष्माण्ड! सर्पस्य पञ्च पदानि दृष्टानि त्वया? त्वम् अहिरसि चेदहं नकुलोऽस्मि। पैतृक-प्राणान् रक्षितुमिच्छसि चेदस्मात् स्थानादचिरेणैव अपसर।

दोयारकिन्सनः—सत्यं महासत्यम्। याहि अधःपातं याहि, दूरं गच्छ।

[पुत्तलिकानर्तनकृतौ बहिर्गच्छतः]

आमओयेलः—(सक्षोभम्) अहो! धृष्टता, अहो! कृतघ्नता अशिक्षितानां कुसंस्काराच्छन्नानां "नेटिवानाम्" देवाशीर्वादसम्पातः खल्वेष

यदाङ्गलजातेर्भारतवर्षस्य राजत्वभारग्रहणम् । अद्यापि आसमुद्रहिमाचलं भारतीयाः सर्वे भूमौ पात्रं निधाय हस्तेन खादन्ति, शालिग्रामप्रस्तरं पूजयन्ति, 'कोट्' 'पाण्ट्' इत्यादि न परिदधते, पुरनार्या सह चक्राकारेण न नृत्यन्ति, 'बाल्डान्स्'-नर्तनं न कुर्वन्ति । धिक् धिक्! न हि अस्य देशस्य समुन्नतेः काऽपि आशा ।

दोयारकिन्सनः—सत्यं महासत्यम् । सारात्सार! अद्यापि भारतीया नार्यस्ताम्रकूट-लट्टिपान-जनितम्, अर्थात्, 'सिगारट्-पान-जनितं धूमजालं नासारन्ध्रैर्नेतस्ततो विस्तारयन्ति, मद्यपानम् अर्थात् 'ककटेल्' पानं न कुर्वन्ति । परन्तु, अद्यापि यथापूर्वं तथापरं भारतीया रमण्यो बहुसहस्रवर्षेभ्यः प्रागूरचितं जीर्ण-दीर्णास्थि-जर्जरं रामायणं महाभारतञ्च सादरं पठन्ति । धिक् धिक्! नहि अस्य देशस्य समुन्नतेः काऽपि आशा (प्रभुमनुसृत्य) ।

आमओयेलः—न हि वर्षसहस्रेणापि "नेटिवानां" समुन्नतिर्भविष्यति । मध्याह्नमार्तण्ड-विकीर्णं दिवालोकमपि ते न पश्यन्ति । गाढ-तमसाच्छन्ना दिग्भ्रान्ता विचारबुद्धिविहीना भारतीयाः । नैतेषां हितं जगतीमण्डले कोऽपि कर्तुं शक्ष्यति ।

दोयारकिन्सनः—सत्यं महासत्यम् । सारात्सार! भूयो "गण्डस्योपरि पिटकः संवृत्तः" । यद्यपि पाश्चात्यशिक्षा-धन्याः केचन नव-नवालोक-संप्रसारणैर्भारतवर्षम् आलोकस्नातं कर्तुं वाञ्छन्ति, ते च वैदेशिकशिक्षाभ्यासात्

कुखाद्ये खाद्ये वा कमपि न विभेदं विदधते
न कुर्वन्ति श्रद्धामपुरुषकृतौ श्रौतवचसि ।
स्वसा वा भ्राता वा स्वजनकजनन्यावपि च वा
लभन्ते नैतेभ्यो मरणसमयेऽप्यन्नकणिकाम् ॥

तथापि सम्प्रति दैवदुर्विपाकात् अकस्मात् दक्षिणेश्वर-कालीमन्दिरे आविर्भूतः सनातन-ध्वजाधारी महाधुरन्धरः तथाकथितः युगावतारो रामकृष्ण-

नामधेयः कश्चित् । स कृष्णं खीष्टञ्चैकीकरोति, सर्वधर्मसमन्वयवादं प्रचारयति च । बाइबल्-वेद-कोराणानां सुसमञ्जसत्वं कथं सम्भवति ? श्रूयते च एष साधुः कामिनीकाञ्चनत्यागी, मनोमोहकरेन्द्रजालविद्याकुशलः । अहो ! भारतवर्षस्य ईदृशसन्न्यासि-सम्प्रदायः सर्वथा भयकारणम् ।

आमओयेलः—मूढोऽयं रामकृष्णो बुद्धिमतः पाश्चात्यशिक्षितानपि विपथगामिनः कर्तुं चेष्टते । अपि न जानासि—अयं भण्डतपस्वी स्त्रिया सह सन्न्यासधर्ममाचरति, मातरमपि प्रत्यहं प्रणम्य अन्नं भुङ्क्ते, स्त्रियं भैरवीयोगिनीं गुरुरूपेण स्वीकरोति । ततः स नामतः कामिनी-काञ्चनत्यागी, न कार्यतः । नैतादृशं काण्डम् इङ्लण्डे कदापि दृश्यते । "नारी नरकस्य द्वारम्" इति शास्त्रीय-वचनम् । सुतराम् एष रामकृष्णसाधुः शास्त्रगर्हितमाचरति । धिक् ! धिक् ! मम हस्ते अस्य ध्वंसः अनिवार्य एव ।

दोयारकिन्सनः—सत्यं महासत्यम् । तद्विषये कः सन्देहः ? किन्तु अस्मिन् विषये प्राथम्येन यथायथवार्ता-संग्रहः करणीयः । सारात्सार ! अदूरे तस्यैव पुत्तलीनर्तनकारस्य यन्त्रवाद्यं श्रूयते । स चतुर इव लक्ष्यते । अपि स गुप्तचरकार्ये नियोक्तव्यः ?

आमओयेलः—शोभन एष प्रस्तावः । तमाहूय प्राथम्येन परीक्षणं कुरु । ततः कर्मणि नियोक्ष्ये ।

दोयारकिन्सनः—सत्यं महासत्यम् । [दूरात् पुत्तलीनर्तनकारक-मुद्दिश्य]—भो भोः पुत्तलीनर्तक !

अत्रागच्छ झटिति । सारात्सारः त्वामाह्वयति ।

(प्रविशतः 'ह्यारिः' 'मेरी' च)

ह्यारि-मेरी—'साहेवौ' ! नमो युवाभ्याम् । कथं कृपया स्मृतौ आवाम् ?

दोयारकिन्सनः— (ह्यारिमुद्दिश्य)—अस्माकं सारात्सारः मिष्टार्-आमओयेल्फेत्फुलः त्वयि भृशं तुष्टो जातः । कार्यविशेषव्यपदेशेन

स तव चातुर्यं परीक्षितुम् इच्छति । प्राथम्येन सारात्सारस्य सन्तोषार्थं सङ्गीतमेकं रचय । उपायनं त्वं प्रचुरं प्राप्स्यसि ।

ह्यारिः—यथाज्ञापयति भवान्!

(ह्यारिः मेरी च गुप्तपरामर्शं कुरुतः)

ह्यारिः—सखे! साम्प्रतम् ईदृशं सङ्गीतं श्लेषात्मकं रचयामि यस्य अर्थद्वयं भविष्यति । येनैष मयूरपुच्छधारी काकः प्रतारितः स्यात् । अर्थद्वयविषये त्वं दत्तकर्णो भव । अङ्गभङ्ग्या तत्र तत्र च भावं प्रकाशय ।

मेरी—अहो! साधु साधु, धन्यस्त्वं पुण्यस्त्वम् । महत् कौतूहलं मे उद्रिक्तम् । विलम्बनं मा कुरु ।

मेरी—(सङ्गीतं गायति)

व्यङ्ग्यराज धराधार परभूषासुसज्जक ।
पटुभाष महाप्राण परपुष्टार्म-पालक ॥
बिलायत-प्रमोदिन् भो विदग्धाननशोभक ।
कलिप्रिय चिरं जीव स्वकार्योद्धारसाधक ॥

साहेबौ! अस्य अर्थं शृणुतम् । (ह्यारिः अस्य श्लेषविद्धस्य अर्थमेकं करोति, मेरी च अन्यं प्रकृतमर्थम् ।)

ह्यारिः—भवान् "व्यङ्ग्यराजः" गूढार्थाधिपतिः बृहस्पतिः ।

मेरी—अर्थात् त्वं 'इङ्ग-वङ्ग-कुलाधमः' ।

ह्यारिः—भवान् "धराधारः", धराया आधारस्वरूपः ।

मेरी—अर्थात् त्वं "धरायाः कलङ्कः ऋण एव" ।

ह्यारिः—भवान् परभूषासुसज्जकः, परम-भूषण-सुशोभितः ।

मेरी—अर्थात् त्वम् यूरोपीय-वेशपरिहितः कुलाङ्गारः ।

ह्यारिः—भवान् "पटुभाषः" भाषणपटुः ।

मेरी—अर्थात् त्वं काकः कृष्णमूर्तिः धुरन्धर एव ।

ह्यारिः—भवान् "महाप्राणः" महानुभावः ।

मेरी—अर्थात् त्वं "द्रोणकाकः" घोरकृष्णवदनः परापकारकः कर्कशभाषी मयूरपुच्छधारी काक इत्यर्थः ।

ह्यारिः—भवान् "परपुष्टार्भपालकः" परेषां भरणपोषणकारकः भारतीयशिशूनां पितृवत् पालकः ।

मेरी—अर्थात् त्वं कोकिलशावकपालकरूपकाकः ।

ह्यारिः—भवान् "बिलायतप्रमोदी" भिक्षुकाणामानन्ददायकः, अर्थात् दीनपालकः ।

मेरी—अर्थात्, त्वं बिलातभक्तसाहेब्पदलेही ।

ह्यारिः—भवान् "विदग्धाननशोभकः" पण्डितश्रेष्ठः ।

मेरी—अर्थात् त्वं दग्धाननो वानर इत्यर्थः ।

ह्यारिः—"कलिप्रियः" अस्मिन् कलियुगे सर्वेषां प्रियः ।

मेरी—अर्थात्, त्वं धूर्तमर्कटो वानर इत्यर्थः ।

ह्यारिः—"स्वकार्योद्धारसाधकः" कर्मवीरः ।

मेरी—अर्थात् त्वं परस्वापहरणपूर्वकम् उदरपूर्तौ सुचतुर इत्यर्थः ।

आमओयेलः—दोयारकिन्सनश्च—"साबास्! साबास्!" परममनोहरं सङ्गीतमिदम् ।

दोयारकिन्सनः—सारात्सार! एष सत्यमेव परमचतुरः, उपहारयोग्य एव ।

आमओयेलः—तस्मात् पञ्चमुद्रा अस्मै देहि । (इति पञ्च दोयारकिन् हस्ते ददाति) (कर्णे) गुप्तचरकार्यविषये त्वं ब्रूहि ।

दोयराकिन्सनः—(पञ्चमुद्रातः चतुर्मुद्राः स्ववस्त्रकोषे संरक्ष्य मुद्रामात्रं ददाति)

ह्यारिः मेरी च—(आमओयेलमुद्दिश्य) नमस्ते भूयो भूयः । असारे खलु संसारे सारात्सार सुखं भज ।

दोयारकिन्सनः—ह्यारे! मया सार्कं बहिरागच्छ ।

आमओयेलः—(मेरीं सस्पृहम् अवलोक्य) मेरि! दशमुद्रास्त्वं गृहाण। अदूरे दृश्यते मे प्रासादः सर्वेषां सुपरिचितः, "आमओयेल-साहेब्-कुटिः" इति ख्यातः। तत्र निश्चितम् एहि।

मेरी—(छलनामुखेन विहस्य) मम पतिरपि मया सह गमिष्यति।

आमओयेलः—सुन्दरि! त्वमेकाकिनी एव आगच्छ।

मेरी—कथमेकाकिनी गमिष्यामि? (आमओयेलः चक्षुःसंकेतं करोति)

मेरी—(सक्रोधम्) अरे दुश्चरित्र महासाहेब! एतदेव भवतः स्वरूपम्? आंगलशिक्षाप्रलेपेनापि तव पूतिगन्धि मनो न गूहितमास्ते। स्वदेशनिन्दने नास्ति ते त्रुटिः, अथ च नारीमनोविलोभने चातुर्यमतुलं दर्शयसि। तस्मात् पश्य मम प्रकृतरूपम्। (नारीवेषं हित्वा)

रे रे भ्रष्टाचार, देशकलङ्क!—

देहोऽयं दृढबन्धनः सुघटितः कालायसेनेव मे
दोर्दण्डावपि कालदण्डकठिनौ पाषण्डिनां भीषणौ।
एष त्वां शिखिपुच्छधारिकरटं स्त्रीलम्पटं दुर्जनं
पिष्ट्वा कर्दमपेषमाशु शमनागारं प्रति प्रेषये॥

आमओयेलः—यः पलायते स जीवति।

॥ पञ्चमोऽङ्कः समाप्तः ॥

## ॥ षष्ठोऽङ्कः ॥

श्रीरामकृष्णः स्वकक्षे समुपविष्टः। प्रविशति लक्ष्मीनारायण-माडोयारी।

लक्ष्मीनारायणः—(स्वगतम्)

कामिनीकाञ्चनत्यागी पुरुषोऽयं महत्तमः।
यद्यर्थं मे न गृह्णीयान्मात्रे दास्यामि तं ध्रुवम्॥

प्रार्थये भगवान् महतीम् आशां मे पूरयतु इति। [श्रीरामकृष्णमुपसृत्य] भगवन्!

त्यक्तः काञ्चनकामिनीपरिचयो देवेन दीर्घाद् दिना-
देतन्मे विदितं तथापि भगवन् प्राप्तोऽस्मि ते सन्निधिम् ।
एषा सानुनयं सभक्ति पदयोर्दासस्य तु प्रार्थना
मुद्राणामयुतं युतः करुणया गृह्णातु देवो मम ॥

श्रीरामकृष्णः—(स्वगतम्) मातः जगदम्बिके ! बहोः कालादनन्तरं कथं भूयोऽपि प्रलोभनकारणम् उपस्थापयसि ? (लक्ष्मीनारायणमुद्दिश्य) नाहं नाहम् एतद्ग्रहणे समर्थोऽस्मि । नाहं समर्थोऽस्मि ।

लक्ष्मीनारायणः—देव ! भवताम् एतद्विषये वैमल्यं चेत् जननी एव दशसहस्रमुद्राः परिगृह्णातु । तेनापि मे महान् आनन्दो भविष्यति ।

श्रीरामकृष्णः—इच्छति चेत् सा ग्रहीतुमर्हति । एनां पृच्छामि । रामलाल ! तव खुल्लतातपत्नीमत्र आह्वय ।

[प्रविशति जननी सारदामणिः]

श्रीरामकृष्णः—(सारदामणिमुद्दिश्य) एष लक्ष्मीनारायणः मत्सेवार्थं दशसहस्रमुद्रा दातुकामोऽत्रागतः । किन्तु काञ्चनत्यागिना मया नायम् अर्थो ग्रहणीय इति उक्तोऽयम् इच्छति त्वयैव दशसहस्रमुद्रा गृह्यन्तामिति ।

लक्ष्मीनारायणः—देवि ! भवती एव एतमर्थं परिगृह्णातु । हृदि मे अभिलाषो महान्—भवतोर्यः कोऽपि एतमर्थं परिगृह्णातु इति ।

श्रीसारदा—(श्रीरामकृष्णमुद्दिश्य) "आर्यपुत्र ! कथं तद् भविष्यति ? अहं गृह्णामि चेत् तदपि भवतैव गृहीतं भविष्यति । मत्सकाशे संरक्षितोऽर्थो भवदर्थमेव व्ययितो भविष्यति । नाहमन्यथा कर्तुं पारयिष्यामि । अत एव नैषोऽर्थो मयापि ग्रहणीयः ।"

(सारदामणिः प्रस्थिता)

श्रीरामकृष्णः—श्रुतं त्वयाऽनया यदुक्तम् । तस्मान्नैषोऽर्थ आवयोः केनापि ग्रहणीयः ।

लक्ष्मीनारायणः—भगवदिच्छैव बलवती ।

(लक्ष्मीनारायणो बहिर्गच्छति)

॥ षष्ठोऽङ्कः समाप्तः ॥

॥ सप्तमोऽङ्कः ॥

स्थानं—दक्षिणेश्वरस्थरामकृष्ण-कक्षः । कालः पूर्णिमानिशा ।

परमहंसदेवः समुपविष्टः ।

श्रीकेशवचन्द्रसेनः, भक्तभैरवः श्रीगिरीशचन्द्रः, श्री "मः", श्रीबलरामवसुः, श्रीनरेन्द्रः, श्रीप्रतापचन्द्रमजुमदारः, श्रीलाटुमहाराजश्च

रामकृष्णः—(गायति)

मातः शरणं दर्शय चरणं भीमभवार्णवतीरनिषण्णम् ।
तव गुणकीर्तनमुखरितजीवनमेनं तारय सपदि विपन्नम् ॥
भोगाद्विरतं योगे निरतं किमु मामवधीरयसि कराले ।
शोणपदाङ्कनमन्तककृन्तनमिह मम हृदये स्थापय काले ॥

केशवचन्द्रः—अपूर्वम् अपूर्वम् । किन्तु यामिन्या दशघटिका गताः । मयाः अवश्यमेव प्रत्यावर्तनीयं कलिकत्तानगर्याम् ।

प्रतापः—केशवचन्द्र महाशय! नहि नहि । अद्य रात्रौ भवान् अत्रैव स्थास्यति ।

रामकृष्णः—(सस्मितम्) किन्तु अभ्यासो बलवान्, अभ्यस्तकक्षे स्वशय्यायां सुखं स्वपिति केशवचन्द्र-महाशयः । अत्र तु यदि तस्य निद्राया व्याघातः स्यात्? अपि जानन्ति भवन्तो मत्स्यजीविन्याः उपाख्यानम्?

सर्वे—नहि, नहि, कृपया विवृणोतु भवान् ।

रामकृष्णः—शृणुत! स्वगृहे अतिथिरूपेण समागतां काञ्चन मत्स्यजीविनीं मालाकारपत्नी प्राह- भगिनि! कथं त्वं विनिद्रासि? मत्स्यजीविनी प्राह- भगिनि! तव कक्षस्य अभ्यन्तरे निहितानि पुष्पाणि तीव्रमधुरं सौरभं विस्तारयन्ति । तस्मात् मम निद्राव्याघातो जातः ।

अत एव प्रार्थये, मम मत्स्यपेटिकां शीघ्रम् अत्रैव कक्षे आनय ।" आनीतायां तु मत्स्यपेटिकायाम्, सा धीवरपत्नी पेटिकोपरि जलसेचनं कृत्वा मत्स्यगन्धेन प्रपूरिते कक्षे सुखेन निद्रां गता इति । एवमेव

आमिक्षाघृतशर्करादिरचितान् सन्त्यज्य सन्मोदकान्
काकः काङ्क्षति पूतिगन्धिगलितान् काकोदरानादरात् ।
कर्पूरं हविरुग्रगन्धि कुसुमं नैके सहन्ते नरा
लोके वासनया स्वया हि रुचयो भिन्ना भवेयुश्चिरम् ॥

सर्वे—(उच्चैः हसन्ति)

केशवचन्द्रः—(स्वगतम्)अहो आश्चर्यम्! न जाने किं नु संघटितम् । नाहम् अस्मात् स्थानादद्य गन्तुमुत्सहे । जानामि पुनः

ऊर्ध्वं पीयूषवर्षी हसति हिमकरो निम्नतः पुण्यतोया
शान्तस्निग्धोर्मिधन्या वहति कुलुकुलुध्वानतो जह्नुकन्या ।
पूतः स्वर्निम्नगायाः शुचिरपि शशिनः सम्मुखे रामकृष्णो
योगादेतत्त्रयाणां स्थलमिदमभवत् तीर्थभूः काप्यपूर्वा ॥

रामकृष्णः—धर्मप्राण केशव! किं चिन्तयति भवान्; चिरमत्र तिष्ठतु । एष एव समयोऽन्तरङ्गालपनस्य ।

केशवचन्द्रः—देव! सुष्ठु भणितं भवता । भवान् भगवतो मातृरूपस्य उपासकः । मयाऽपि ईदृशं मातृरूपं श्रेष्ठं मन्यते । अस्यां शान्त-स्निग्ध-निशीथिन्यां शान्त-धीर-मूर्तेर्भवत एतन्निगूढ-तत्त्वस्य सारं ज्ञातुमिच्छामि ।

रामकृष्णः—तर्हि श्रृणु । प्राथम्येन सर्वे यूयं वदत- "भागवतो भक्तो भगवान् ।"

सर्वे—"भागवतो भक्तो भगवान् ।"

रामकृष्णः—अस्यार्थः—भगवतः भागवतत्वाद् वेद-पुराणतन्त्रादयः पूजार्हाः । प्रकारान्तरेण भगवान् एव भक्तः यतो भगवान् भक्तस्य हृदय एव वसति । भक्तस्य हृदयमेव तस्य विहारस्थानम् । तस्मिन् लीलानिकेतने

स सर्वदा दृश्यते । ततो भक्तस्य पूजा भगवत एव पूजा । पुनरपि वदत "ब्रह्मैव शक्तिः शक्तिरेव ब्रह्म" ।

सर्वे—"ब्रह्मैव शक्तिः, शक्तिरेव ब्रह्म ।"

रामकृष्णः—यत् यूयं ब्रह्म वदथ, तदेव मम मतानुसारेण माता । "मातः, मातः" । मधुरतमं कोमलतमं स्निग्धतमं, शीतलतमं, पवित्रतमं नाम 'माता' । सा एव आद्या शक्तिः । सा एव आनन्दरसघना । तस्या एव आनन्देन आनन्दमधुरं जगत् ।

आनन्दझङ्कारि पतत्रि-कूजितम्
आनन्दसञ्चारि सुकोमलं तृणम् ।
आनन्दविस्तारि सुशोभनं वनं
सत्यं जगत् सुन्दरसुन्दरं वरम् ॥

गिरीशः—अहो! मधुरिममयी इयं वाणी । भगवन्! अतृप्ता खलु अस्माकं पिपासा । अतोऽपि अधिकं श्रोतुमिच्छामः ।

रामकृष्णः—शृणुत; अयमेव सर्वसाधनस्य परमा चरमा च कथा । "त्वं जननी, अहं तव सन्तानः"—अतोऽधिकं गभीरतत्त्वं किमपि नास्ति । पश्य—

किमिह मधुरमास्ते मातृनाम्नो धरायां
किमिह च कमनीयं वर्तते मातृचित्तात् ।
किमिह भवति शीतं मातुरङ्कादशङ्कात्
किमिह कलुषमुक्तं मातुरङ्घ्रिद्वयाच्च ॥

अत एव, मम भावो मातृभावः, मम साधनं मातृसाधनम्, मम सिद्धिर्मातृसिद्धिः ।

श्री"मः"—धन्या वयं श्रीश्रीरामकृष्णकथामृतासिक्ताः । भगवन्! कृपया शक्तितत्त्वविषये कामपि ज्ञानामृतकणिकाम् अस्मभ्यं देहि ।

रामकृष्णः—ब्रह्म तस्य शक्तिश्च अभिन्ने एव । यथा अग्नेर्दाहिका शक्तिः, सूर्यस्य प्रभा, दुग्धस्य धवलता च । यत् वाङ्मनसयोरतीतं निर्गुणं निष्क्रियम्, तदेव ब्रह्म । यदा तदेव ब्रह्म सृष्टि-स्थिति-लयकार्याणि सङ्घटयति, तदा तत् आद्या शक्तिरिति कथ्यते ।

केशवचन्द्रः—यदि भगवान् एक एव, तदा कथं धर्मविषये एतादृशा वादविसंवादा वर्तन्ते?

रामकृष्णः—तत्तु अज्ञानस्य विषमयं फलम् । वस्तुतः वस्तु एकमेव, केवलं नामानि भिन्नानि । यथा वारि, प्राणहेतुकं स्निग्धसुशीतलं वारि एकमेव, शाश्वतकालम् अभिन्नसत्त्वम्; किन्तु केवलं नामानि भिन्नानि—"जलं", "पानि", "वाटर्" इत्यादिक्रमेण ।

अत एव, तस्यैवाद्वितीयस्य वस्तुनो लाभार्थं बहव उपाया वर्तन्ते । "यावत्सङ्ख्याकानि मतानि तावत्सङ्ख्याकाः पन्थानः" इति । यथा—पटलोपरि गमनाय नानाविधा वर्तन्ते उपायाः—सोपानम्, वंशदण्डः, रज्जुः इत्यादयः, तथा भगवत्प्राप्तये उपाया अपि बहवः, प्रत्येको धर्मः स्वतन्त्र उपाय एव ।

लाटुः—भगवन्! सिक्तं हृदयम् अस्माकं भवद्वाणी-सुधाधारया ।

नरेन्द्रः—अन्योऽपि कश्चन प्रश्नोऽस्ति ।

रामकृष्णः—प्राणानन्द! स्वच्छन्दं ब्रूहि ।

नरेन्द्रः—धर्मसाधनस्य मूलमन्त्रः कः?

रामकृष्णः—अतीव सरलः प्रश्नः, एकेन वाक्येनापि अस्योत्तरं दातुं शक्नोमि । तद्धि "जीवपूजामाध्यमेन शिवपूजा" इति । ईश्वरो हि सर्वजीवेषु वसति; ततो जीवानाम् आराधना सेवा च ईश्वरस्यापि आराधना सेवा च । एष एव सर्वश्रेष्ठो धर्मः ।

श्री"मः"—देव! केचन वदन्ति—स्त्रिया सह सन्न्यासधर्माचरणं शास्त्रविरोधि स्वतोविरोधि च । भवांस्तु तत्र एक एव महान् व्यतिक्रमः । अतो भवतो ज्ञातुमिच्छामि—साधनमार्गे नारीणां स्थानं कीदृशमिति?

रामकृष्णः——अस्मच्छास्त्रानुसारेण नारीणाम् अधिकारः पुरुषतुल्य एव । वस्तुतः—जगति सर्वा नार्य आद्यायाः शक्तेर्मूर्तप्रतीक एव । जगज्जनन्याः पूर्णविकासो नार्याम् । अत एव परिचारिकां वृन्दामपि नाहं कदापि भर्त्सयितुं शक्नोमि ।

श्री"मः"——अहो महानुभावता देवस्य?

रामकृष्णः——भूयोऽपि शृणु । स्त्रिया सह सन्न्यासधर्माचरणे का बाधा? वस्तुतः विद्यारूपिणी स्त्री, अविद्यारूपिणी च । विद्यारूपिणी स्त्री भगवत्सकाशं नयति, अन्या तु ईश्वरं विस्मारयति, संसारपङ्के निमज्जयति च ।

नरेन्द्रः—(स्वगतम्) अहो ! आश्चर्यकरी खलु नारीजातिं प्रति देवस्य सम्माननना । अत एव देवेन स्वीकृता साधनसमये गुरुरूपेण भैरवी योगेश्वरी । मातुः सारदामणेश्चरणे एव पूजाच्छलेन समर्पितं साधनफलं समग्रमेव फलहारिणीकाल्याः पूजादिवसे । एतस्य सर्वमेव असाधारणम् अचिन्तनीयम् अपूर्वञ्च ।

केशवचन्द्रः——महाभाग ! अधुना अहं विदायं प्रार्थये ।

रामकृष्णः——भक्तश्रेष्ठ केशव ! क्षणं तिष्ठ । सर्वे वदत—"गुरुः कृष्णो वैष्णवः"

सर्वे——"गुरुः कृष्णो वैष्णवः"

केशवचन्द्रः——नाहं तावत्पर्यन्तं प्राग्रेसरो भविष्यामि । सर्वे मां वैष्णवं कथयिष्यन्ति ।

रामकृष्णः—(विहस्य) बाढम् । भवतु दीर्घकालव्यापिनी निगूढालोचना सुकठिनैव । ततस्त्वं नरेन्द्र ! एकेन सङ्गीतेन अस्माकं श्रोत्रविनोदनं कुरु ।

नरेन्द्रः— (गायति)

जननि मुक्तकेशि ! स्मितं ते मर्मविकासि ।
कमचरण-कमले पावन-दामिनीराशिः ॥

निर्जन-गिरि-कन्दरे
विश्वमातः सारात्सारे !
स्फुरति ते रूपं वरं ततो मुनिर्गुहावासी ॥
गले तव मुण्डमाला ।
रसना ग्रसनलोला ।
श्मशान-निलये ततो राजते वर-सन्न्यासी ॥

महादेव-शवारूढे !
शिवे चिरशुभङ्करे? !
तामस-वसनधरे ! हस मातर्घरोल्लासि ! ॥

[केशवचन्द्रः प्रस्थानं नाटयति]

**रामकृष्णः**—अहो ! मधुरिममयी इयं मातृवन्दना ।

**लाटुमहाराजः**—किन्तु मुक्तकेशी सा माता साम्प्रतं कुत्रास्ते ?

**रामकृष्णः**—अपि न जानासि? यस्याः साहाय्यार्थं त्वं सन्ध्यासमये नहवतखानायां स्वयमेव सार्ध-त्रि'सेर'परिमितं सक्तुचूर्णं पाकयोग्यं कृतवान्, सा त्वया न ज्ञाता? पञ्जरस्था पक्षिणी सा स्वेच्छया भुवि अन्तरिक्षे च सर्वत्र यातुं शक्नोति, सर्वेषु भूतेष्वपि सैव मातृरूपेण राजते। सा मम परमा शक्तिः। यूयं सर्वे तां पश्यत—नहवतखानातः सा सारदा सारदायिनी अस्मान् वंशावरणच्छिद्रपथेन पश्यति सर्वदा, किन्तु वयं तां लज्जापटावृतां स्वरूपतो न पश्यामः। एषैव शक्ते रीतिः। जननी सर्वभूतभाविनी संरक्षिणी च ईदृशी एव।

**सर्वे**—परमजननीं वन्दामहे ।

कृपापारावारं शिवहृदयहारं पुरजिता
सहानन्दोद्दामां जलभृदभिरामां स्मितमुखीम् ।
वितन्वानां दीने निखिलगुणहीनेऽपि करुणां
नुमः कामप्येनां जितदनुजसेनामसिकराम् ॥

श्रीश्रीपरमहंसदेवप्रकाशितस्य मातृतत्त्वस्य सैव एकाधार भूता भूयो भूयो मातरं साष्टाङ्गं प्रणमामः ॥

रामकृष्णः—नरेन्द्र ! पुनरपि मातृस्तुत्याऽस्माकमानन्दवर्धनं कुरु ।

नरेन्द्रः—(गायति)

जननी मानवजीवनसर्वस्वम्
धमनी-वहने प्राणेऽपाने
जागरणेऽथवा किं वा स्वपने
ज्योतिर्जननी विश्व-लोकने
योगक्षेमे नित्यसाधने ॥

मदीय-जननी मूर्त-साधना
धारणैषणा भजन-कामना ।
आसु सर्वासु नित्यप्रधाना
परात् परा सा विश्वतुलना ॥

(श्रीरामकृष्णः समाधिग्रस्तः आस्ते)

॥ सप्तमोऽङ्कः समाप्तः ॥

## ॥ अष्टमोऽङ्कः ॥

स्थानम्—काशीपुर उद्यान-वाटी ।

कालः-सन्ध्या ।

श्रीरामकृष्णः—(गायति)

जननी ब्रह्म हि भरणी शक्तिः ।
जननी ह्रीशः परमा भक्तिः ।
जननी स्वर्गः केवलमुक्तिः ।
जननी त्यजनं चरमा भुक्तिः ॥

श्रीसारदा—भगवन्! रोगक्लिष्टकण्ठस्य ते सङ्गीतं परिहर्तव्यमेव। पाणिहाटी-धाम्नि सङ्गीतानन्तरमेव तव कण्ठरोगः समधिकं वृद्धिं गतः। तस्मात् कृपया सङ्गीतं भवता परिहर्तव्यम्।

रामकृष्णः—अपि सङ्गीतं मया स्वेच्छया कृतम्? नैतन्मे कण्ठगीतं, नापि वा स्वरो मे स्वक एव। वाणीयं मे आनन्दस्वरूपिण्या जनन्याः। सा मां वाचयति इत्यतोऽहं वच्मि; सा गापयति माम् इत्यतोऽहं गायामि। सा मां नर्तयति इत्यतोऽहं नृत्यामि। यन्त्रमहमसौ यन्त्रिणी। कोऽहम्? असौ एव सर्वम्।

मा त्वं चिन्तय। मातृनामोच्चारणेन सन्तानस्य कदापि अनिष्टं न जायते।

श्रीसारदा—तद् भवतु नाम। नारी मूर्खाऽहम्। मम बुद्धेरगम्यम् एतत् सर्वम्।

रामकृष्णः—(विहस्य सादरम्) त्वं मूर्खा चेत् पण्डितः कः? मया तु सततमेव उक्तम्—"त्वं सारदा सारदायिनी विद्यादायिनी सरस्वती" इति;

कदाचन समविषयके समालोचने विद्यासागरो मयेत्थमुक्त आसीत्—पाण्डित्यम्? केवलपाण्डित्येन, किं भविष्यति? गृध्रोऽपि ऊर्ध्वम् अत्यूर्ध्वं विचरति। किन्तु दृष्टिस्तस्य जङ्गलं प्रति, यत्रासते गलितमृतदेहाः। पण्डिताः पुस्तकस्थां विद्यामाम्रेडयन्ति सत्यम्, किन्तु मनांसि तेषां कुत्र? हरिपादपद्मयोर्लीनं पण्डितं कामं स्वीकरोमि; किन्तु कामिनीकाञ्चनासक्तमहं तृणायैव मन्ये।"

अतो हरिपादपद्माश्रितायास्तव पाण्डित्येन किम्?

श्रीसारदा—देव! एतत्तव आदरप्रचोदितं वाक्यमेव। तुच्छातितुच्छाहं तव पादपद्मयो रेणुकैव।

शृणु भगवन्! रोगस्तव स्वेच्छया जातः। त्वमेव अपसरणक्षमः, यतो भवान् स्वयं ब्रह्मस्वरूपः। तत् कथं भवता कष्टमेतद् आत्मनो न दूरीक्रियते? न स्वस्य हेतोः, परन्तु अस्माकं सर्वेषां कृते।

रामकृष्णः—सर्वमङ्गलमङ्गल्ये! त्वमेव सुस्थिरं जानासि—मम आत्मेच्छानामकं वस्तु नास्ति; सर्वमेव मया इच्छामय्याः श्रीचरणयोर्निवेदितमिति। त्वं स्वयमेव कथितवती–तारकेश्वरे यदा त्वमात्महत्याप्रतिज्ञापूर्वकम् आत्मानं भगवत्पादपद्मयोर्निवेदितवती, तदा त्वदीयानि मृन्मयपात्रादीनि स्वत एव विनष्टानि, तेनैव सुविज्ञापिता भागवती इच्छा। मृत्तिकादिपञ्चभूतजो जडदेहोऽयं पञ्चभूतेष्वेव निलीनो भविष्यति। किन्तु आत्मा शाश्वत एव। तस्मात् व्यतीते आयुष्काले इच्छामय्या इच्छया यदि मृदादिनिर्मितोऽयं जडदेहः पतति न त्वं व्याकुला भवेः।

श्रीसारदा—(क्रन्दनरता)अहो! किं नु मम भवेत्? त्वद्विरहिता नाहं मुहूर्तकमपि स्थातुमत्र शक्नोमि। धमन्यां मम रक्तप्रवाहोऽसि त्वम्! श्वासे प्रश्वासे च त्वम्, अणौ परमाणौ च त्वम्। त्वमेव मम प्राणाः, मनः, आत्मा, जीवनं च। चिराय गते त्वयि कथम् अहं जीविष्यामि? मा गच्छ। गच्छसि चेत् मामपि सहैव नय।

रामकृष्णः—सर्वसाधिके! जनगणशरण्ये! मा पर्याकुला भूः। तव क्लेशादहं नितरां क्लिश्ये। हृदयम् एकदाहं अवदम्—आनन्दमय्यास्तव अश्रु यदा भूतले पतेत्, पृथिवी तदा ध्वंसमियात् इति। क्रन्दनातुरां त्वां नाहं द्रष्टुमिच्छामि, न च त्वदनुमतिव्यतिरेकेणाहं निर्गमनं काङ्क्षामि। ततः शान्ता भव, धैर्यं धर, तव प्रसन्नां स्निग्धां चिरहास्यविमण्डितां मूर्तिं द्रष्टुमिच्छामि।

श्रीसारदा—(अश्रूणि संवार्य स्वगतम्) धिङ् माम् या नाथस्येदृशमन्तर्दाहं ज्वालयामि। तस्यैव इच्छा विजयताम्। नाहं तमश्रुनिषेकादिभिः पर्याकुलयिष्यामि। स्वार्थपरायणा कथमहं भवेयम्? (श्रीरामकृष्णमुद्दिश्य) क्षमस्व माम्। स्त्रीसुलभा दुर्बलता मामुत्तरलामकरोत्। कठोरः परीक्षादिवसोऽयं मम। तथा आशिषो मह्यं देहि, यथा जीवनयुद्धे नाहं पराजिता भवेयम्।

पश्य! अश्रूण्यहं नेत्रयोर्निष्कासयामि, रोदनशब्दमपि स्थगयामि। पश्य! नाथ! सारदायास्ते शान्तां मूर्तिम्।

अद्य केवलं प्रार्थये—ब्रूहि तमुपायं येन त्वामहं सुष्ठुतमं सेवेय । कथं सेवाधर्मे प्रवर्तिष्ये, सार्थकता मे जीवनस्य कथं नु भविता? का वा ते शेषवाणी—सानुग्रहं ब्रूहि । तस्या झङ्कारेणैव झङ्कृतां करिष्यामि हृदयवीणाम् । तवैव दिव्यालोकात् प्रज्वलयिष्यामि मम मानसदीपम् । तवैव सुधया जीवनं मे सुधासंवलितं करिष्ये । ब्रूहि कस्तवादेशः कश्चोपदेशः?

श्रीरामकृष्णः—सुभगे! नायं मे आदेश उपदेशो वा । परम् एष मेऽनुरोधः—

"यदा कायं विहास्यामि, तदा त्वमपि शरीरं मा त्याक्षीः । कर्तव्यभारो न केवलं मम, तवापि । ईश्वरं विस्मृत्य, अन्याय्यमाचर्य्य लोकाः सर्वे कृमय इव विचेष्टन्ते, सातिशयकष्टैः प्रपीड्यन्ते । तेषां संरक्षणं त्वं कुरु, ईश्वराराधनं च तान् शिक्षय, तेभ्यः शक्तिं देहि, देहि च भक्तिम् । सममेव कार्यं कर्तुम् आवाम् आगच्छाव । किं वा मया कृतम्? असमाप्तानां मदीयकर्मणां समापनं त्वयैव करणीयम् ।

श्रीसारदा—अनन्तोऽपारो महासमुद्रस्त्वम्, तत्राहं केवलम् एको जललव एव । सुकठोरम् अवशिष्टं कर्तव्यं कथं मया एकाकिन्या समापयिष्यते?

श्रीरामकृष्णः—शरण्ये देवि! न त्वं बिन्दुः, त्वं सिन्धुरेव । त्वमेव मे शक्तिः, मम साधना, मम सिद्धिश्च । जीवनव्रतं मे त्वय्येव प्रमूर्तं जातम् ।

श्रीसारदा—(स्वगतम्) अहो! सहजसुभगसार्वभौमत्वं नाथस्य!

श्रीरामकृष्णः—एकाकिनी त्वं कदापि न स्थास्यसि । सर्वचराचरेषु प्रमूर्तं मां नितरां सर्वत्र द्रक्ष्यसि, तेषां सेवनमाध्यमेन ममापि संसेवनं संस्पर्शनञ्च अवश्यमेव भविष्यति । सर्वेषु निःशेषं निलीना त्वं सर्वभूतेषु गूढं प्रविष्टा त्वं सर्वभूतान्तर्गूढं मां सर्वदाऽन्तिके द्रक्ष्यसि, आवां सहैव स्थास्यावः । न केवलं तत्, आवामेकीभविष्यावश्च ।

परम् एकत्वेऽपि आवयोः पुत्रकन्याविषये तु त्वमेव गरीयसी, पितुरपेक्षया मातुः सदैव गरीयस्त्वात् । त्वं सर्वेषां माता कालक्रमेण तद्रूपेण

परिचिता भविष्यसि । सर्वान् मुक्तेः शान्तेः सिद्धेः ऋद्धेश्च पथि त्वं चालयिष्यसि ।

"जननी" "विश्वस्य जननी" इत्येषैव ते सुसदृशी परिचितिः ।

श्रीसारदा—कृतकृत्याऽस्मि । येयं सारदा एतावत्कालपर्यन्तं तव श्रीचरणलीना आसीत्, सा अद्य प्रभृति विश्वजनचरणेषु निवेदिता भविष्यति । महामङ्गलमयपरमदेवदेव ! विजयतां तवेच्छा । मह्यं शक्तिं देहि, आत्मनः पथि च मां चालय । सर्वा मे न्यूनता करुणावरुणालयेन त्वया क्षन्तव्या ।

श्रीरामकृष्णः—कल्याणि ! कल्याणं ते भूयात्, भवतु च विश्वस्य अक्षय्यं कल्याणम् । ऊर्ध्वगगने विचरतु तव जीवनयज्ञस्य होमाग्निशिखा, तेन देदीप्यतां च निखिलं जगत् । प्राणपात्रं ते आनन्दपरिपूर्णं जायताम्, तेन च विश्वमानव आनन्दी भवतु । तव चित्तशतदलसञ्जातममृतं जगत् मधुमयं करोतु । विश्वजननि ! सारदे ! विश्वस्य प्रणामभाजनं भूयाः ।

श्रीसारदा—प्रणमामि विश्वदेवतां विश्वजननीञ्च । विश्वलीनं विश्वातीतं भगवन्तं त्वाञ्च भूयो भूयः प्रणमामि

(सङ्गीतम्)

जननि परकल्याणि ! परात् परे प्रसादिके ।
कालात् कालो लयं याति त्वय्येव कालिकेऽम्बिके ।

महाधूम्रा महागौरी महामेधा महाधृतिः ।
महाशान्तिर्महाक्षान्तिर्महाश्रुतिर्महास्मृतिः ।
त्वमेव प्रेम सर्वस्वं जगद्धारणकारिणी ॥

अहो कालीरूपम् !

माता पिता स्वसा भ्राता सर्वमङ्गलसाधिके ।
स्फुलिङ्गिनी महादीप्तिस्त्वमेव जगदम्बिके ॥

शिवस्त्वमसि कृष्णस्त्वं रामो नृमुण्डमालिनि !
प्रकृतिः पुरुषश्च त्वं व्यक्ताव्यक्त-स्वरूपिणी ।

आद्या शक्तिर्जगद्रूपा मुरलीधरमोहिनी ।
लक्ष्मीस्तारा सती दुर्गा शक्तिपाशासिधारिणी ॥

**श्रीरामकृष्णः**—देवि! अतः परं ते किं प्रियं करोमि!

**श्रीसारदा**—देव इतोऽपि किं प्रियं स्यात्? तथापीदमस्तु ।

भवन्तु सुखिनः सर्वे मातृलीलाप्रसङ्गिणः ।
मधु क्षरतु सर्वत्र जगन्मधुमदस्तु नः ॥

(भरतवाक्यम्)

मातृमणे त्वां नमामि ।

युगयुगान्तरं तव लाभपरं लसति भारतं भूमिः ॥

अम्बा अम्बालिका कन्या कुमारिका कात्यायनी मातङ्गिनी ।
शताक्षी चण्डिका भीमा भ्रामरिका रुद्राणी शिवा कल्याणी ॥

जननि! त्वं हि सारदामणिः ।

आविरोधि मयि मातः स्नेहमयि तनयस्ते दर्शनकामी ।
श्वासे च प्रश्वासे भावनाविन्यासे मातृचरणानुगामी ॥

नहवतखान-नीलाम्बरोद्यान-पावनीं शरणं प्रयामि ।
भक्तिप्राणधनं चरणसंबलं त्रायस्व मातस्त्वां प्रणमामि ॥

जननि! त्वां प्रणमामि ।
मातृमणे! त्वां नमामि ॥

ओं शान्तिः शान्तिः शान्तिः ।

समाप्तमिदं शक्तिशारदं नाम नाटकम् ॥

# कुचेलवृत्तं नाम सङ्गीतप्रेक्षणकम्

देवकी मेनन्

॥ प्रथमोऽङ्कः ॥

(नेपथ्ये मङ्गलश्लोकौ गीयेते)

अवतारैर्यथाकालं धर्मरक्षां करोति यः ।
तं वन्दे मुरलीगानलोलं गोकुलबालकम ॥

द्वारकेशं दयासिन्धुम् वारिजापरिसेवितम् ।
पारिजातं प्रपन्नानाम् प्रणमामि मुहुर्मुहुः ॥

(ततः प्रविशति मद्रपुर्यां मेरीराज्ञीकलाशालायाः नाट्यविभागस्य कार्यदर्शिनी कलावती नाम विद्यार्थिनी)

कालवती—(नेपथ्याभिमुखमवलोक्य)

सखि प्रभावति ! त्वरितमागम्यताम् ।

(ततः प्रविशति प्रभावती संस्कृतविभागस्य कार्यदर्शिनी)

प्रभावती—सखि ! इयमस्मि ।

कलावती—त्वयाद्य कलाशालायाः वार्षिकोत्सवे गैर्वाण्यां किं वा प्रदर्शनं सज्जीकृतम् ?

प्रभा०—कुचेलवृत्तं नाम प्रेक्षणकम् ।

कला०—सखि ! नाहं देवभाषाभिज्ञा । तथाप्येतद्वक्तुकामास्मि । पुराणवस्तुनि कुचेलवृत्ते का वाभिरुचिः स्यादाधुनिकानाम् । नवनववस्तुरताः हीदानीन्तनाः ।

प्रभा०—सखि ! न मया यथेष्टं स्वीकृतमेतत्प्रेक्षणकम् । परं तु तत्रभवतीभ्यां अस्माकं कलाशालाध्यक्षया, संस्कृतोपाध्यायिन्या च नियुक्तास्म्येतस्मिन् प्रयोगे । अपरं च, एतत्प्रेक्षणकम् अस्मत्संस्कृतविभागस्य पूर्वाध्यापिकया नवीनरीत्या रचितम् । तन्मा भूत्ते आशङ्का ।

पुराणमित्येव न मन्दशोभं
न चापि सर्वं नववस्तु हृद्यम् ।
प्राचीनवस्त्वाश्रितमप्यनिन्द्यं
मार्गे नवीने प्रसृतं हि काव्यम् ॥

कला०—सखि ! अस्ति मे कौतूहलम् । कीदृशी सा नवीना रीतिः ?

प्रभा०—ननु जानासि आङ्गलभाषायां ओपेर (opera) इति प्रतिद्धः प्रचुरसङ्गीतविशिष्टो नाटकाभिनयः । एतत्सरण्या निबद्धा खलु प्रस्तुता कृतिः ।

कला०—सखि ! न त्वं केवलं प्रभावती, किंतु प्रतिभावती च । तत्तवास्मिन्नुद्योगे विजयं प्रति न मे विद्यते सन्देहः ।

(मणिबन्धघटितसुवर्णघटिकां निरीक्ष्य)

सखि ! अल्पो हि समयोऽवशेषित उत्सवारम्भाय । तद्गच्छामि । त्वमप्येहि शीघ्रम् ।

प्रभा०—तथा । (निष्क्रान्ता कलावती)

प्रभा०—(सावेगं) न मया न कृतः प्रयत्नः कुचेलवृत्तस्य नूतनाभिनयविषये । तथापि न मे मनः प्रत्येति कार्यसिद्धिं प्रति । तद्विद्वांसः सामाजिकाः विद्यार्थिनीनामस्माकम् अभिनयवैकल्यानि क्षमया मर्षयन्त्विति सप्रश्रयं प्रार्थये ।

यथा हि देवदेवेन शबर्याः खादिते फले ।
क्षुद्रे च पृथुके सख्युः परा प्रीतिः प्रदर्शिता ॥
तथा सामाजिकैः सद्भिः सक्षमैश्च हितैषिभिः ।
न्यूनेऽप्यस्मत्समुद्योगे प्रीतिरत्र प्रदर्श्यताम् ॥

(निष्क्रान्ता)

॥ प्रस्तावना ॥

(कुचेलस्य जीर्णगेहस्यैकदेशे भगवदाराधनस्थानम् । ततः प्रातः प्रविशन्ति दुर्बलाः कुचेलपुत्राः भगवद्भजनाय)

(गानम् - आरभिरागेण)

जय जय देव दयापर सुन्दर ।
जय निजलीलापूतवसुन्धर ॥

देवकीतनय द्वारकानिलय ।
देव दयालय मां परिपालय ॥
जय, जय ।

सरसिजनयन दरस्मितवदन ।
वरमणिमण्डलमण्डितमण्डन ॥
जय, जय ।

नवजलधरश्यामानवमहाराभिराम ।
नवरससुललित अव रमाराम ॥
जय, जय ।

मधुरमुरलीगान-मधुरसपाने ।
मधुकरायते मतिर्मम मधुराजने ॥
जय, जय ।

ललितगोपीजनाकलितपादार्चन ।
गलितपापानिमान् कलय जनार्दन ॥
जय, जय ।

(निष्क्रान्ताः सर्वे)

---

॥ द्वितीयोऽङ्कः ॥

नेपथ्ये—

प्रातराराध्य बालास्ते मुरारिमघनाशनम् ।
प्राधावन् प्रातराशार्थं मातुर्निकटमुत्सुकाः ॥

(कुचेलगेहे महानसम्)

(ततः प्रविशति प्रातः स्नाता भूमावुपविष्टा पूजार्थं पुष्पमालां गुम्फन्ती कुचेलपत्नी । बुभुक्षिताः पुत्राश्च तन्निकटं धावन्ति ।)

पुत्राः सर्वे—अम्ब! भगवदाराधनं समाप्तम्। बुभुक्षिताः खलु वयम्।

(गानम् - कापिरागेण)

प्रथमो बालः—(मातरमालिङ्ग्य)—

मोदकं देहि मह्यम्, अम्ब! मोदकं देहि मह्यम्।

मोदकं यदि नास्ति गेहे खादितुं किमपि देहि॥

द्वितीयः—(परिक्रम्य)

मोदकं नास्ति चेद्दीयताम्।

ओदनं पयसा परं शोभनम्॥

तृतीयः (रुदन्) ओदनं नास्ति चेद्दीयतां सत्वरम्।

खादितुं किञ्चिदम्ब वरम्—यत्किञ्चिदम्ब! वरम्॥

चतुर्थेन सह इतरे बालाः (भाजनानि रिक्तानि विलोक्य)

(धन्यासिरागेण)

अम्ब देहि कुमाराणामस्माकं मिष्टभोजनम्।

न वयं क्षुधया तप्ताः भुवि जीवितुमुत्सुकाः॥

कुचेलपत्नी— (उत्थाय, अश्रूणि प्रमृज्य स्वगतम्)

(मुखारिरागेण)

का माता विद्यते लोके मादृशी मन्दभागिनी।

या न शक्ता स्वपुत्राणां प्रियाणां परिपालने॥

क्लेशयामि कथं कान्तं विषयास्पृष्टचेतसम्।

श्रीपते! पाहि ते भक्तान् पुत्रांस्त्वच्चरणाश्रितान्॥

(निष्क्रान्ताः सर्वे)

---

॥ तृतीयोऽङ्कः॥

(कुचेलगेहे पूर्वनिर्दिष्टं भगवदाराधनस्थानम्)

(ततः प्रविशति उपविष्टः कुचेलः जपमालाहस्तो भगवन्नाम जपन्)

नेपथ्ये—

इत्थं सती प्रतिदिनं परितापभारं
पुत्रोपजीवनकृते क्षमया वहन्ती ।
तस्मिन् दिने निजपतिं यदुनाथभक्तं
वक्तुं यथार्थमखिलं विधिना नियुक्ता ॥

(ततः प्रविशति पुष्पमालाहस्ता कुचेलपत्नी, कृष्णविग्रहे च मालामर्पयित्वा देवं प्रणम्य उत्तिष्ठति ।)

कुचेलः—(विषण्णवदनां पत्नीं वीक्ष्य सादरम्)

प्रिये! किमस्वस्थचित्ता इव वर्तसे । किं वक्तुकामासि?

पत्नी—आर्यपुत्र! मर्षयतु भवानप्रियनिवेदनम् । श्रूयतां तावत्—

(गानम्-हुसेनिरागेण आदितालेन)

प्राणनाथ पुण्यकीर्ते ज्ञाननिधे अखिलजग-
त्त्राणपरायणदेवप्राणमित्र नमोऽस्तु ते ॥
प्राणधारणायार्थना नूनमत्र न शोभना ।
दीनकारुण्यहीना अहो भुवि भूरिजनाः ॥
क्षुत्कृशा अतिदीना बाला हृत्परं मे खेदयन्ति ।
दुर्बला हि केलीष्वपि तत्परा न भवन्ति ॥
कामितवरदायकं कामसमं रमानाथम् ।
तान्तजनपोषणार्थं कान्त, गत्वाद्य नम तम् ॥

कुचेलः—(उत्थाय, पत्नीम् उपसृत्य प्रशान्तः सन्)

(गानम्-कल्याणीरागेण, त्रिपुटतालेन)

चारुचरिते शुभे कातरा मा भव ।
कारुणिकः साधुरक्षको माधवः ॥
मानधनादयो मानसमोहनाः ।
मा-रमणे रतिरामयशोषणा ॥

भक्तजनावनकृत्यपरे हरौ ।
वक्तव्यमत्र किं भद्रे मुरारौ ॥
प्रार्थनां किंतु ते व्यर्थां न करोमि ।
पार्थसखं यामि कृतार्थो भवामि ॥

**पत्नी**—(सहर्षम्) आर्यपुत्र !

मा गच्छ रिक्तपाणिस्त्वं भगवत्पादसन्निधिम् ।
तदाहरामि यत्किञ्चित् श्रीकान्तमुपसेवितुम् ॥

**कुचेलः**—प्रिये, साधूक्तं त्वया, तथा क्रियताम् ।

(निष्क्रान्ता पत्नी ।)

(कुचेलः जपमालां करे धृत्वा भगवन्तं स्मरन् तिष्ठति । पत्नी वस्त्रखण्डे बद्धं किञ्चित्पृथुकमादाय पुनः प्रविश्य भर्तुर्हस्तयोर्भक्त्या समर्पयति ।)

**पत्नी**—आर्यपुत्र !

अल्पं पृथुकमप्येतद् अनल्पफलदायिने ।
अच्युताय प्रदायास्मै भवेम च्युतकिल्बिषाः ॥

**कुचेलः**—प्रिये !

यद्वै भगवते दत्तम् भक्तेन श्रद्धयान्वितम् ।
माधवो हि प्रसन्नात्मा तदश्नात्यमृतोपमम् ॥

(निष्क्रान्तौ)

---

॥ चतुर्थोऽङ्कः ॥

**नेपथ्ये**—अथ स मुदितपत्न्या चीरखण्डे निबद्धं
किमपि पृथुकजातं गोपयन् बाहुमूले ।
अखिलमुनिभिरीड्यं द्रष्टुकामोऽब्जनेत्रं
महितसुरपुराभां द्वारकां प्रत्ययासीत् ॥

(द्वारकापुर्या राजपथः)

(ततः प्रविशति पथिकः कुचेलः)

कुचेलः—(परिक्रम्य)

नमो विश्वस्वरूपाय विश्वस्थित्यन्तहेतवे ।
विश्वेश्वराय विश्वाय गोविन्दाय नमो नमः ॥

नमो विज्ञानरूपाय परमानन्दरूपिणे ।
कृष्णाय गोपीनाथाय गोविन्दाय नमो नमः ॥

(निष्क्रान्तः)

(द्वारकापुर्यां रुक्मिणीदेव्या अन्तःपुरम्)

(ततः प्रविशति रुक्मिणीदेव्या सह आसनस्थः कृष्णः)

(कुचेलः प्रविश्य प्रासादस्य बहिर्द्वारि तिष्ठति)

कुचेलः—नमः कमलनेत्राय नमः कमलमालिने ।
नमः कमलनाभाय कमलापतये नमः ॥

रुक्मिणी—(कर्णं दत्वा, अङ्गुल्या निर्दिशन्ती)

आर्यपुत्र! पश्यतु भवान्, कोऽपि द्विजवरो भवन्तं स्तुवन् बहिर्द्वारि तिष्ठति ।

भृशं कृशाङ्गोऽपि महान्तरङ्गः
सुचेलहीनोऽपि रुचेरहीनः ।
कोऽयं द्विजातिस्त्वयि भक्तिनम्रः
सत्त्वं गुणो मूर्त इवाभ्युपैति ॥

(भगवान् कुचेलं दृष्ट्वा ससम्भ्रममासनादुत्थाय प्रत्युद्गन्तुं प्रवृत्तः ।)

रुक्मिणी—आर्यपुत्र! सम्भ्रान्त इव भवान् कुत्र गच्छति ?

(निष्क्रान्तः कृष्णः)

रुक्मिणी—अये! गतो भगवान् स्वयमेव द्विजमानेतुम् ।

(निष्क्रान्ता रुक्मिणी)

नेपथ्ये—

दृष्ट्वा द्वारमुपागतं द्विजवरं त्यक्तासनश्च स्वयं
गत्वा सत्वरमालिलिङ्ग सुहृदं सुस्मेरवक्त्राम्बुजः ।
हर्षोत्फुल्लमतिं वृतं च पुलकैर्भक्त्या च बद्धाञ्जलिं
नीत्वान्तःपुरमातिथेयममितं चक्रे कृपावारिधिः ॥

(ततः प्रविशति कुचेलहस्तमवलम्ब्य कृष्णः, अर्घ्यादिकमादाय रुक्मिणी, वृद्धः कञ्चुकी च)

कृष्णः—सखे कुचेल! अत्रार्धासनमलङ्करोतु भवान् ।

(कुचेलः अपसरति भक्त्या । कृष्णः अनिच्छन्तमपि कुचेलं बलादुपवेशयति पर्यङ्के । रुक्मिणी अतिथिं यथाविधि पूजयित्वा तालवृन्तेन वीजयति ।)

कञ्चुकी—(एतदवलोक्य साश्चर्यम्)

सेवमानो ह्यहं देव्या पुरे वार्द्धकमागतः ।
दृष्टपूर्वं न देवस्य भक्तवात्सल्यमीदृशम् ॥

(गानम्-कमाश्-रागेण आदितालेन)

कञ्चुकी—भाग्यवतां वरोऽयम्

जन्मजन्मकृतपुण्यमूर्तिरयम्        भाग्यवतां वरोऽयम् ।

देवमुनिवराणामप्यसुलभं पदं
पावनचरितेन साधुनासादितम्        भाग्यवतां वरोऽयम् ।

अर्धासनास्थितो विश्वनाथेन समम्
अर्घ्यपूजितः श्रिया वीजितः सादरम् भाग्यवतां वरोऽयम् ॥

(भगवान् कुचेलं तोषयति तयोर्गुरुकुलवासानुस्मरणेन)

(गानम्-काम्बोदिरागेण आदितालेन)

कृष्णः—शोभनवासरमेतदहो सखे ।
शोभनवासरमेतदहो सखे ॥

साधुसमागमनमतिक्रमनीयम् ।
तत्तु सुहृदो यदि किमु कथनीयम् ॥

उषितयोरावयोर्गुरुवरसद्मनि ।
स्मरति भवान् किं तानि दिनानि ॥

इन्धनार्थं सखे काननयानम् ।
सन्ततवर्षान्निशि व्यतियानम् ॥

मुनिवरेणावयोरथ परिमार्गणं ।
स्मरति भवान् किं तानि दिनानि ॥ शोभनवासरम् ।

(भगवतः सौहार्दप्रदर्शनेन भक्तिपरवशः अवचनः कुचेलः सन्तोषाश्रूणि विसृजति ।)

नेपथ्ये—निपीय वाक्यानि सुधामयानि
नाथेन विश्वस्य समीरितानि ।
आनन्दबाष्पैर्नवपुष्पकल्पै-
रर्चामिवादाद्विभुपादमूले ॥

नेपथ्ये—एवं मुकुन्देन परं सभाजितः
श्रिया समेतेन स विप्रसत्तमः ।
कथं नु दद्यां पृथुकं रमापते-
रिति प्रहृष्टोऽपि समाकुलोऽभूत् ॥

सद्योऽवगम्य भगवान् प्रणतार्तिहन्ता
भक्तोत्तमस्य हृदयं प्रहसन्नवोचत् ।

कृष्णः—"कच्चिन्न मेऽस्त्युपहृतं भवताद्य किंचित्
भक्तैर्जनैर्बत सखे किमदेयमस्ति ॥"

नेपथ्ये—एवं मुकुन्देन कृतानुयोगो
ह्रिया न दातुं स बभूव शक्तः ।
हरिश्च तस्मात् पृथुकं जहार
प्रदर्शयन् गोकुलबाललीलाम् ॥

(भगवान् लज्जयावनतमुखस्य कुचेलस्य' बाहुमूलात् पृथुकं बलाद् हृत्वा, तस्मादेकं मुष्टिं करे धृत्वा भक्षयितुं प्रवृत्तः ।)

नेपथ्ये—अहो कुचेलः सुकृती यदस्य
जघास कृष्णः पृथुकस्य मुष्टिम् ।

(कृष्णः पृथुकस्य द्वितीयं मुष्टिं गृह्णाति)

नेपथ्ये—पुनश्च भोक्तुं पृथुके गृहीते
जग्राह पाणिं कमला स्वभर्तुः ॥

(रुक्मिणीदेवी भगवतः करं सहसा गृह्णाति । भगवान् सस्मितं विलोकयति ताम् ।)

रुक्मिणी—भगवन्! अलमलमेकेन मुष्टिना ।
प्रतिप्रदातुमेकस्य मुष्टेरपि न मे श्रियः ।
भक्तेष्वमितवात्सल्यान्न मां विस्मर्तुमर्हसि ॥

नेपथ्ये—भक्तस्य दासत्वमुपेयुषाऽमुना
किं किं हितं नो कृतमार्तबन्धुना ।
यो येन भावेन मुकुन्दमीहते
तं तेन भावेन विभुश्च सेवते ॥

(निष्क्रान्ताः सर्वे)

---

॥ पञ्चमोऽङ्कः ॥

नेपथ्ये—नीत्वा निशामतिमुदा कृतभोजनः स
श्रीवल्लभेन सहितो महनीयधाम्नि ।
प्रातर्महीसुरवरः कृतनित्यकर्मा
त्रैलोक्यनाथमभिवन्द्य गृहं प्रतस्थे ॥

नेपथ्ये—किञ्चिद्दूरं गते तस्मिन् कान्तां सस्मार स द्विजः ।
कृपार्हां दीनवदनां गृहभारभरार्दिताम् ॥

(ततः प्रविशति राजपथे स्वगृहं प्रतिष्ठमानः कुचेलः ।)

कुचेलः—(परिक्रम्य, पर्याकुलस्तिष्ठन्)

अच्युतस्यान्तिकं गत्वा भार्योक्तं विस्मृतं मया ।
किं नु वक्ष्याम्यहं जायामाशाशतजिताशयाम् ॥

(परिक्रम्य, सविमर्शम्)

अथवा नैव मे युक्तं श्रेयःकाले हि शोचितुम् ।
कामं सम्पूर्णकामोऽहं सच्चिदानन्ददर्शनात् ॥

(परिक्रामति)

नेपथ्ये—मार्गे मुकुन्दस्य गिरं विभावयन्
सख्येन देवस्य समीपमेयिवान् ।
सन्तुष्टचेताः स गृहं प्रयान् मुदा
सद्यः सुसौधानवलोक्य विस्मितः

कुचेलः—(नातिदूरे स्वगेहस्थाने महासौधान् विलोक्य सविस्मयम्)

स्वप्नो नु माया नु मतिभ्रमो नु
पश्यामि सौधान् सुरसद्मरम्यान् ।

(परिक्रम्य, प्रासादाभिमुखः स्थित्वा)

रामा च रत्नोज्ज्वलचारुभूषा
साक्षादिव श्रीरिह मामुपैति ॥

(ततः प्रविशति अर्घ्यादिभिः सह भूषणाद्यैरलङ्कृता कुचेलपत्नी विस्मयाविष्टचेतसं स्वभर्तारं प्रणमति च ।)

नेपथ्ये—महिलालोकललामतां गता सा
कमलाजानिसखं प्रणम्य कान्तम् ।
अखिलेशातिकृपाकटाक्षपात्रं
सुरलोकोपममानिनाय सौधम् ॥

(निष्क्रान्तौ)

---

॥ षष्ठोऽङ्कः ॥

(कुचेलस्य प्रासादे महनीया चतुश्शाला)

(ततः प्रविशति कुचेलः पत्न्या सह ।)

कुचेलः—(सर्वतो विलोक्य साश्चार्यम्) प्रिये! कुत एतत्सर्वम् ?

पत्नी—आर्यपुत्र! श्रीपतेः करुणाकटाक्षादेव । श्रूयताम्—

मुकुन्दश्रीपदाम्भोजं ध्यायन्त्या पूर्ववासरे ।
साक्षात्पद्मालया दृष्टा पुलकाङ्कितया मया ॥

(गानम्-चेञ्चुरुट्टिरागेण रूपकतालेन)

पत्नी—वीक्षिता श्रीमाता-क्षणं वीक्षिता श्रीमाता
मङ्गलदेवतामन्दहसिता वीक्षिता।
अरुणसरोरुहमास्थिता भासुरा ।
अरुणकोटिप्रभाभरितदिगन्तरा ॥ वीक्षिता।
करपल्लवलसल्लीला कमला ।
वरमणिहारा रत्नकुण्डला ॥ वीक्षिता।
करुणापूरितचारुकटाक्षा ।
शरणागतपरिपालनदक्षा ॥ वीक्षिता ।

कुचेलः—प्रिये! किमसाध्यं भगवतः? परन्तु
अनित्यसुखदं लोकमिमं प्राप्य विरागिणः ।
भजन्ते तं परात्मानं सन्तोऽनन्तसुखाप्तये ॥

नेपथ्ये—(मृदङ्गध्वनिः)

पत्नी—अये! श्रूयते वाद्यघोषः । मन्ये अस्मत्पुत्राः इतरबालैः सह श्रीजयन्त्याघोषाय नृत्तमभ्यसितुमत्रैवायान्तीति । तत्तान् प्रोत्साहयाव ।

(कुचेल आसने उपविशति, पत्नी तन्निकटे तिष्ठति । ततः प्रविशन्ति उत्साहभरिता बाला नृत्तार्थं वाद्यैः सह । बालेषु केचित् गीतसहितं वाद्यं वादयन्ति, अपरे च नृत्तं कुर्वन्ति ।)

(नृत्तं, गानम्-वसन्तरागेण)

पाहि परात्पर लोकहितंकर
गोकुलसुन्दर दुःखहर ।
पाहि पीताम्बर गोवर्धनधर
पाहि कृपाकर चक्रधर ॥
गोपवधूजनकेलीरञ्जन
मुरलीवादनहृष्टवदन ।
देवकीनन्दन दुर्जनभञ्जन
दुरितविमोचन दरहसन ॥
सज्जनमानसनर्तनरङ्ग
प्रेमतरङ्ग कमलाङ्क ।
नवरसविलसल्लोलापाङ्ग
श्रीवत्साङ्क विमलाङ्ग ॥

(निष्क्रान्ताः सर्वे)

---

॥ सप्तमोऽङ्कः ॥

(कुचेलस्य वासभवनस्य निकटे मङ्गलदीपादिभिः प्रशोभितं श्रीकृष्णमन्दिरम् । )

(ततः प्रविशति कुचेलः ध्यानस्थः ।)

नेपथ्ये—श्रीलालितोऽपि धनदस्य पदं गतोऽपि
श्रीकृष्णपादभजनैकपरः सुदामा ।
निस्संगतैव सुलभेऽपि महार्थजाते
तस्याभवत् सरसिजाक्षमहाप्रसादात् ॥

(ततः प्रविशन्ति कुचेलपत्नी, पुत्राश्च भगवन्तं पूजयितुम् । कुचेलः ध्यानाद्विरमति । ते यथाविधि पूजां कृत्वा गायन्ति । )

(मङ्गलगानम्-मणिरंगुरागेण रूपकतालेन)

देवकीसुत देवदेव महावतार ते मङ्गलम् ।
देवमुनिनरभूतजातकृपाकर जय मङ्गलम् ॥

गोपिकाजनतारकावृतपूर्णचन्द्र ते मङ्गलम् ।
गोपते मुरलीस्वनावृतमत्तगोकुल मङ्गलम् ॥

कालियादिकदृप्तशिक्षक साधुरक्षक मङ्गलम् ।
कंसमधुदनुहिंसक नरसिंहविग्रह मङ्गलम् ॥

पद्मजादिमनस्विनीजनसेवितेश्वर मङ्गलम् ।
भक्तपालक मुक्तिदायक सत्यरूप ते मङ्गलम् ॥

सदा स्वभक्तेषु भृशं प्रसन्नो
रमासमेतः सकलार्तिहन्ता ।
सर्वामयं लोकगतं व्यपोह्य
हरिः स नो मङ्गलमातनोतु ॥

---

गोविन्दकरुणानृत्तरङ्गेऽम्बाटिगृहे मया ।
जातया देवकीनाम्न्या लघुकाव्यमिदं कृतम् ॥

सङ्गीतनृत्तसहितं बालकाभिनयोचितम् ।
श्रितया कृष्णपादाब्जं दृश्यं भक्तिसमन्वितम् ॥

(समर्पणम्)

येषां गुरूणां स्मरणेन नित्यं
मनः प्रसादं स्वयमभ्युपैति ।
आचार्यवर्यान् मनसा भजे तान्
विद्यासु वाचस्पतितुल्यकीर्तीन् ॥

यैः प्रदत्ता स्वशिष्येभ्यो
विद्या कल्पलतायते ।
तेभ्यः श्रीगुरुवर्येभ्यः
कृतिरेषा समर्प्यते ॥

## सर्वज्ञवचनानि[1]

अनु० कृ. त. पाण्डुरङ्गी

नन्दिवाहनमीशानं चन्द्रशेखरभूषणम् ।
षडाननगुरुं नत्वा सर्वज्ञः किल भाषते ॥ १ ॥

[2]मुण्डितं मस्तकं यस्य कम्बलश्चोत्तरीयकम् ।
यूथभ्रष्टकरीवासौ सर्वज्ञ इति मन्यताम् ॥ २ ॥

[3]न कुलालसुता माता न विप्रो जनको मम ।
शशिमौलेरर्भकोऽयं सर्वज्ञ इति मन्यताम् ॥ ३ ॥

करे कपालपालीयं विशाला पृथिवी पुरः ।
हर एव परो बन्धुः सर्वज्ञः श्रीमतां वरः ॥ ४ ॥

ग्रामे सर्वत्र मित्राणि वीथ्यां सर्वत्र बान्धवाः ।
यस्येयं पृथिवी माता सर्वज्ञः कस्य वा भवेत् ॥ ५ ॥

सर्वज्ञ इति नामेदं न गर्वेण समाहृतम् ।
सर्वैः शिक्षित इत्येव सर्वज्ञ इति नामभाक् ॥ ६ ॥

न कश्चित् सर्ववेत्ता स्यात् किञ्चिद्वेत्तापि दुर्लभः ।
न सोऽपि काव्यमर्मज्ञः सर्वज्ञः किल भाषते ॥ ७ ॥

चित्तज्ञा च प्रिया भार्या सुवर्णं सुगृहं तथा ।
इहैव स्वर्गसौख्यानि सर्वज्ञः किल भाषते ॥ ८ ॥

दधिदुग्धसमृद्धिश्च महोक्षौ पुत्रपञ्चकम् ।
एका पत्नी स्वर्गसुखं सर्वज्ञः किल भाषते ॥ ९ ॥

1. १६०० क्रै.काले जातस्य 'सर्वज्ञ'नाम्नः कर्णाटककवेः सुभाषितानामनुवादाः ।

2. सर्वज्ञः अनेन वेषेण सञ्चरति स्मेति प्रथा ।

3. सर्वज्ञः विप्रात् कुलालसुतायां समजनीति प्रथा ।

भार्या रूपवती काष्ठपर्यङ्कश्च गृहाङ्गणे ।
ज्योत्स्नानिशा स्वर्गसुखं सर्वज्ञः किल भाषते ॥ १० ॥

कान्तां च कनकं चैव तरौ पक्वफलं तथा ।
पश्यन्नाभिलषेत् को वा सर्वज्ञः किल भाषते ॥ ११ ॥

शौर्यवैराग्यशीलानि भिद्यन्ते नात्र संशयः ।
शस्त्रहेमकुचस्पर्शे सर्वज्ञः किल भाषते ॥ १२ ॥

अभिसारेण सम्भोगः कण्ठशोषेण गीतिका ।
लेखनेन च विद्या स्यात् सर्वज्ञः किल भाषते ॥ १३ ॥

विद्या माताऽनुजो बुद्धिर्विपदो बान्धवा इह ।
स्वस्थानं च सुखस्थानं सर्वज्ञः किल भाषते ॥ १४ ॥

वचसा जायते मैत्री वैरं च वचसैव हि ।
वचसा प्राप्यते सम्पत् सर्वज्ञः किल भाषते ॥ १५ ॥

औचित्यहीना वागुक्ता शिरोवेदनसन्निभा ।
औचित्यज्ञा मधुसमा सर्वज्ञः किल भाषते ॥ १६ ॥

रसिकैरुदिता वाणी चन्द्रोदयसमाऽमृता ।
नीरसैः क्षुरिकापातः सर्वज्ञः किल भाषते ॥ १७ ॥

धनिना सह संलापो गुडचर्वणसन्निभः ।
वमनं निर्धनेन स्यात् सर्वज्ञः किल भाषते ॥ १८ ॥

कोटिसङ्ख्यासु विद्यासु कृषिविद्या गरीयसी ।
कृषिहानौ सर्वहानिः सर्वज्ञः किल भाषते ॥ १९ ॥

क्षेत्रं नोत्पाटितं गावौ गोष्ठस्थौ शकटो लघुः ।
तृणं चिनोति नो धान्यं सर्वज्ञः किल भाषते ॥ २० ॥

पयः शुद्धं प्रियालापः आसनं गोमयाञ्चितम् ।
कृषीवलस्य गार्हस्थ्यं सर्वज्ञः किल भाषते ॥ २१ ॥

दासभावे समर्थश्चेदीशभावमवाप्नुयात् ।
दास एवेशतां याति सर्वज्ञः किल भाषते ॥ २२ ॥

निगर्ह्या भराक्रान्तात् पयसो मण्डमुत्तमम् ।
मृष्टान्नादपि भिक्षान्नं सर्वज्ञः किल भाषते ॥ २३ ॥

दीपपात्रे तैलसेके घटधारा न युज्यते ।
दातव्यं न च दातव्यं सर्वज्ञः किल भाषते ॥ २४ ॥

स्वार्थनिष्ठो वचोभ्रष्टः परदारेषु दृष्टिदः ।
मा भूर्जागृहि जिह्वायां सर्वज्ञः किल भाषते ॥ २५ ॥

शिरसो घट्टनात् पूर्वं नमनं बुद्धिलक्षणम् ।
घट्टने नतमेव स्यात् सर्वज्ञः किल भाषते ॥ २६ ॥

स्वान्तः स्यादात्मविज्ञात एकान्तस्त्वपरोदितः ।
लोकान्तस्तु तृतीयोक्तः सर्वज्ञः किल भाषते ॥ २७ ॥

एकैव वसतिः पृथ्वी जलमेकं चिता तथा ।
कुलभेदः कुत इदं सर्वज्ञः किल भाषते ॥ २८ ॥

न जिह्वायामस्थिकाष्ठं न स्तम्भो गगनाङ्गणे ।
नेश्वरे कुलगोत्रे स्तः सर्वज्ञः किल भाषते ॥ २९ ॥

भोजने तु वरं तक्रं घृतं गोधूमखादने ।
गृहे मातामही वृद्धा सर्वज्ञः किल भाषते ॥ ३० ॥

शून्यः कृषीवलैर्ग्रामो वाणिज्यं गणनातिगम् ।
अनपत्यं गृहं दुःखं सर्वज्ञः किल भाषते ॥ ३१ ॥

निर्भयं स्वीकृतं यद्यद्विषमप्यमृतं भवेत् ।
भीत्याऽमृतं विषं हि स्यात् सर्वज्ञः किल भाषते ॥ ३२ ॥

पुरतः पदनिक्षेपः स्वर्गसामीप्यसाधकः ।
पश्चात्तु नरकालम्बी सर्वज्ञः किल भाषते ॥ ३३ ॥

अनन्तेष्वात्मदोषेषु दोषमेकं परस्य यः ।
भाषते श्वसुतः सोऽयं सर्वज्ञः किल भाषते ॥ ३४ ॥

प्राज्ञः प्राज्ञेन तुष्टः स्यान्मूढो मूढेन तुष्यति ।
धनेन सर्वे तुष्यन्ति सर्वज्ञः किल भाषते ॥ ३५ ॥

कुक्कुटः कुक्कुरो वैद्यः सेवको गणिका तथा ।
परस्परं गुर्गुरन्ति सर्वज्ञः किल भाषते ॥ ३६ ॥

तन्तुवाद्यं वरं गाने मन्त्रिमैत्री च लौकिके ।
स्वस्य तन्त्रं तु सर्वत्र सर्वज्ञः किल भाषते ॥ ३७ ॥

गृहे मार्जारकन्या स्याद्धान्यमुष्टिरुलूखले ।
ग्रामे कृषीवलसुतः सर्वज्ञः किल भाषते ॥ ३८ ॥

नम्रो वेणुः पुनर्दीर्घो क्षिणोत्येव न संशयः ।
न श्रद्धेयः खलो नम्रः सर्वज्ञः किल भाषते ॥ ३९ ॥

जिह्वा यथा दन्तपङ्क्तौ जाग्रती वर्तते सदा ।
खलमध्ये तथा साधुः सर्वज्ञः किल भाषते ॥ ४० ॥

लवणं शर्करा चैते सारूप्येऽपि पृथग्गुणे ।
खलसज्जनयोरेवं सर्वज्ञः किल भाषते ॥ ४१ ॥

सकृद्भोक्ता भवेत् त्यागी भोगी द्विर्भोजनाद्भवेत् ।
अतिभोक्ता तु रोगी स्यात् सर्वज्ञः किल भाषते ॥ ४२ ॥

स्मरो दग्धः शिवेनेति मिथ्यैव वचनं भुवि ।
नारीकटाक्षे सोऽस्त्येव सर्वज्ञः किल भाषते ॥ ४३ ॥

सत्यनिष्ठः सुतः पूज्यः शीलनिष्ठा सती तथा ।
धर्मनिष्ठो द्विजः पूज्यः सर्वज्ञः किल भाषते ॥ ४४ ॥

अविषादः पिता शत्रुर्बुद्ध्यदाता गुरुस्तथा ।
माता च रुग्णे सोपेक्षा सर्वज्ञः किल भाषते ॥ ४५ ॥

परनारीषु न स्निह्येन्न वा स्नेहं परित्यजेत् ।
अस्नेहः पशुवृत्तिः स्यात् स्नेहः पाताय कल्पते ॥ ४६ ॥

वाङ्मर्मज्ञः सुतः श्रेष्ठः शीलमर्मविगा सती ।
पिता हृदयमर्मज्ञः सर्वज्ञः किल भाषते ॥ ४७ ॥

विना क्षुधं न भोक्तव्यं क्षुधि नोपवसेन्नरः ।
न च पर्युषिताशी स्यात् सर्वज्ञः किल भाषते ॥ ४८ ॥

अनिर्जित्येन्द्रियग्रामं स्वर्गं गन्तुं तदा क्षमम् ।
रण्डा यदा स्वर्गराज्ञी सर्वज्ञः किल भाषते ॥ ४९ ॥

सत्यनिष्ठं वचस्तीर्थं शीलनिष्ठा मतिस्तथा ।
न तीर्थं जलमात्रं स्यात् सर्वज्ञः किल भाषते ॥ ५० ॥

# अर्थिबाला[1]

चि. द्वा. देशमुखः

वक्षःस्थलन्यस्तमभूत्तदीयं
हस्तद्वयं; वाग्विभवातिवर्ति ।
लावण्यमासीद् अनुपानद् आराद्
उपागमद् गोपति[2]मर्थिबाला ॥ १ ॥

एनां समालोक्य दुकूलवासाः
किरीटधारी वसुधाधिराजः ।
सिंहासनादाश्ववतीर्णवान्, तां
द्रष्टुं परिप्रष्टुमुपव्रजन्तीम् ॥ २ ॥

राजन्यकं प्राह 'किमत्र चित्रम्!
श्रियं दिनस्याप्यतिशेत एषा ।
सा दीनवेषा सुषमामुवाह
मेघावृते खे स्फुरतो हिमांशोः ॥ ३ ॥

गुल्फौ तदीयौ प्रशशंस कश्चित्
कश्चिच्च नेत्रे असितालकानि ।
वपुस्तथा दृष्टिविलोभनीयं
तुष्टाव कश्चिन्नृपतेः सदस्यः ॥ ४ ॥

रम्यास्यमेवंविधमीदृशी श्रीः
देशेऽखिलेऽभून्न हि दृष्टपूर्वा ।
शेपे स्वयोग्यं क्षितिपो 'ऽर्थिबाला
भविष्यतीयं महिषी ममे'ति ॥ ५ ॥

---

1. टेन्निसन्नामकस्याङ्ग्लकवेः "बेग्गर् मेयड्" (The Beggar Maid) इत्याख्यस्य खण्डकाव्यस्यानुवादोऽयम् ।

2. King Cophetua.

## अनुवादप्रकरः[1]

वे. राघवः

१. श्रेयानागन्तुकः प्रेयान् न तु ज्ञातिश्च दुर्मनाः ।

२. अवाड्-तापो वर्षेण विना नैवापगच्छति ।

(सर् वा. स्काट्)

३. यत्पतामस्तदस्माकं महतां च न पाप्मने ।
तत्तु तथ्येन माहात्म्यं यदुत्थानं पदे पदे ॥

(गोल्ड्स्मिथ्)

४. कामः करोति सर्वं च कल्पनाजननी स्पृहा ।

५. अद्भुतस्तम्भिता मूढाः प्राज्ञो ज्ञात्वानुमोदते ।

(कस्यापि)

६. अनयोपार्जितं वित्तं न प्रायः सुव्ययं व्रजेत् ।

(स्काट्)

७. यदा रजन्यन्धतमा तदासन्नतमं उषः ।

(स्काट्)

८. तुच्छेष्वादौ विनोदाय रुचिं बध्नन्ति ये नराः ।
पुरुषार्थैरिवान्ते तु तैरेवामी प्रबाधिताः ॥

९. क्षणं तान्तं मनः शक्तं कर्तुमुत्साहमुच्छ्रितम् ।
बलाज्झम्पां मृगः कर्तुमादौ पश्चाद्यथाव्रति ॥

१०. सन्तो धर्ममार्गे मन्दं सरन्ति । मूर्खाः कुपथे द्रवन्ति । कुतः? तृष्णावेगो हठादाकर्षति । ज्ञानदीपस्तु दिशं सूचयति ।

११. मौनमच्छलं मित्रम् ।

१२. जगत एकस्यार्धस्य प्रीणनाय एष साधिष्ठ उपायः-यद् अन्येनार्धेन उच्यते नैव तद् गणय । यतः एकस्यार्धस्य प्रेक्षायां ये त्वयि दोषाः, ते अर्धान्तरस्य दृष्ट्या गुणतया स्तोत्रार्हा भवन्ति ।

---

1. एते अनुवादाः तदा तदा पठितेभ्यः आङ्ग्लादिविविधग्रन्थेभ्यः अभिरुचितानां पङ्क्तीनामभिप्रायाणां च क्वचित् साक्षात् क्वचिच्छायया मनागुपबृंहणेन च कृताः । वे. रा.

१३. जङ्गमसुवर्णकारापणवदवभासमानं कञ्चन प्रभुं कोऽपि शठो वटुर्ददर्श। तमेष वीथीषु उपवीथिषु च प्रतिपदं वन्दमानोऽनुससार। प्रभुणा धृतानां भूषणानां कृते तस्मै कार्तश्यं च मुहुराविश्चकार। तमेवं कुर्वाणं वटुं विलोक्य चक्रन्द प्रभुः 'किमेष मनुते वटुः?' इति। पुनरप्याह वटुम्—'सखे! नाहं ते यत्किमपि मे भूषणमयच्छम्' इति। प्रत्यवदत् स वटुः—'सत्यं नायच्छः', किन्तु तान्यवलोकयितुमनुमतिं मे प्रायच्छः। तवापि तावदेव तैः प्रयोजनम्। तन्नैवावयोः कापि भिदा वर्तते। परन्तु भूषणभाररक्षणक्लेशस्ते महान् भवति, स च न मे तथाभिरुचित उद्योगः' इति॥

१४. कृतज्ञता प्रेम च

कृतज्ञता प्रेम च परस्परं प्रतिकोटिवर्तमानौ भावौ। प्रेम नाम प्रायो विवशमस्मदनुज्ञां विना सहचरेषु न्यस्यमानो विषयः। स वृत्तचरमुपकारं नापेक्षते।

सुकरः सुभगश्चायं भावः प्रेमेति। कार्तश्यं तु मनसः परं लज्जापयित्री अवमानकरी च कापि व्यवस्था।

आतो नानुपरुध्यान्योन्यमिमे प्रेमकार्तश्ये एकस्मिन्नेव हृदये सहवसतिनी दृश्येते।

कृतज्ञतानिर्बन्धनम् ऋणोपद्रव इव। अनेन कार्तश्य-ऋणेन न प्रयोजनं किमपि उत्तमर्णस्य, अधमर्णश्च क्लिश्यमानः प्रत्यर्पयति।

यतः प्रेम स्वरसतरम्, तत उपकारात् निर्बन्धाच्च चिरतरस्थायी उपहारः।

१५. अत्याकर्षे छिद्यते स्नेहतन्तुः।

१६. अहो करुणेयमवस्था! ये लोकबोधनाय परस्परमुपकर्तुमेव प्रसूताः, यदेत एव पण्डिताः परस्परं भिद्यन्ते, ततः स्वव्यापारमेव उपहास्यं कुर्वन्ति च।

१७. गोमयकल्पं वित्तम्[१]। एकत एव राशीकृतं न केवलं निरर्थं तत्, अपि तु पूतिगन्धैर्दुष्यति च। प्रत्युत विश्वतो विस्तारितं चेत्, तज्जगतीमेव परं पोषयति।

१८. पामराणां प्रेक्षा मृगाणां चेतनाशक्तिरिव। अत्यन्तफल्गुप्रपञ्च एव पर्यस्तापि, तस्मिन् प्रपञ्चे बलवती, अनुस्यूतरूपा, सिद्धिमती च व्याप्रियते सा।

१९. जन्मभूमिः

अन्यादृशमस्मानभिरञ्जयत् प्रलोभकं किञ्चिद् अस्मज्जन्मक्षेत्रे वर्तते। यान् कांश्चन वा पातोत्पातान् आयुःकाले वयमनुभवाम, यत्र कुत्र वा भ्रमाम, अस्माकं तान्ता मनोरथा अन्ते विश्रान्तये जन्मभूमिमनुस्मरन्ति। यत्र वयं प्रसूताः तत्र वयं प्राणान् मुमुक्षामः। एतादृश्या मनोऽभिरामया प्रतीक्षयैव सर्वा विपदप्यस्माकं जीयते।

२०. निसर्गतो विपदा सह वयस्यभावो नाम क्षमाया वेदान्तस्य च तत्त्वतोऽभ्यासमार्गोऽयम्।

(गोल्ड्स्मिथ्-सिटिसेन् आफ् दि वोर्ल्ड्)

२१. स्वादुतममपि मधु जुगुप्स्यते। भोगनैरन्तर्यं क्षुधमाकुलयति। अतः परिमितं भवतु प्रेम। तदेव तत् स्थास्नु। अतिवेगोऽपि अतिमान्द्यमिवैव भवति। (षेक्स्पियर्-रोमियो अण्ड् जूलियट्)

२२. स्तोकः शोको महत्प्रेम दर्शयति। शोकभूयस्त्वं तु ज्ञानवैकल्यमेव दर्शयति। (तदेव)

२३. बलादपि क्षान्तिरेव महीयसी। (रस्किन्)

मोगल्चक्रवर्तिभिः पर्षियन्भाषायां लिखितानां केषांचनानुवादाः—

२४. कृष्णतन्तुभिरोतश्चेत् नरस्य विधिकम्बलः।
नैव गङ्गापि शक्नोति शुभ्रं क्षालयितुं च तम्॥

(पित्रा षाजहानेन पुत्राय दाराषिकोह्-नामकाय प्रेषितमिदम्)

२५. दर्शनात् स्मरणं विशिष्य

२६. ये मर्तुं सन्नद्धाः तेषां सर्वमेव दैवप्रेषितमकालकष्टमनुग्रह इव ।

२७. मृतेरूर्ध्वमपि क्रूरा विरमन्ति न पीडनात् ।
मृतेऽपि कङ्के तत्पत्रं शराणां पत्रतां गतम् ॥

२८. कुटिलानां मेधाया अपि मुग्धानामज्ञानं वरीयः ।

२९. नरस्य काममग्नस्य वर्तते किं विपद्भयम् ।
का वा चिन्ता कबन्धस्य स्वशिरःशूलमन्तरा ॥

३०. शत्रौ भजति सारल्यमवधानं न मुच्यताम् ।
शैवलाधो जलं यद्वत् स्याच्छाठ्यमवगुण्ठितम् ॥

३१. आधुनिकद्रविडकवेः सुब्रह्मण्यभारतीतः—

वृद्धस्य बुद्धेः परिपाकमेतं
मनोदृढत्वं च वयःस्थितानाम् ।
यूनां समुत्साहमिमं, शिशूनां
मनश्च मे देव महेश देहि ॥

# आन्तरात्मिकी परिपूर्णता[1]

अस्ति पुष्पमेकं यस्य नाम "आन्तरात्मिकी परिपूर्णता" इत्युद्घोषितं मया। इदं सुविख्यातं चम्पकं पुष्पम्। अस्मिन् पुष्पे वर्तन्ते पञ्च दलाः। प्रत्येको दलः सूचयति चेतनाया एकं विशिष्टगुणं गतिं वा। अथ च संयुक्तैः पञ्चभिर्गुणैर्निर्मीयतेऽन्तरात्मनः परिपूर्णता। प्रारम्भे तेषां गुणानां नामान्यासन्। उक्तानि मया—१ समर्पणम्, २ सहृदयता, ३ श्रद्धा, ४ भक्तिः, ५ अभीप्सा च। नूनमेवार्थोऽयं परिवर्तनीयो भवति देशकालपात्रानुसारेण। वस्तुतो यदा ददाम्यहमिदं पुष्पं कस्मैचिज्जनाय तदा नाभिप्रायो मे सदा गुणैरेभिरेव भाव्यमिति। एतानर्थान् परिवर्तयेऽहं तस्मिन् काले तस्य नरस्य प्रयोजनानुसारेण। तथापि तु निर्मातुं शक्नुमो वयं सर्वसामान्यां योजनामेकाम्। सर्वासु स्थितिषु, सर्वेषु गुणसमुच्चयेषु च सर्वेभ्यो नरेभ्यस्तथा सहृदयतैव सदैव तेषां गुणानां प्रथमा विद्यते। कथम्? यदि नास्ति सहृदयता, न खलु प्रगन्तुं शक्नोति नरः पदमर्धमपि। अत एव सर्वप्रथममावश्यकं वस्त्वस्ति सहृदयता, सततं च सत्यमेतत्॥

शब्देनान्येनापि ज्ञातव्येयं यदीच्छथ यूयम्। अस्ति स शब्दः 'पारदर्शकता' इति। अहमधुना बोधयाम्येतत्॥

यदा आगच्छति कश्चिन्नरो मम समीपे पश्याम्यहं च तम्, तदा प्रक्षिपामि दृष्टिं मे तस्य नेत्रयोरेव केवलं सुतीक्ष्णं च। चेदस्ति स नरः सहृदयः, 'पारदर्शकः', तर्हि तस्य नेत्रैरन्तः प्रविशामि, पश्यामि च स्पष्टतया तस्यान्तरात्मानम्। परं पश्यामि यदा तं तस्य नेत्रयोरावरणं च; पुनश्च लभेऽहमेकां यवनिकां तत्र वा गत्वा किञ्चिद्दूरं प्राचीरमेकं वा अन्यमतिकृष्णं वस्तु पश्याम्यहम्। यदा प्रेवष्टुमन्ते मया भेत्तव्यान्येतानि वस्तूनि, स्थाने स्थाने च करणीयानि छिद्राणि, तथापि न विश्वसिम्यहम्, यदन्तिमकाले कस्यचिदभेद्यस्य लोहप्राचीरस्य सम्मुखे नोपस्थास्यामि, तर्हि

---

1. श्रीमातुः प्रेञ्चसाहित्यादुद्धृतोऽयं निबन्धः। अनुवादको जलेश्वरः, श्रीअरविन्दाश्रमः, पाण्डिचेरी।

तास्ववस्थासु न प्राप्नोम्यन्तरात्मानम्, घोषयितुं च शक्नोमि यन्नास्त्ययं पुरुषः सहृदयः। यत्सत्यं न भवति पारदर्शक एतादृशो जनः। अत एव वर्तत इदमेव सर्वप्रथमं वस्तु ॥

श्रद्धैव द्वितीयं वस्तु, सा च स्पष्टतया प्रयोजनीया सर्वाभ्यः प्रगतिभ्यः। तस्या अप्यस्त्यन्यः शब्दो यः सीमितत्वेन दृश्यमानोऽपि बिभर्ति महत्त्वमत्यधिकमिति मे मतम्। स शब्दो 'विश्वास' एव। यदि नास्ति तव श्रद्धा भगवति पूर्णविश्वासेन पूरिता, तव विश्वासो नशितुमारभते वा, तदानीं भागवतशक्तिकृपयोः तव श्रद्धाऽपि नश्यति क्रमशः। ईश्वरस्य विश्वासपात्रत्वाय न कल्पसे त्वम्। सन्त्येतास्तिस्रो महत्यो बाधाः ॥

नैकदा न हि परं च यदाकदा सम्भवमिमं यत्त्वमारभसे श्रद्धातुं मन्यसे चात्मनः श्रद्धाऽचलेति सा श्रद्धाऽपि घोषयति—भगवानेव केवलं करोति सर्वम्, कर्तुं च शक्नोति सर्वम्, यावच्च प्रवर्तते मयि चान्येषु च, तद् भगवत्क्रियामात्रम्, भगवता विना नान्येन सम्भवति किञ्चित्। एवंप्रकारेण त्वं परिवाहयसि स्वश्रद्धाम्, निश्चयेन बाह्यत एव, युक्तियुक्तान्तिमतरपर्यन्तम्, परं च कतिपयकालादनन्तरं त्वमारभसे दूषयितुं भगवन्तं कुकर्मभ्योऽतिभयावहेभ्यः तं च मन्यसे वास्तविकं दानवमेकं स्रष्टारमस्य जगतः सकलानामनर्थानाम् ॥

अथवा कथयसि त्वमस्ति मे श्रद्धा भगवानिति, परं चैतज्जगत्सम्बन्धे त्वं न जानासि किमिदमिति न चास्मिन् विश्वसिषि त्वम्। त्वं कथयसि—"प्रथमतोऽहमेव भुञ्जे दुःखं, भाग्यहीनोऽहं, सर्वेष्वन्येषु हतभाग्यतमोऽहम्"। यत्सत्यं सदैव मनुष्यो मन्यत आत्मानं विपन्नतरम्। पार्श्वजनेभ्यो ब्रवीति च सः—"जीवनमस्ति कठिनं मे। अप्यस्ति भगवान् परमेश्वरो दयाकृपाप्रेमसामञ्जस्यमहोदधिः? तर्हि कथमहमस्मि इयान् भाग्यविहीनः? नूनमेवास्ति भगवान् दुर्बलः। अन्यथा, कथं स कृपानिधिर्भगवान् त्यजति मां विपदि?" इति द्वितीया बाधा। अथ तृतीया बाधा; वर्तन्ते केचिज्जना अतिशयविनीतभावाः, अतिशयभ्रमाक्रान्तदीनतापरिप्लाविताः कथयन्तः—

"असंशयं भगवता त्यक्तोऽहमस्म्यर्थविहीनः, मां न किञ्चिदपि कारयितुं शक्यं तेन, मया सर्वं त्याज्यमुचितम्" इति । यदि जायते सततमेतादृशी कठिनता, ततो नासि त्वं श्रद्धान्वितो न च विश्वसिषि, त्वं भगवति पूर्णतया ॥

तदनन्तरमस्मिन् क्रमेऽधुनाऽऽयाति भक्तिः । निश्चयेनास्ति भक्तिर्महद्वरं वस्तु, परं चैषाऽपि यावन्नास्ति युक्ताऽन्यैर्बहुभिर्वस्तुभिः तावन्नेतुं शक्नोति त्वामनेकान् भ्रमान् । यतो नु रक्षति मनुष्यः स्वस्याहङ्कारं भक्त्या साकम् । भक्तिवशोऽपि त्वं चरितुं शक्नोषि दुरहङ्काररीत्या । त्वं चिन्तयसि स्वकीयां भक्तिम्, एकमात्रान्निजस्य किल भक्तिमेव, फलतः केवलमात्मनो विषय एव रोचते तुभ्यम् । अथ च त्वन्न मनसि विषयेऽन्येषां च जगतश्च स्वयं क्रियमाणस्य कर्मणश्च निजस्य कर्तव्यस्य च । अत एव जायसे त्वं भीषणाहङ्कारमयः । अपरं च यदा त्वमनुभवसि यत्त्वं न लभसे स्वभक्तिप्रत्युत्तरं भगवतः केनचित् कारणेनापि, प्रत्युत्तरं च नायाति प्रतीक्षितोत्साहं परमेश्वरात्, ततो जायसे त्वं निराशः, पतसि चैकस्यामथ वा तिसृषु कठिनतासु हि मयोपरिवर्णितासु । मन्यन्ते जना भगवन्तं क्रूरम्—जायतेऽस्माभिर्यज्ज्ञाताः केचिद् भक्ता ये दर्शयन्ति निजसम्पूर्णक्रोधं भगवन्तं प्रति, तं दूषयन्ति तथा उदासीनताकठोरतादिदोषैः—अथवा पुनश्च शोचन्ति ते—"अवश्यमेव कृतो महानपराधो मया, भगवद्दृष्ट्यां निरर्थकोऽहं त्यक्तश्च तेन" इति ॥

अधुना लसति सा क्रिया या भक्त्या सह तस्याः पूरकरूपेण सदैव प्रवर्तनीया स्थापितव्या च । सा हि खलु कृतज्ञता । अथ भगवानस्ति अनुभवति च मनुष्यो भगवते विस्मयादुत्पन्नं कृतज्ञताभावम् इति भावो भरति त्वां यथार्थतो महताऽऽनन्देन । इति भाव एव—"यदस्ति भगवान्, विश्वेऽस्त्येकं वस्तु यदुच्यते 'भगवान्' इति नाम्ना, यावन्मात्रं पश्यामो वयमस्मिन् पृथिवीतले तन्नास्ति घृणास्पदमपि"—जनयति त्वयि वर्णनातीतानन्दधाराम् । यदा यदा प्रददाति वस्तु क्षुद्रमपि तुभ्यं भगवत्सत्ताया महान्तं सत्संस्पर्शं प्रत्यक्षाप्रत्यक्षरूपं तदा तदा पूर्यते तव हृदयं तेनातीवापूर्वानुभवेन मिष्टतमस्वाद-

पूरितगभीरकृतज्ञतानुभवेन यो नास्ति प्राप्यः कस्मिंश्चिदन्यस्मिन् हर्षे। एदर्थं वदाम्यहं यद् भक्तिः स्वयमस्त्यपूर्णा, तया साकमवश्यमेव स्थापयितव्या कृतज्ञता ॥

अथागच्छेम वयमन्यं गुणम्। एकदा वर्णितो मया साहसविषयः, उक्तं च मया कठिनकार्याय, परमकठिनकार्याय रुच्येव साहसमिति। परमकठिनकार्यायैषा रुच्येवाभीप्सा नाम—इत्यभीप्साऽभिभवति त्वां पूर्णतः प्रक्षिपति च त्वां चिन्तनहीननिःशेषभावेन प्रत्यागमनसंभावनां विनापि भगवदन्वेषणमहाकठिनकार्ये, भगवत्साक्षात्कारमहादुष्करकार्ये, भगवत्प्राप्तिमहत्तर-दुःसाध्यकार्ये च। एतस्याशयोऽस्ति प्रक्षेप्तुमात्मानमपरिचितभयावहकार्ये क्षणमपि विना पश्यन्तं पृष्ठं प्रति विना पृच्छन्तञ्च भवितव्यताम्। यतः चेत्त्वं पृच्छसि यत् कुत्र त्वं पतिष्यसि ततः त्वं कदापि नारप्स्यसे, तत्रैव स्थास्यस्यचलः, तव पादद्वयं तस्मिन् स्थान एव स्थिरं भविष्यति दृढतापूर्वकं त्वं च भेष्यसि स्वस्य समतानाशात्। अत एव कथयाम्यहं तं गुणं "साहसम्" इति। परं च यत्सत्यं सोऽस्त्यभीप्सा। एते द्वे संगच्छेते। सदभीप्सा सततमेव भवति साहसान्विता ॥

इत्थं वर्णिताः सन्ति चत्वारो गुणाः। अधुना संयुज्यते मया पञ्चमं वस्तु धैर्यं नाम। धैर्यं परमावश्यकम्। यदि त्वं जायसे हताशो निजकठिनताभ्यः, ताः पराजेतुमसमर्थश्च, चेत्त्वं न तितिक्षसि आघातान्, न शक्नोषि योद्धुं तैः सह तथा, न च प्रगन्तुमर्हसि कारणैस्तैः; तर्हि त्वं नाग्रे सरिष्यसि यथेष्टम्। आघाता उद्भवन्ति तव दोषभ्रान्तिभ्यः। यदा त्वन्न निरीक्षसे तव क्षुद्रमभ्यासनिर्मितं जीवनं प्रथमत एव, तदा त्वं निराशो भविष्यसि त्यक्ष्यसि चान्ते प्रयासं निजम् ॥

धैर्यं भवत्यध्यवसायः स्वकीयक्रियास्वरूपे। अर्थात् आवश्यकतानुसारं तदेव कर्म त्वया कर्तव्यं नैकदा सहस्रकृत्वोऽपि। किमपि विकासं कृत्वा त्वं मन्यसेऽधुनाऽत्र स्थितोऽहं दृढमिति, परमयं सदैव सम्भवः तत्र जायते।

कश्चिद्विकारः य आनयति पूर्वकठिनताः । त्वं बोधसि यत्तव समस्या समाहिता परं पुनरेव त्वया समाधातव्या सा । यतः पुनः पुनरेवायाति सा नैकेषु रूपेषु । सैव समस्या ता एव कठिनताश्च पुनः पुनः लक्षकृत्वो जेतव्याः त्वया । तर्हि त्वं भवितुं शक्नोषि निश्चितोऽस्मिन् विषये यत्त्वं स्वीयं लक्ष्यं प्राप्स्यसि ।।

मया त्यक्तमेकमतिमहत्त्वपूर्णं वस्तु—तदेव समर्पणम् । साम्प्रतम् श्रीअरविन्दस्य कथनमस्ति यत् समर्पणमेव विद्यते सर्वप्रथमसर्वोपरिपरमप्रयोजनीयं योगसाधनाय । तेन विना योगसाधनमेवाशक्यम् । अत एव कथयितुं शक्नुमो वयं यत् समर्पणमस्ति प्रारम्भिकोऽनिवार्यो मनोभावो न त्वेको गुणो योगसाधकस्य । यदि नासि त्वमुद्यतः समर्पणं कर्तुं तर्हि तस्मिन् मार्गे नास्ति तव पदार्पणाधिकारोऽपि । परं चास्य समर्पणस्य परिपूर्णतायै सर्वाङ्गीणतायै च मया वर्णिताः पञ्च गुणा आवश्यकाः । तस्मादेवं प्रस्तावो मम । सर्वोपरि शीर्षस्थाने समर्पणं स्थापयाम्यहम्, यतः पूर्णयोगस्य साधननिमित्तं प्रथमतो भगवते सम्पूर्णसमर्पणस्य सङ्कल्पः कर्तव्यः । ऋतेऽस्मान्नान्यः पन्थाः । अयमेवैकमात्रो मार्गः । तदनन्तरमान्तरात्मिकपरिपूर्णतानिमित्तं पञ्चैते गुणाः प्रापणीयाः । इति शुभम् ॥[1]

---

1. नास्ति वार्ता अत्र स्वर्णचम्पकस्य । अत्र वर्णितं चम्पकं पुष्पं बाह्यश्वेतमन्तःपीताभासमयम् उत्तरे भारते "गुलेचीन" इति कथ्यते ।

## "हसत"

को. ल. व्यासराजशास्त्री

भार्या—भवता क्रीतोऽयं दर्पणः 'भूतं' दर्शयति ।

भर्ता—न हि न हि । तव मुखमेव दर्शयति ।

अध्यापकः—गोपाल! पक्कापक्कयोः अम्रफलयोः को भेदः?

गोपालः—अपक्कमम्रफलं किञ्चिदम्लम् । पक्कं तु अतीव अम्लम् ।

चैत्रः—सखे! त्वं वस्त्राडम्बरप्रियोऽसि ?

मैत्रः—त्वं न जानासि लोकस्य पन्थानम् । पश्य—'पीताम्बरो रमां लेभे विषं लेभे दिगम्बरः ।'

सुता—तात! अद्य सायं देवालये भाषणं करिष्यामि ।

पिता—किमत्राश्चर्यम्? भाषणार्थमेव खलु त्वया प्रत्यहं देवालयं प्रति गम्यते ।

अध्यापकः—रे चैत्र! त्वं रामशब्दादन्यं न जानासि । कथं ते परीक्षायां विजयः स्यात्?

शिष्यः—आर्य! 'राम'शब्देन मोक्षमपि सुलभं वदन्ति । परीक्षायां विजयः कथं दुर्लभः स्यात्?

गायकः—नाहमन्येषां खेदं द्रष्टुं प्रभवामि ।

रसिकः—अत एव गायता त्वया चक्षुः निमील्यत इति तर्कयामि ।

सुतः—तात! मां समुद्रतीरं नयसि वा, न वा?

पिता—न नयामि । किं करोषि?

सुतः—एवं तर्हि मातरं निवेदयामि ।

भार्या—शैत्येन कम्पते मे शरीरम् ।

भर्ता—तव दर्शनेन सर्वदा कम्पते मे शरीरम् । शैत्येन न मे कश्चिद्विशेषः ।

मत्कुणः—सखे! अद्यत्वे जनाः रक्तहीनाः दृश्यन्ते ।

मशकः—आहारसामग्री महामूल्यदानेन क्रेतव्या, कथं जनाः पुष्टाः स्युः ।

भर्ता—किं त्वया सज्जीकृतमिदं भक्ष्यम्?

भार्या—न हि न हि । तव मात्रा ।

भर्ता—अत एव अतीव रुचिरं वर्तते ।

एकः—अस्मिन् काले सर्वत्र मिश्रविवाह एव प्रवर्तते ।

अन्यः—किं दुःखमिश्रः?

वैद्यः—सर्पेण दष्टस्याङ्गस्य च्छेदः कार्यः प्राणानां रक्षार्थम् ।

अन्यः—कश्चित् तु शिरसि दष्टः । तर्हि?

एकः—अचिरेण चन्द्रग्रहणं भविष्यति ।

अन्यः—किं राहुणा, उताहो केतुना?

एकः—न हि न हि! रुष्यादेशेन अमेरिकादेशेन वा ।

आचार्यः—अनूरुः कस्मात् सारथ्ये नियोजितः सूर्येण?

शिष्यः—अन्यथा विश्रमाय रथादवरोहेदिति भिया ।

उपाध्यायः—गोभिल! कस्मात् पाठाः सम्यक् न परिशीलिताः?

शिष्यः—मम पित्रा दैवज्ञशिरोमणिना उक्तम्-मम विद्यायोगो नास्तीति ।

उपाध्यायः—तत् पितृवाक्यपरिपालनं पुत्रधर्म इति प्रवृत्तोऽसि?

उपाध्यायः—गुणिनः पात्रस्याभावे किं कर्तुं न शक्यम्?

शिष्यः—दानादिकं कर्तुं न शक्यम्।

अन्यः—मन्ये, कूपात् जलमुद्धर्तुं न शक्यम्।

भर्ता—प्रिये! अहं विस्मरणशील इति असकृन्मां परिहससि। अद्य त्वमेव विस्मरणशीला संवृत्ता।

भार्या—कथम्?

भर्ता—धूमशकटादवरोहन्त्या त्वया शून्यहस्तया समागतम्। मदीयेन सह त्वदीयमपि छत्रं मया आनीतम्।

भार्या—हन्त! न खल्वावाभ्यामावयोश्छत्रे गृहान्नीते।

रावणः—लङ्कादाहे प्रज्वलितो वह्निः किं कुम्भनिकुम्भकुम्भकर्णादिभिः न निर्वापितः?

मन्त्री—राजन्! निर्जीवनास्ते कुम्भादयः।

## निकषोपलः

पण्डितक्षमाराव्-विरचितं पुस्तकत्रयम्-

१. स्वराज्यविजयः, प्राप्तिस्थानम्-श्रीमती लीलाराव् दयाल्, ३७ न्यू मरिन् लाइन्स, मुम्बापुरी १, मूल्यम् रू ६.

२. ग्रामज्योतिः, प्राप्तिस्थानम्-जे. सि. चेट्टर्जी, ३ भूपेन्द्र बोस् अवेन्यू, कल्कत्ता ४.

३. कथामुक्तावली, प्राप्तिस्थानम्—लीला राव् दयाल्, ३७ न्यू मरिन् लाइन्स, मुम्बापुरी १, मूल्यं रू ४. ८.

कतिपयेभ्यो वर्षेभ्यः पूर्वं दिवं गतापि क्षमा राव् महाभागा यशः-कायेनास्माकं मध्ये जीवति । संस्कृतायात्मनो जीवितमर्पयित्वाऽनया विरचितैः काव्यकुसुमैः स्थावरं यशः समपादि । पदलालित्यविषये प्रथायाः पात्रतां गता दृश्यते । अनया बहवो ग्रन्थाः प्राणायिषत । तेषु उपरिनिर्दिष्टं ग्रन्थत्रयमिदानीं निरूप्यते ॥

स्वराज्यविजयः आनुष्टुभेन च्छन्दसा घटितः विंशत्या अध्यायैः । अत्र महात्मगान्धिनेतृकं स्वराज्यसङ्ग्राममधिकृत्य बहवश्चारित्रिका विषयाः समनुवर्णिताः । सरसा एते विषया सहृदयैर्माननीया यथास्थितार्थकथनात् चरित्रकारैरादरणीयाश्च विलसन्ति ।

ग्रामज्योतिराख्यं काव्यं त्रिभिर्मयूखैरनुवर्णितं कथात्रयं ग्रामीणानां जनानां जागृतिं बोधयति । अत्राप्यनुष्टुप्च्छन्दः ।

कथामुक्तावली नाम गद्यमयं काव्यम् श्री के. एम्. पणिकर् महाभागस्य प्रस्तावनयाऽलङ्कृतम् । अत्रोपदेशपराः सरसाश्च पञ्चदश कथाः आधुनिकीं रीतिमनुसृत्य उपनिबद्धाः ।

स्वराज्यविजयः कथामुक्तावली च कवयित्र्याः निधनानन्तरं मातृस्नेहवशंवदया श्रीमत्या लीला राव् महाभागया प्रकाशितौ । ग्रामज्योति-र्नामके काव्ये कवयित्र्याः जीवितचरितं संक्षेपेण वर्णितं सहृदयानामवधान-

मर्हति । आधुनिकसंस्कृतसाहित्ये क्षमा राव् महाभागा प्रधानं स्थान-मधितिष्ठति ।

## उभयरूपकम्—प्रहसनम्

कर्ता—श्रीमहालिङ्गशास्त्री, साहित्यचन्द्रशाला, तिरुवालङ्गाडु, तञ्जापुरं जिल्ला । मूल्यं रू. ३.

प्रहसनानि संस्कृतभाषायामतीव विरलानि । अत आधुनिकप्रहसनानां विरचने कुतुकी कविरेष प्रसिद्धः प्रशंसामर्हति । सुविदितश्चायं संस्कृतप्रतिभा-रसिकानाम् ।

प्रकृतमिदमुभयरूपकं किमपि प्रहसनात्मकं रूपकम् । अत्र कुक्कुट-स्वामी, वज्रघोषः, छन्दोवृतिः गोनासः, वृद्धशाकरः, पिप्पली-इत्यादीनि पात्राणां नामानि हास्यरसानुगुणतया कविना कल्पितानि । अत्र हास्यरसस्या-स्पदीभूतः छागलो नाम कुक्कुटस्वामिनस्तनयः । स च मद्रनगरे उपार्जिताङ्ग्लविद्यासंस्कारः आधुनिकपरिष्कारप्रवाहे पतितो ग्रामवासिनां परिहासस्य पात्रतां गतः । तमधिकृत्य परिहासतन्निषेधावत्र निबद्धौ । वस्तुतः छागलं व्याजीकृत्य आधुनिकं परिष्कृतलोकमुपहसितुं प्रवृत्तमिदं रूपकमिति ज्ञायते । किञ्च श्वश्र्वा क्रियमाणे वधूदूषणेऽपि हास्यरसः कृतप्रवेशो दृश्यते । परं तु नायं हास्यरसः कविना आन्तं निरूढः । भाषासरणिरपि यद्यपि विद्वन्मोदावहा तथापि विद्यार्थिदृशा किञ्चिदिव कर्कशा विभाति । 'प्रच्यवति राज्यलक्ष्मीः' इत्यत्र 'प्रच्यवते' इति लेखनीयम् । एवंविधाः केचन शब्ददोषा विरलतयोपलभ्यन्ते ।

## विमलयतीन्द्रम्

डाक्टर् यतीन्द्रविमलचतुर्धुरीणेन विरचितम् । प्रकाशकः—डा. जे. बि. चौधुरी, प्राच्यवाणी, ३ फेडरेषन् स्ट्रीट्, कलकत्ता ९. मूल्यं रू. ४.

डा. यतीन्द्रविमलः प्रतिभावाचकानां नापरिचितः । प्रकाशितानि एत-दीयानि नाटकानि कानिचित् निकषोपले परीक्षितानि च । अयं

स्वकल्पितस्य नाटकसङ्घस्य नेता । तत्सङ्घद्वारा स्वीयानि नाटकानि अभिनाययति बहुषु स्थलेषु भारतदेशे ।

प्रकृतमिदं विमलयतीन्द्रं नाम नाटकं विशिष्टाद्वैतप्रतिष्ठापकस्य श्रीरामानुजाख्यया प्रथितस्य श्रीविमलयतीन्द्रस्य चरितमधिकृत्य प्रणीतम् । अत्र यद्यपि क्वचित् क्वचित् मतद्वेषः समुद्बोधितो दृश्यते तथाप्यपरिहार्यः सोऽर्थश्चरित्रलेखकानाम्, अन्यथा हि चरित्रे न्यूनतादोषः प्रसज्येत । अतीते डिसम्बर् मासि मद्रनगरे गौडीयमठाधिकारिभिः प्रवर्तितस्य निखिलभारतवर्षीय-वैष्णवसम्मेलनस्यावसरे तस्यैव नाटकसङ्घेनाभिनीतमिदं प्रेक्षकाणामुल्लासं जनयति स्म ।

नाटकेषु चतुर्धुरीणोऽयम् आधुनिकस्य कालस्योचितां कामपि नव्यां सरणिमाश्रयति । नाटकेऽस्मिन् सुगमा भाषारीतिः ।

## देवीस्तोत्रमाला

गोमतीदासेन इलत्तूर् रामस्वामिशास्त्रिणा विरचिता । श्री जि. हरिहर-शास्त्रिणा प्रसाधिता च । प्रकाशकः—श्री एस् रामस्वामि अय्यर्, ४ फस्ट् स्ट्रीट्, डा. तिरुमूर्तिनगर्, मद्रास् ३८.

स्तोत्रमालायामस्याम् अश्वत्थगणनाथाष्टकम्, धर्मसंवर्धिनीस्तोत्रम्, आर्याष्टोत्तरशतकम्, आर्याशतकम्, त्रिपुरसुन्दरीगीतम्, ललितागीतम्—इति षट्स्तोत्ररत्नानि सङ्ग्रथितानि ।

अस्याः कर्ता दिवं गतः श्रीमान् इलत्तूर् रामस्वामिशास्त्रिमहाभागः अतीतायां शताब्द्यामनन्तशयनराजधान्यामास्थानविद्वत्पदं तत्रत्यराजकुटुम्बस्य आचार्यकपदं चालमकार्षीत् । अदसीयानि स्तोत्राणि निखिलैः काव्यगुणैः विविधैः शब्दार्थालङ्कारैश्च विराजमानानि कमपि शोभातिशयं पुष्णन्ति ।

अत्र प्रतिश्लोकम् अनुभूयमानाः चमत्कारातिशयाः स्तोत्रकर्तुरस्य महाकवित्वं व्यञ्जयन्ति । कविनाऽनेन न केवलं स्तोत्राण्येव किन्तु काव्यं

नाटकमलङ्कारशास्त्रं व्याकरणं वेदान्तः इत्यादिषु संस्कृतसाहित्यस्य नानाशाखासु रसमया ग्रन्थाः प्रणीताः । किन्तु ते न प्रकाशतां प्रापिताः । तानेकशः प्रकाशयिष्यति तत्पौत्रः श्रीमान् एस्. रामस्वामि अय्यर् महाभाग इति दृढं प्रतीमः ।

श्रीमतः जि. हरिहरशास्त्रिमहाशयस्य आङ्ग्लभाषामयी द्रमिलभाषामयी च प्रस्तावना श्री इलत्तूर् रामस्वामिशास्त्रिणो जीवितचरितं संक्षिप्य वर्णयति । देवनागरीलिपिमजानतां सौकर्याय सर्वे श्लोकाः द्रमिलाक्षरैरपि मुद्रिताः ।

## स्तोत्ररत्नत्रयम्

श्रीकाव्यकण्ठगणपतिमुनिना कृतम् । प्रकाशकः—देवेन्द्रः सुब्रह्मण्यः विश्वामित्रः, शिरसि, उत्तरकन्नड, मैसूर् प्रदेशः ।

श्रीमङ्गलगौरीस्तोत्रम्, श्रीकृष्णाक्षरमाला, श्रीतारकगमनामस्तुतिः—इति स्तोत्ररत्नत्रयमस्मिन् लघुनि पुस्तके प्रकाशितम् । अस्य कर्ता दिवं गतोऽपि यशःकायेनेह वर्तमानः प्रतिभावाचकानां नापरिचितः । अस्य स्तोत्रेषु सहृदयानन्दजनकं किमपि रामणीयकं स्फुरति । अस्य स्तोत्रत्रयस्य पठनकाले हृदयं विकसितमिव भवति । उमासहस्रादयोऽस्य ग्रन्थाः प्रतिभायाः पूर्वसञ्चिकासु निरूपिताः ।

## भारतसन्देशः

रचयिता—शिवप्रसाद भारद्वाजः, विश्वेश्वरानन्दवैदिकशोधसंस्थापनम्, साध्वाश्रमः, होशियार्पुरम् । प्राप्तिस्थानम्—विश्वेश्वरानन्द बुक् एजन्सी, साधु आश्रमः, होशियार्पुरम् ; सूर्यप्रकाशन्, नई सड़क्, दिल्ली ।

अभिनवमिदं सन्देशकाव्यं पञ्चनदप्रान्तीयराज्यपालानां श्रीनरहरिविष्णुगाडगीलमहोदयानां प्रस्तावनया, महामहोपाध्यायविरुदभाजां श्रीगिरिधरशर्मचतुर्वेदानामामुखेन चालङ्कृतं चकास्ति ।

काव्यमिदं मन्दाक्रान्ताच्छन्दसा सन्दब्धं पूर्वोत्तरभागत्वेन विभक्तं च कालिदासीयं मेघसन्देशमनुहरति । परन्तु नात्र मेघादिद्वारा सन्देशः प्रेष्यते । किन्तु अणुगुलिकासम्पातोन्मुखं लोकं प्रति भारतवर्षीयो यः शान्तिरूपः सन्देशः सोऽत्र प्राधान्येन विवक्षितोऽर्थः। तदर्थं रमणीयं किमपि कथावस्तु कविना कल्पितम् । तथा हि-वैदेशिकानां राष्ट्रप्रतिनिधीनां सङ्घः कश्चित् विश्वशान्तिस्थापनपरः भारतवर्षमभ्यागमत् । स च भारतवर्षं परितः कृतसञ्चारः प्रधाननगराणि क्षेत्राणि च सन्ददर्श । आकुमारि आ च काश्मीरेभ्यः तैः सन्दृष्टानि क्षेत्राणि नगराणि च काव्यस्यास्य पूर्वभागे याथातथ्येन वर्णितानि । उत्तरभागे तेन सङ्घेन देहलीपुरगमनं, तत्र श्रीराजेन्द्रप्रसाद-जवाहरलाल-नेहरुमहाभागयोः सन्दर्शनं, तत्र राजसभायां राष्ट्रपतेः मुखात् भारतीयसन्देशग्रहणं चेत्येते विषयाः सविशेषं प्रतिपादिताः । इत्थं रमणीयकथावस्तुकल्पने कवेः शक्तिः प्रकटीभवति । काव्येऽस्मिन् पूर्वार्धे १५३ श्लोकाः उत्तरार्धे १२९ श्लोकाश्च सन्ति । तत्तन्नगरक्षेत्रादिवर्णनरीतिरत्र चारुतां धत्ते । तत्रापि काश्मीराणां वर्णनमतीव हृदयङ्गमम् ।

काव्योत्कर्षपरिपन्थिनः केचन दोषाः समुपलभ्यन्ते । विशेषतश्च दृश्यमाना यतिभङ्गदोषाः काव्यस्य शोभामपघ्नन्ति । तथा हि—१. प्राचीसीमन्तमुखगलितोदारशोणम् । २. साकारं भारतवसुमतीगौरवं राष्ट्रपालः । इत्यादौ छन्दःशास्त्रविरोधःस्पष्ट एव । 'उपन्यस्तुम्' इत्यपशब्दः । एवमादीनां दोषाणामपनयने प्रयत्न आधेयो द्वितीयावृत्तिमुद्रणावसरे ।

### वकुलाभरणम्

महीधरवेङ्कटरामशास्त्री, वैयाकरणः, साहित्यविद्याप्रवीण', आयुर्वेदविशारदश्च, राजमहेन्द्रम्, आन्ध्रप्रदेशः । मूल्यं रू. १.

पञ्चषष्टिश्लोकात्मकमिदं खण्डकाव्यमुपदेशपरां कामपि कथां प्रस्तौति । तथा हि—श्रीपतिर्नाम कश्चित् कुमारो मल्लिकाभिधानां कुमारीं पर्यणैषीत् । तस्यामन्तर्वत्न्यां जातायां श्रीपतिस्तां परित्यज्य कस्याञ्चन नर्तक्यामनुरक्तो

बभूव । मल्लिका च स्वजीवितादुद्विजमाना नद्यां निपत्य मर्तुकामा पावनीं नदीमयासीत् । तत्रात्मवधोद्युक्ता सा प्रवासादुपावृत्ताभ्यां वृद्धदम्पतिभ्यां रक्षिता स्वगृहं च नीता । सा तद्गृहे सुतमसूत । तस्य नाम वकुलापीडः । बालोऽयं षोडशवर्षदेशीयः केनापि योधेन सह कलहायमानस्तमजैषीत् । तस्य शौर्येण प्रीतस्तद्देशीयो राजा तं दण्डनायकपदे न्ययुङ्क्त । अत्रान्तरे नर्तक्या गलहस्तितः श्रीपतिः स्वकृत्यमनुशोचन् मल्लिकामन्वियेष । विफलोद्यमः स आत्मनो वधाय गिरिशृङ्गमारुक्षत् । चारास्तं गृहीत्वा राजान्तिकमनैषुः । राज्ञा पृष्टः स आत्मनो वृत्तान्तं न्यवेदयत् । राजा तं वकुलापीडमबोधयत् । स च मातरम् । सा पश्चात्तापभाजं स्वभर्तारमादृत्य भूयस्तस्य सहधर्मचारिणी बभूव ।

कथैषा कविना सरसं वर्णिता । किन्तु काव्यस्य शोभामपकर्षन्तो यतिभङ्गाः परिहर्तव्या आसन् कविना । भाषासरणिः अदीर्घसमासा, सुललितपदबन्धा च घटना ।

## संस्कृतरत्नाकरः—मालवीयशती-विशेषाङ्कः

प्रकाशकः डा. मण्डनमिश्रशास्त्री, पिहेच्. डि., अखिलभारतीय-संस्कृतसाहित्यसम्मेलनमहामन्त्री, कमलानगरम्, देहली । वार्षिकं मूल्यं रू ५. एकाङ्कस्य ५० न. पै.

रत्नाकरनाम्ना प्रसिद्धायाः संस्कृतमासपत्रिकायाः विशेषाङ्केऽस्मिन् दिवं गतं स्वराज्यसङ्ग्रामशूरं धर्मात्मानं काश्यां हिन्दुविश्वविद्यालयप्रतिष्ठापकं मदनमोहनमालवीयमधिकृत्य महीयसामनेकेषां विदुषां लेखाः प्रकाशिताः । सर्वे लेखाः सुधियां लेखनीभ्यो निःसृताः परां शोभां भजन्तः श्रीमतां मालवीयानां जीवनचरितं महत्त्वं च बोधयन्ति । अत्र केचन लेखा हिन्दीभाषयोपनिबद्धाः । विशेषाङ्कस्यास्य मुखपत्रं मालवीयस्य प्रतिच्छन्देनालङ्कृतम् । विशेषाङ्कस्य प्रकाशयिता मण्डनमिश्रशास्त्री हार्दं धन्यवादमर्हति । मालवीयशतीविशेषाङ्क इत्यत्र 'शती' शब्दस्य निष्पत्तिः क्लेशावहा दृश्यते ।

## श्रद्धाञ्जलिः

सम्पादकः—डा. हरिदत्तपालीवालः निर्भयः । प्राप्तिस्थानम्— रवि-दत्तशर्मा 'उपमन्यु', शारदासाधनमन्दिर्, जटवारा, कायम्गञ्ज्, उ. प्र. मूल्यं १२. न. पै. ।

इदं महापुरुषस्मरणात्मकं किमपि गीतकाव्यम् । अत्र विशेषतः चन्द्रवती, क्षमाराव्, गोस्वामितुलसीदासः, मालवीयः, कवीन्द्रो रवीन्द्रः, श्रीशङ्कराचार्यः, भक्तिसिंहः इत्यादयो गीतैः स्तूयन्ते । कमलादेव्या विरचिता काचित् गीतिकाप्यत्र प्रकाशिता वर्तते । रमणीयमिदं गीतकाव्यम् । केचिन्मुद्रणभ्रंशाः काव्यस्यास्य द्वितीयावृत्तौ शोधनीयाः ॥

## बालसंस्कृतम्

वैद्यश्रीरामस्वरूपशास्त्री, आयुर्वेदाचार्यः, घाटकोपर आगरा रोड्, बम्बाई ७७. वार्षिकं शुल्कं रू. ५. ।

संस्कृतस्य प्रचारार्थं मासिकरूपेण हिन्दीभाषाविवरणसहिताः पाठावल्यः प्रकाश्यन्ते वैद्यश्रीरामस्वरूपशास्त्रिणा । प्रकृतो बालसंस्कृतं नाम पाठा-वलीग्रन्थः संस्कृतशिक्षणमारिप्सूनां छात्राणामत्यन्तमुपयुक्तः । अत्र सोदाहरणं सप्त विभक्तीः प्रतिपादयन्तः सप्त पाठाः संयोजिताः । एकैकस्यापि पाठस्योपक्रमे तत्तत्कारकसंज्ञाविधायकानि पाणिनीयानि सूत्राणि संयोजितानि च हिन्दी-भाषया व्याख्यातानि च । संस्कृतानुवादार्थं हिन्दीभाषावाक्यचयाश्च दत्ताः । अयं ग्रन्थः राजस्थानीयविद्याविभागेन पाठ्यपुस्तकतया अङ्गीकृतः । श्रीराम-स्वरूपशास्त्रिणा क्रियमाणा गैर्वाणीसेवा संस्कृताभिमानिनां हृदयमुल्लासयति ॥

## नरकासुरविजयव्यायोगः

धर्मसूरिविरचितः संस्कृत-अकादमी, ओस्मानिया यूनिवर्सिटि, हैदराबाद्, आन्ध्रप्रदेशः । रू. ३.

१५-शतके आन्ध्रप्रदेशे सञ्जातो धर्मभट्टो नाम प्रसिद्धो विद्वान्, साहित्यवेदान्तादिषु यद्विरचिताः कृतयः आन्ध्रप्रदेशे सुविदिताः लब्ध-

प्रचाराश्च । तत्कृतिषु अन्यतमोऽयं रूपकभेदो व्यायोगः नरकासुरविजयो नाम, यश्चिरात्तेलुगुलिप्यामेव उपलब्धः अद्य नूतनमातृकापरिशीलनपुरस्सरं निखिल-भारतविद्वदुपयोगितया देवनागरलिप्यां प्रकाशितः । धर्मसूरिणा साहित्य-रत्नाकर इति अलङ्कारग्रन्थो विरचितः । सोऽपि नचिरादेवमेव देवनागर्यां प्रकटीभविष्यतीति विश्वसिमः । तत्रैव अलङ्कारग्रन्थे स्वोपज्ञत्वेन तेनोदाहृता अन्याः कृतयः—कंसवधो नाम नाटकम्, सूर्यशतकम्, कृष्णस्तुतिः इति द्वे स्तुती, हंससन्देशो नाम खण्डकाव्यम्, बालभागवतं नाम काव्यं च । एष एव गृहीताश्रमः गोविन्दानन्दरामानन्दोभयनामा शाङ्करभाष्यस्य रत्नप्रभानाम्नीं व्याख्यां कृतवानित्यपि ज्ञायते । प्रौढिमनोहरा कवेः शैली । मुद्रणेऽनवधानात् बहवः प्रमादा आपतिताः । २८-तमे पद्ये 'विगलितो पल्लवम्' इति दुःसन्धिः । एतादृशा दोषा द्वितीयावृत्तौ शोधनीयाः ॥

## संस्कृतकविजीवितम् (प्रथमो भागः)

पण्डित-मल्लादि-सूर्यनारायण-शास्त्रिणा संकलितम् । संस्कृत-अकादमी, ओस्मानिया यूनिवर्सिटी, हैदराबाद्, आ. प्र. । रू. ३. ५०.

पण्डित म. सूर्यनारायण-शास्त्रिणा पूर्वमान्ध्रभाषया संस्कृतकविजीवित-चरित्रं रचितम्, आन्ध्र-विश्वविद्यालयेन च तत्प्रकटितम् । तेनैव विद्याप्रवीणादिपरीक्षाविद्यार्थिनामाङ्ग्लानभिज्ञानां कृते संस्कृतभाषया च संस्कृतकविवृत्तान्तसङ्ग्रहः कृतः । तस्यायमाद्यो भागोऽद्य प्रकाशितः । २०० कवीनां वृत्तान्तः शास्त्रिणा संकलितः; अस्मिन् प्रथमभागे ६७ कवीनां वर्णनं दत्तम् । अत्र वाल्मीकिकालिदासप्रभृतयोऽपि दृश्यन्ते, दृश्यन्ते च कवयः येषां विषये एक एव श्लोक उपलभ्यते । यद्यपि प्रायः आङ्ग्लभाषया प्रकाशितेभ्यः प्रसिद्धेभ्यः संस्कृतसाहित्येतिहासग्रन्थेभ्य उद्धृत एव सर्वोऽयं विषयः, तथापि संस्कृतमात्राभिज्ञानां छात्राणामियं कृतिरुपयोगाय भवेत् । सरलया शैल्या रचितोऽयं ग्रन्थः ॥

## क्षेमेन्द्रलघुकाव्यसङ्ग्रहः

संस्कृत-अकादमी, ओस्मानिया यूनिवर्सिटी, हैदराबाद्, आ. प्र. रू.। १५.

क्रै. एकादशशतके काश्मीरेषु प्रथित 'आसीत् क्षेमेन्द्रो नाम कविः, यो भारतमञ्जरीसंग्रथनेन व्यासदासबिरुदमुपलभ्य पप्रथे, यः साहित्ये अभिनवगुप्ताचार्याणां शिष्यो भूत्वा औचित्यमधिकृत्य विचारचर्चां कामपि प्रचारयामास, यश्च बृहत्कथा-रामायण-बौद्धावदानकथाः सञ्जग्राह, स्वयं प्रणिनाय च बहून् काव्यनाटकदीन् ग्रन्थान् , तथैव लघूंश्च नाना-विषयकाननेकान् ।

क्षेमेन्द्रस्य लघुग्रन्थाः, उपदेशपरा वा परिहासपरा वा प्रायः सर्वे हृदयाकर्षका एव । सर्वेऽपि क्षेमेन्द्रग्रन्था नापलब्धाः । किन्तु ये उपलब्धाः ते काव्यमालायां तद्गुच्छकेषु च बहोः कालात्पूर्वं मुद्रिताः, नाद्य सुलभाः । अस्मिन् संपुटे उपलब्धास्सर्वे लघुग्रन्थाः एकत्र संयोज्य दत्ताः क्षेमन्द्रसाहित्य-रसिकानामतीव प्रमोदाय स्युः । पूर्वमेतैरेव ओस्मनिया-संस्कृत-अकादमी-निर्वाहकैः पण्डितराजजगन्नाथस्य लघुकृतय एवमेकस्मिन् संपुटे दत्ताः । सर्वथा व्यवसायोऽयमतीव प्रशंसार्हः ।

## वात्सल्यरसायनम्

कर्ता—श्री. भा. वर्णेकरः, नागपुरविश्वविद्यालये संस्कृताध्यापकः । प्राप्तिस्थानम् श्री. भा. वर्णेकरः, वागीश्वरीनिकेतनम , धान्तोली, नागपुरम् ।

रसायननामकमिदं काव्यं श्रीवर्णेकरस्य शेमुषीं वैदुषीं च बोधयति । अत्र सहस्रनामा, बालजगद्गुरुः, गोरसतस्करः, बालयोगी, धेनुप्रियः जातिस्मरः इत्यादयः शब्दाः श्रीकृष्णस्य विशेषणतया प्रयुक्ताः काव्यस्य शोभामावहन्ति । श्रीकृष्णमधिकृत्य कृतमिदं काव्यं प्रतिश्लोकं चमत्कारं पुष्णाति ।

## १. श्रीसुन्दररामायणम् (रू. ३) २. आचार्यस्रग्धरामालास्तुतिः ३. श्री-दुर्गास्तोत्रम् ४. श्रीमायास्तोत्रम् ५. श्रीशिवपराक्रमः (रू. १)

कर्ता—श्री. एस्. सुन्दरेशशास्त्री, नेमत्तान्पट्टि, रामनाथपुरं जिल्ला, मद्रास् ।

अस्य पुस्तकपञ्चकस्ये कर्ता श्रीसुन्दरेशशास्त्रिमहाभागः आशुकविः शास्त्राभिज्ञश्च । तत्र सुन्दररामायणं श्रीकाञ्चीकामकोटिपीठाधीशानां श्रीजगद्गुरुणां श्रीमुखेण अलङ्कृतं रामायणे सप्तसु काण्डेषु वर्णितान् कथांशान् सप्तभिः काण्डैः यथाक्रमं संक्षिप्य अनुवर्णयति । शार्दूल-विक्रीडितं वृत्तम् । निरर्गला निरवद्या च शैली अदीर्घसमासा च । सङ्ग्रहेण रामायणं बुभुत्सूनामत्यन्तोपयुक्तोऽयं ग्रन्थः । संस्कृतभाषानभिज्ञानामुपकाराय प्रतिश्लोकमधस्तात् द्रमिलभाषयाऽर्थो वर्णितः ।

आचार्यस्रग्धरामालास्तुतिः श्रीशङ्करभगवत्पादाचार्यानधिकृत्य कृतं स्तोत्रम् । अत्र स्रग्धरा वृत्तमिति ग्रन्थनाम्नैव ज्ञायते । अष्टोत्तरशतेन श्लोकैर्घटितोऽयं ग्रन्थः श्रीशङ्करभगवत्पादाचार्याणां महिमानं चरित्रांशं च बोधयन् भक्त्यतिशयं जनयति ।

श्रीदुर्गास्तोत्रं श्रीमायास्तोत्रं च लघीयः स्तोत्रद्वयम् । तत्र प्रथमे १७ श्लोकाः द्वितीये १२ श्लोकाश्च । उभयमपि द्रमिलाक्षरैः मुद्रितम् । अनेन शास्त्रिमहाभागेन श्रीमद्भागवतं पञ्चमस्कन्धपर्यन्तं श्लोकैरनूदितमिति, अन्ये च कविताप्रबन्धाः कृता इति च ज्ञायते । श्रीशास्त्रिमहाभागस्य कविता श्लाघनीयगुणा विराजते ।

शिवपराक्रमो नाम द्रमिडभाषया बहोः कालात् पूर्वं प्रकाशितोऽद्य दुर्लभश्च ग्रन्थः, यत्र आगमप्रमाणोदाहरणपूर्वं सचित्रं शिवस्य मूर्तिभेदा अवतारभेदाश्च वर्णिताः । सोऽयं न केवलं शिवभक्तानां शिल्पिनां च, किन्तु देवालयशिल्पविमर्शप्रवृत्तानामाधुनिकविदुषां च अतीवोपयोगी निबन्धः । श्रीमता सुन्दरेशशास्त्रिणा स्वीयेऽस्मिन् निबन्धे द्रमिडशिवपराक्रमोदितः सर्वः शिवलीलाविभूतिविषयः प्रतिमूर्ति स्रग्धराश्लोकेनैकेनेति क्रमशः संस्कृत-भाषया द्रमिडानुवादसहितः सङ्गृहीतः । श्रीमतः शास्त्रिणः कृतिषु एष ग्रन्थः विशिष्य प्रशंसार्हः ॥

## मूलं संस्कृतम्

कर्ता–पण्डितश्यामकुमार आचार्यः, सं. १५/९४ सिविल् लायिन्स्, कानपुरम्, उत्तरप्रदेशः। मूल्यं रू. ४.

मूल संस्कृतं नाम ग्रन्थः लोकसंस्कृतग्रन्थमालाया द्वितीयं पुष्पम्। संस्कृतभाषां व्यवहारपदवीमारोपयितुकामेन ग्रन्थकृताऽत्र बहवः संस्कारविशेषाः सूचिताः। तद्विषये केषाञ्चन विदुषामभिप्रायाश्च प्रकाशिताः। तत्रायं सङ्क्षेपः—

१. सन्धिनियमाः सर्वे परित्याज्याः।

२. सर्वे धातवः परस्मैपदिनः कार्याः।

३. लट्, लङ्, लोट्, लृट्—एते चत्वारो लकाराः परं प्रयोक्तव्याः, इतरे हातव्याः।

४. द्विवचनं दूरीकरणीयम्, तस्य स्थाने बहुवचनं प्रयोक्तव्यम्।

५. सङ्ख्याशब्दा अव्ययीकर्तव्याः।

एते चान्ये च बहवः संस्कारमार्गा ग्रन्थकारेण प्रदिष्टाः। परन्तु नैतावतापि शाम्येत् क्लेशः। विविधानि अजन्तहलन्तरूपाणि क्लेशं जनयन्ति। विसर्गाः समासान्ताश्च संस्कृतभाषायाः व्यावहारिकत्वेनोपयोगे परिपन्थिनः। न खलु विसर्गान् समासान्तान् वा रथ्यापुरुषाः प्रयोक्तुं शक्ष्यन्ति। अतस्तेऽपि परित्यक्तव्याः स्युः। किं बहुना! एवंविधैः संस्कारविशेषैः संस्क्रियमाणा संस्कृतभाषा व्यवहारार्थमुपादीयमानैः भाषान्तरीयैः शब्दैः सम्मिलिता हिन्दीभाषासोदर्या काचिदन्या भाषा भविष्यति॥

किञ्च ग्रन्थकारोक्तदिशा वैरूप्यं प्रापितायाम् संस्कृतभाषायां लोकाभिनन्दितानि कालिदासादिमहाकवीनां काव्यानि रामायणमहाभारतादीनि च निर्जीवानि दुर्बोधानि च भविष्यन्ति। श्लोकानां लेखनरीतिरप्यन्यथाकरणीयेत्याह ग्रन्थकारः। तथा हि—

'न असतः विद्यते भावः न अभावः विद्यते सतः।
उभयोः अपि दृष्टः अन्तः तु अनयोः तत्त्वदर्शिभिः ॥'

एवंरूपेण लेखने श्लोकस्य श्लोकत्वहानिः स्यात्। गद्यपद्ययोरभेदोऽपि प्रसज्येत ॥

संस्कृतभाषाविषये प्रगतिमिच्छन्तः केचित् 'हैस्कूलेषु, कोलेजेषु, पोस्टफीसेषु, गवर्नराः, असेम्बलिः, मेम्बरः' इत्यादीन् शब्दान् प्रयुञ्जते। सम्प्रति विभिन्नप्रान्तीयाः शासकाः संस्कृतशब्दैरेव पारिभाषिकान् शब्दान् निर्मिमते, प्रान्तीयभाषासु चोपयुञ्जते। एवं स्थिते वस्तुनि संस्कृतभाषायां विदेशीयाः शब्दाः किमित्युपादेयाः ?

संस्कृतभाषायामनन्तः शब्दराशिः। तमेव तस्याः पतनहेतुं मन्यमानः श्रीमान् श्यामकुमारः लक्षशः कोटिशश्च संस्कृतभाषातः शब्दान् प्रच्यावयितुमीहते।

'सहसा विदधीत न क्रियाम्' इत्येषा भारविसूक्तिरपि स्मर्तव्या। यद्यपि संस्कृतभाषा प्रचारणीया, तथापि प्रचारोत्साहेन तस्याः स्वरूपलोपनेन नास्माभिराश्रयाशैर्भवितव्यम्। अस्मिन् ग्रन्थे पण्डितवरेणानेन बहवः संस्कृतव्याकरणसम्बन्धिनः, आधुनिकभाषाशास्त्रीयाः, भारतीयेतिहासगताश्च विषयविशेषाः प्रतिपादिताः। वर्षपूगप्रबन्धप्रवृत्तोऽयं समुद्यमो ग्रन्थकर्तुः यद्यपि श्लाघनीयः, तथापि ग्रन्थकृता सूचितेषु उपायेषु विदुषां भूयसी विमतिर्भविष्यति।

## OUR CONTRIBUTORS

अस्यां सञ्चिकायां दृश्यमाना नूतना लेखकाः—

Narayana Kavi, Kumbakonam. C/o. Sri K. V. Krishnamurthi, Sanskrit Dictionary Dept., Deccan College, Poona 6. 84 years old; author of several devotional poems, Rāmakarṇāmrta (printed in *Sārasvatī Suṣamā*, Banaras 1957), Gopikāgīta etc.

नारायणकविः, कुम्भकोणवास्तव्यः, चतुरशीतिवर्षदेशीयः, बहूनां स्तोत्रप्रबन्धानां प्रणेता । अस्य कृतिषु 'रामकर्णामृतम्' वाराणसीतः प्रकाश्यमानायां सारस्वतसुषमायां प्रकाशितम् । कार्तिकेयकर्णामृतम्, गोपिकागीतम् इत्यादयोऽस्य कृतयः नाद्यावधि मुद्रिताः ॥

Manoranjana Sastri, Principal, Sanskrit College, Nalbari, Assam.

मनोरञ्जनशास्त्री, अध्यक्षः, संस्कृतपाठशाला, नल्बरी, आसाम् ।

Asok N. Akalujrar, Jt. Fditor, The Sarada, 1223, Sukrawar, Poona 2.

अशोक अकलूजकरः, शारदापत्रिकाया उपसम्पादकः, १२२३, शुक्रवारपेट्, पूर्णे-२

Devaki Menon, (Retd. Head of the Sanskrit Dept., Q. M. College, Madras), Warriam Road, Ernakulam, Kerala.

देवकी मेनन्, मद्रपुरी क्वि. एम. महिलाकलाशालायां प्रधान-संस्कृताध्यापिकापदात् विश्रान्ता ; वारियम् रोड्, एर्नाकुलम्, केरलः ।

Sri Jalesvar, Aditi Office, Aurobindo Asram, Pondicherry-2. Has translated into Sanskrit Writings of Sri Aurobindo and Mother.

श्रीजलेश्वरः, 'अदिति'कार्यालयः, श्री·अरविन्दाश्रमः, पाण्डिच्चेरि, २ । अनेन श्रीमतो अरविन्दस्य, श्रीमातुश्च निबन्धा बहवः संस्कृतेऽनूदिताः ।

चतुर्दशाध्यायात्मकं सम्पूर्णमपि च मूल-निघण्टु-सहितम्

# निरुक्तम्

विद्यावागीशेन देवशर्मशास्त्रिणा
श्लोकेषूपनिबद्धः पूर्वाध्यायत्रयात्मको निघण्टुश्च । येनाध्येतारः सुखं संस्मरेयुः ।
विशिष्ट-विस्तृत-भूमिका, विषयानुक्रमणिका, आचार्य-सूची, मन्त्र-सूची,
पद-सूची, अशुद्धशोधन-तालिका-सम्वलितम् ।

केचिद् विद्वांसः त्रयोदश-चतुर्दशाध्यायौ परिशिष्टरूपेण मन्यन्ते
परमस्माभिस्तु तौ मूलवदेव व्याख्यातौ ।

महामहोपाध्यायेन श्रीछज्जूरामशास्त्रिणा विद्यासागरेण तथा
विद्यावागीशेन पं० देवशर्म-शास्त्रिणा
सङ्क्षेपतया दुर्गाचार्य-भाष्यस्य संस्कृतटीकयालंकृतम् ।

अथ च

ज्वालापुर-महाविद्यालयाध्यापकेन आचार्येण श्रीभगीरथशास्त्रिणा तथा
विद्यावागीशेन पं० देवशर्मशास्त्रिणा कृतया सुबोधिन्याख्यया
हिन्दी-व्याख्ययोपोद्बलितम् ।

एतच्च विलक्षणं, मनोहारि, दिव्यं, राजसंस्करणम् सुचिक्कणपत्रेषु
मुद्रितम्—आकर्षकेण वाससा पिनद्धम्, स्वर्णाक्षरशीर्षक-संयुतं च ।
मूल्यम् ४० रूप्यकाणि

साधारणं संस्करणम् पृष्ठसङ्ख्या ७०० न्यूनितं मूल्यं २५ रूप्यकाणि

प्रकाशक:
मेहरचन्द्र लक्ष्मणदास
अध्यक्ष:, संस्कृतपुस्तकालय:,
प्रकाशक:, तथा पुस्तक-विक्रेता
२७३६ कूचा चेलां, दरियागंज,
दिल्ली-६